## मोरोपंत कृत.

श्रीरामं सुंदिरश्यामं वंदेऽहं देवनायकं ।
सदा वदान्यप्रवरं प्रणतेप्सितदायकं ॥
राकापतिमुखीं देवीं वंदे सीतां महासतीं ।
यस्याः सद्व्रतसामर्थ्याच्छमिता अमिता द्विषः
महामतीन्सदा वंदे लक्ष्मणादीन् रघूद्वहान् ।
येषां पुमर्थाः स्वमेऽपि परमान्नरमाधवात् ॥ ३ ॥
जगद्गुरुगुरुं वंदे वसिष्ठं तपसांनिधिं ।
द्विजराज इति प्राहुर्यं सर्वे ब्राह्मणाः सुराः ॥ ४ ॥
यस्तपस्वीश्वरः साक्षान्महादेव इव प्रभुः ।
वंदे तं गाधिजं तेजोनिधिना निधिना समं ॥ ५ ॥
राशिं सुतपसां शुद्धज्ञानदानविशारदं ।
नारदं सन्मुनिं वंदे भवाब्धेः परपारदं ॥ ६ ॥
मनोज्ञं रामचरितं येन गीतं सविस्तरं ।
वाल्मीकिं तमहं वंदे मंदेष्टशतसाधकं ॥ ७ ॥
जगत्प्राणसुतं वंदे हनूमंतं महौजसं ।
यः श्रीरामकथासिंधौ चेतसा वेर्तसायते ॥ ८ ॥
यशस्विप्रवरं वंदे सुग्रीवं वानरेश्वरं ।
संप्राप्तौ हेतुरार्याया भार्याया राघवस्य यः ॥ ९ ॥
जलधौ येन रचितः सेतुर्हेतुर्जयश्रियः ।
तं नलं वानरं वंदे यं देवा धन्यमूचिरे ॥ १० ॥
यत्नं ये चक्रुरनिशं जांबवत्प्रमुखा भृशं ।
तानृक्षानंगदादींश्च वंदे रामानुगान् कपीन् ॥ ११ ॥
राजश्रेष्ठं दशरथं कौशल्याद्याश्च तत्प्रियाः ।
जनकं च महाराजं वंदे श्रीरामवंदिनं ॥ १२ ॥
महीसुरान् वामदेवप्रमुखानृत्विजः प्रभोः ।
श्रीकेशवं श्रीगणेशं वंदे विद्यागुरुं हरिं ॥ १३ ॥

---

१ मेघ. २ पूर्णिमेची रात्र. ३ पातिव्रत्य. ४ धर्मार्थकाममोक्ष. ५ विश्वामित्र. ६ कुशल. मूर्ख. ८नम्र होतो. ९ कारण. १० आस्वल.

श्रीरामचरितं पुण्यं संक्षेपान्नारदो मुनिः ।
पृच्छते प्रथमं प्राह प्रेम्णा वाल्मीकये सते ॥ १४ ॥
राशिरत्यच्छतपसां वाल्मीकिर्ब्रह्मणो वरात् ।
चक्रे रामायणं नाम महाकाव्यं महाकविः ॥ १५ ॥
महाकाव्यं पठन्नस्मात्कःश्रावयेत्कः सभास्विदं ।
इति चिंतयतस्तस्य पादग्रहणमादतौ ॥ १६ ॥
जनकस्य सुतापुत्रौ कृतवन्तौ गुणार्णवौ ।
शिष्यौ कुशलवौ यो तत्ताभ्यामग्राहयत्प्रभुः ॥ १७ ॥
यदा वचो विधेय तत्कृत्वा ताभ्यां मुनिव्रजे ।
गीतं प्रीतं तयोस्तेषां तदा चित्तं तपस्विनां ॥ १८ ॥
राकापतिः स्वामृतेन चकोरानिव तानृषीन् ।
अर्थेन पौलस्त्यवधप्रबंधः समतर्पयत् ॥ १९ ॥
मधुरेणादिकाव्यस्य स्वच्छेन मुनयोऽखिलाः ।
रसेनांबुमुचोऽत्यर्थं चातका इव तर्पिताः ॥ २० ॥
जगन्मनोहरं धीरौ तौ वीणास्वरमिश्रितं ।
चतुर्मुखवरोद्भूतं महाकाव्यमगायताम् ॥ २१ ॥
यच्छ्रुत्वा मुनयस्ताभ्यां ते प्रेमाश्रुपरिप्लुताः ।
वल्काजिनवृषीदंडकमंडलुकुशान् ददुः ॥ २२ ॥
जनान्कथयतः श्रुत्वा गंधर्वाविव गायनौ ।
नीतौ सदसि रामेण साकेते तौ कुमारकौ ॥ २३ ॥
यथोपदेशं वाल्मीकेः कलि सुकंतिनां वरौ ।
आदितः कृतिनौ राम श्रावयामासतुर्मुदा ॥ २४ ॥
रावणारिर्वसिष्ठाद्यैर्ब्राह्मणैर्भ्रातृभिः प्रियैः ।
सचिवैः सह शुश्राव स्व माहात्म्यं सभां गतः ॥२५॥
महर्षिणा स्वयं गीतमिति माहात्म्यमात्मनः ।
अपूर्वमिव लोकेशः कृतवानित्यमादरात् ॥ २६ ॥

---

१ शुनं. २ चंद्र. ३ रावण. ४ अत्यंत. ५ दर्भासन ६ गाणारे.

श्रीमान् दशरथ सूर्यवंश आसीन्नृपोत्तम ।
समस्तसत्पालनतो य साक्षाद्विष्णुना सम ॥ २७

राजधान्यामयोध्यायामुवास नयवित्कवि ।
रवि स्वशत्रुतमस पुण्यात्माऽनुपमच्छने ॥ २८ ॥

महिषी तस्य कौशल्या कैकेयी दयिता भृश ।
सुमित्रा विनयोपेता पत्नी यत्प्रेम नो कृश ॥ २९ ॥

जन्म स्वमफल मेने सोऽनैपत्योऽतिचिंतया ।
नाप्यनदाढ्य गुर्वी योऽपुत्रस्तस्य कि तया ॥ ३० ।

यष्टु तुरगमेधेन सतत्वर्थं गुरू मुनि ।
पृष्ट्वा नृपो मनश्चक्रे शनैष्टकदुदारधी ॥ ३१ ॥

राजा सनत्कुमारोक्त विभाडकमुने सुत ।
आनिन्ये स्वेष्टसिध्यर्थं सुमतासचिवाच्छुत ॥ ३२ ॥

महर्षि लोमपादस्य सख्युर्जामातर प्रिय ।
शांतया कांतया साकमृष्यशृंग तपोनिधिं ॥ ३३ ॥

जपतावर आयाते तस्मिन्सर्वस्वदक्षिण ।
अश्वमेधोऽभवद्राज्ञ सर्वेषा विस्मयावह ॥ ३४ ॥

यज्ञादनतर चक्रे पुत्रीयामिष्टिमस्य स ।
स्वभागग्रहणायास्या सुरा सर्वे समागता ॥ ३५ ॥

जगता पीडक हतु रावण वरदर्पित ।
ब्रह्माण प्रार्थयामासुरुपाय चिंतयेति त ॥ ३६ ॥

यदैव प्रार्थितो धाता सचिंत्योपायमब्रवीत् ।
येऽभय न मर्त्येभ्योऽनया दशकधर ॥ ३७ ॥

राक्षसेंद्रोनराचस्मान्नाश प्राप्स्यति सर्वथा ।
निधायेत्य वदस्तत्रायमौ विष्णुर्महायशा ॥ ३८ ॥

मनुष्यस्त्व भवेत्यूचु प्रणतास्त्रिदशा प्रभु ।
राज्ञोदशरथस्यास्य स्वांशु हनु [illegible] ॥ ३९ ॥

---

१ अस्त २ निरुत्रिक ३ अश्वमेध ४ उद्वार्य [illegible] ५ दशरथ

श्रीशः सुरांस्तथेत्युक्त्वा गतोऽतर्धानमाश्रितः ।
पुमान् प्रादुरभूदिष्टेर्यां पुत्रियायां महाद्भुतः ॥४०॥
राज्ञे ददौ स्वर्णपात्रीं दिव्यपायससंभृताम् ।
देहि दारेभ्य इत्युक्त्वा तत्रैवांतर्हितोऽभवत् ॥ ४१ ॥
महिष्यै तददावर्धं पायसं सततिप्रदम् ।
अर्धादर्धं सुमित्रायै दत्तवान् रघुनंदनः ॥ ४२ ॥
जगतीशश्चरोरर्धं कैकेय्यै प्रददावथ ।
अवशिष्टं साष्टमांशं सुमित्रायै पुनर्ददौ ॥ ४३ ॥
यज्वनस्तस्य तास्तिस्रः पत्न्यो गर्भान् प्रपेदिरे ।
अत्रांतरेऽब्रवीद्ब्रह्मा सुरान् सर्वान् समागतान् ॥ ४४ ॥
रावणं राक्षसं हंतुमवतीर्णस्य मापतेः ।
सहायान् वानरानृक्षान्सृजध्वमुरुविक्रमान् ॥ ४५ ॥
मम वक्त्रादभूत्पूर्वं जृंभमाणस्य बुद्धिमान् ।
ऋक्षराट् जांबवान् विष्णोः स सहायो भविष्यति ॥ ४६ ॥
जंभलजप्रभवास्तस्माच्चक्रुर्देवास्तथैव ते ।
शक्रसूनुरभूद्वाली सुग्रीवः सूर्यनंदनः ॥ ४७ ॥
यशस्विनं बुद्धिमंतं तारं नाम महाकपिम् ।
धिषणोऽजनयत्पुत्रं देवानां कार्यसिद्धये ॥ ४८ ॥
जज्ञे धनपतेः पुत्रः स नाम्ना गंधमादनः ।
अग्नेर्नीलो नलः कीशप्रवरो विश्वकर्मणः ॥ ४९ ॥
यथाश्विनौ तथा मैंदद्विविदावपि तत्सुतौ ।
पर्जन्यपुत्रः शरभः सुषेणो वरुणात्मजः ॥ ५० ॥
राक्षसांतकरः श्रीमान् हनूमान् मारुतात्मजः ।
वज्रसंहननः साक्षाद्रुद्रतुल्यपराक्रमः ॥ ५१ ॥
महांतो जज्ञिरेऽसंख्याः सुरांशाः सत्यविक्रमाः ।
ऋक्षवानरगोपुच्छास्तुच्छा येषां पुरः परे ॥ ५२ ॥

---

१ यज्ञारे आर्षी २ पायसाचें ३ अस्वल ४ ब्रह्मदेव ५ वानर. ६ वानरविशेष

श्रीमति द्वादशे मासे चैत्रे शुक्ले पुनर्वसौ ।
कौसल्याऽजनयद्रामं नवम्यां कर्कटे शुभे ॥ ५३ ॥
राजप्रियायां कैकेय्यां जज्ञे सत्यपराक्रमः ।
पुष्ये मीने शुभे लग्ने भरतः सद्गुणाकरः ॥ ५४ ॥
माहिते समये सार्पे कुलीरे शुभलक्षणौ ।
पुत्रौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ॥ ५५ ॥
सर्वेपि नृपतेः पुत्राश्चत्वारः सद्गुणाकराः ।
सुरूपाः सुमहात्मानो रुच्या प्रोष्ठपदोपमाः ॥५६ ॥
यदैषां संभवो देव्यो गंधर्वा ननृतुर्जगुः ।
नेदुर्दुंदुभयो दिव्याः पेतुः सुमनसश्च खात् ॥ ५७॥
राजा महोत्सवे तस्मिन् विप्रादिभ्यो धनं मुदा ।
नानाविधं भूरि ददौ तदौदार्यं सुनिस्तुलम् ॥५८॥
गेहो महानयोध्यायामासीद्दशरथे यदा ।
चकार नामकरणं तेषामन्हि त्रयोदशे ॥ ५९ ॥
जना जगुः स्तुत राज्ञः सूनोर्ज्येष्ठस्य यत्कृतम् ।
नाम राम इति प्रेम्णा वसिष्ठेन पुरोधसा ॥ ६० ॥
पञ्च पुत्रस्य कैकेय्या भरतेति तथा द्वयोः ।
लक्ष्मणेति सुमित्रायाः शत्रुघ्नेति च पुत्रयोः ॥ ६१ ॥
अभूवुः कृतसंस्कारा विद्याः सर्वाः कलाश्च ते ।
श्रीरामस्त्वधिकस्तेषां ग्रहाणामिव भास्करः ॥६२॥
यथान्योन्यमतिस्निग्धौ कुमारौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ क्षणार्धविरहासहौ ॥ ६३ ॥
राघवोऽथ महाभागस्तेषां दारक्रियां प्रति ।
चिंतयामास धर्मात्मा सोपाध्यायः सबांधवः ॥६४॥
महात्मनश्चिंतयतो मंत्रिमध्ये स तत्क्षणम् ।
गाधिजोऽभ्यगमद्राजद्वारस्थैरावेदितो द्रुतम् ॥ ६५ ॥

---

कर्कराशि २ शुक्ले. ३ भाद्रपदा नक्षत्र. ४ उत्सव. ५ द्वारपाळ.

श्रीमत त मुनि राजा प्रत्युद्गम्य यथाविधि ।
पूजयामास पूजार्हं ब्रह्माणमिव वासव ॥ ६६ ॥
राजर्षिस्तमुवाचार्य यदर्थं त्वमिहागत ।
तत्कार्यं ब्रूहि कर्ताहं दैवत हि भवान्मम ॥६७॥
महर्षिस्तद्वच श्रुत्वा हृष्टरोमाऽभ्यभाषत ।
निश्चय कुरु कार्यस्य भव सत्यप्रतिश्रव ॥६८॥
जनेंद्र शृणु मारीच सुबाहुश्च निशाचरौ ।
यज्ञविघ्नकरौ शश्वत् तावह नो सहे व्रती ॥ ६९ ॥
यमस्य विषय नेतु तौ खलौ ब्राह्मणद्विषौ ।
काकपक्षधर राम पुत्र मे दातुमर्हसि ॥ ७० ॥
रात्रिचरवधे देव दिव्येन स्वेन तेजसा ।
मयाभिगुप्त शक्तस्ते राम कामप्रभाहर ॥ ७१ ॥
मनुजेश प्रदास्यामि श्रेयश्चास्मै महत्तर ।
येन त्रिष्वपि लोकेषु परा ख्याति प्रयास्य ति ॥ ७२ ॥
जगाद गाधिज राजा पुत्रविश्लेषकातर ।
ऊनषोडशवर्षो मे रामो राजीवलोचन ॥ ७३ ॥
यमींद्र राक्षसैरस्य न पश्याम्याजियोग्यताम् ।
त्व मे बहिश्चर प्राण न राम नेतुमर्हसि ॥ ७४ ॥
जन्य कर्ताहमेवार्य राक्षसैस्ते सह स्वयम् ।
अक्षौहिण्याऽनया सार्धं मा दास नेतुमर्हसि ॥ ७५ ॥
यदि वा राघव ब्रह्मन् नेतुमिच्छसि सुव्रत ।
चतुरंगसमायुक्त मया सह च त नय ॥ ७६ ॥
राक्षसौ कस्य तौ पुत्रौ किंवीर्यौ क समाश्रितौ ।
सर्वं मे शास भगवन् वृत्त ब्रह्मद्विषोस्तयो ॥ ७७ ॥
महर्षि कथयामास रावणानुचरौ खलौ ।
तौ मारीचसुबाहू द्वौ पुत्रौ सुदोपसुदयो ॥ ७८ ॥

---

१ रामोर्दे जाऊन २ सुलरोमांचित ३ सत्यप्रतिज्ञ ४ युद्धयें ५ ऋषीश्वरा ६ युद्ध ७ चतुरंग सैन्य

श्रीमतागस्त्यमुनिना शप्तौ राक्षसतां गतौ ।
रावणप्रहितौ कर्तुं यज्ञविघ्नं महाबलौ ॥ ७९ ॥
राजा प्रोवाच भगवन् ब्रह्मदत्तवरः परः ।
नाहं तत्पुरतः स्थातुं शक्तः संग्राममूर्धनि ॥ ८० ॥
महेन्द्रमुख्या देवाः सोढुं शक्ता न रावणम् ।
मानवानां कथा कैव सुदुरात्मा श्रुतो मया ॥८१॥
जगत्कर्त्रा ब्रह्मणा यो ऽनुगृहीतः स दानवः ।
हिरण्यकशिपुर्दैत्यस्तेजसायं सदा नवः ॥ ८२ ॥
यमात्क्रूरतरः स्पष्टं रावणो लोकरावणः ।
मर्त्यस्तेन विरोधं कः कर्ता नाहं क्षमो मुने ॥ ८३
राज्ञि तस्मिन् ब्रुवत्येवं संक्रुद्धः कौशिको ऽब्रवीत् ।
अलं गच्छाम्यहं राजन् सुखी भव सुहृद्वृतः ॥८४॥
मन्योस्तस्य प्रभावज्ञो वसिष्ठो भगवान् नृपम् ।
उवाच नैनं राजर्षे प्रत्याख्यातुं त्वमर्हसि ॥ ८५ ॥
जन्मनस्ते सुसाफल्यं क्षिप्रं रामं विसर्जय ।
कृतास्त्रमकृतास्त्रं वा गुप्तं कुशिकसूनुना ॥ ८६ ॥
यत्नवतोऽपि नालं वै रामं धर्षयितुं परे ।
कृशाश्वपुत्रास्त्रशतं दत्तमस्मै पिनाकिना ॥८७॥
जपापायमेतं तेषां विश्वामित्रो महायशाः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ ८८ ॥
यशस्करं गुरोर्वाक्यं स्वीकृत्य प्रकृतिं गतः ।
राजा दशरथो राममाजुहाव सलक्ष्मणम् ॥ ८९ ॥
राजमानं विशेषेण जनन्या समलंकृतम् ।
कृतस्वस्त्ययनं नत्वा तं तस्मै मुनये ददौ ॥ ९० ॥
महोत्सवोऽभवद्वायुः सुखस्पर्शस्तदा ववौ ।
पुष्पवृष्टिर्महत्यासीद्देवदुंदुभिनिःस्वनः ॥ ९१ ॥

---

१ अकाले रडवणारा. २ समर्थ. ३ शुभकर्म.

श्रीमान्मुनिर्यपायत्रे ततो रामो महायशाः ।
काकपक्षधरो धन्वी तंच सौमित्रिरन्वगात् ॥९२॥
राजपुत्रौ धनुष्पाणी चारुरूपौ महामुनिम् ।
अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ ॥ ९३ ॥
महार्षिमनुयातौ तौ महासत्वाविनिंदितौ ।
स्थाणुं देवमाचिन्त्यं तं कुमाराविव पावकौ ॥ ९४ ॥
जनार्दनाय गत्वाऽसौ मुनिरध्यर्धयोजनम् ।
बलां चातिबलां विद्यां ददौ क्षुत्तृट्श्रमापहाम् ॥ ९५ ॥
पतोत्मोर्वीस सरयूतीरे ताभ्यां विभावरीम् ।
स्थाणोरथाश्रमं गंगासरय्वोः संगमेऽगमत् ॥ ९६॥
राघवौ श्रीगुरोस्तत्र रुद्रनेत्राग्निना कृतम् ।
श्रुत्वा कृतागसो दाहं कामस्य मुदमापतुः ॥ ९७ ॥
महेशशिष्यैर्मुनिभिः पूजितौ गुरुणा सह ।
उषित्वा तांरंतु रात्रिं गंगातीरमुपागतौ ॥ ९८ ॥
जन्हुकन्यामुत्तरंतौ नावा मुन्युपनीतया ।
मानसात्सरयूत्पत्तिं पुण्यां शुश्रुवतुर्गुरोः ॥ ९९ ॥
पद्मारुणं वनं दृष्ट्वं पृष्टमीदृक्कथं न्विति ।
कौशिकः प्राह वत्सैतच्छृणु त्वां कथयाम्यहम् ॥१००॥
जलजाक्ष पुरा वृत्रहंतुर्हत्याहतद्युतेः ।
प्रायश्चित्तेन सत्यागस्तनोर्मलकरूशयोः ॥१०१॥
यस्माद्राघव भद्रं ते नाम्नैतद्वरदानतः ।
मलदश्चकरूशश्च जातौ जनपदाविमौ ॥ १०२ ॥
राघवास्ते सुंदभार्या यक्षिणी कामरूपिणी ।
बलं नागसहस्रस्य धारयंती सुदारुणा ॥१०३॥
मदिरामांसनिरता ताटका नाम दुर्मतिः ।
मारीचमाता तातास्मिन् काननेऽध्यर्धयोजने ॥ १०४ ॥

---

१ पुर्ण्य २ विश्वामित्र. ३ रुद्र. ४ देश.

श्रीमंस्त्वमागतो दृष्टा तामस्मद्वचनाज्जहि ।
भविष्यति यशः पुण्यं पापमप्यपि ते न हि ॥ १०५ ॥
राक्षस्येषा कथं जाता बलं चास्याभियत्कथ ।
इति पृष्टो मुनिः प्राह वत्सैतदपि मे शृणु ॥१०६॥
महत्तपश्चकारैकः सुकेतुर्यक्षनायकः ।
ब्रह्मणास्मै सुता दत्ता बल्वत्यतिरूपिणी ॥ १०७ ॥
सर्वज्ञासनल्लब्धां सा ताटका नाम कन्यकाम् ।
जम्भपुत्राय सुदाय प्रादादतिबला पिता ॥ १०८ ॥
पत्नी मारीचनामानं सुतं लेभे महाबलम् ।
कृतापराधेऽगस्त्येन हत सुदो महात्मना ॥ १०९ ॥
राक्षसत्वमियं प्राप्ता सपुत्रा ताटका कुधी. ।
पतिघ्नं हन्तुमिच्छन्ती शापात्तस्यातितेजसः ॥ ११० ॥
मन्नियोगात् त्वया राम हतव्यैषातिदारुणा ।
जातुचिल्लङ्घितो नाभि दुष्टेनापि दारुणा ॥ १११ ॥
तच्छ्रुदश्यामगो रामः श्रुतिराज्ञा तवार्य मे ।
इत्युक्त्वा सज्जकोदण्डो ज्यानिनादं[1] तदाकरोत् ॥११२॥
पैशी[2] श्रुत्वा महानादं मायै[3]भ्यद्रवद्रुषा ।
चकार गर्जनां घोरां लयमेघ[4]घटेव सा ॥ ११३ ॥
जघान रामस्तां मायां कुर्वतीं विकृताकृतिम् ।
लक्ष्मणेनाशुगैरश्रैश्छिन्नकर्णाग्रनासिकाम् ॥११४॥
प्रशस्थिन मुनिं रामं दृष्ट्वाप्येवं वासव ।
ववर्ष दिव्यैः कुसुमैर्जगुर्गन्धर्वसत्तमाः ॥ ११५ ॥
उपायाद्यशतं देहीत्युक्त्वेन्द्रो गाधिनन्दनम् ।
ययौ हृष्टः सुरैः स्वर्गं मार्गं दृष्ट्वेव तुष्टधीः ॥ ११६ ॥
महात्मना मुनी रामलक्ष्मणाभ्यां समन्वितः
उवासैकां वने तस्मिन् शर्वरीं शौरीरीतिभृत् ॥ ११७ ॥

---

१ वध कर. २ राक्षसी ३ धावली ४ प्रलयमेघांचा समूह ५ शकेरोदय

श्रीकंठ इव सुप्रीतो मूर्ध्न्युपाघ्राय कौशिकः ।
दंडचक्राद्यस्त्रशतं ददौ रामाय धीमते ॥ ११८ ॥
रागवान् यत्र तपसि चिरं सिद्धाश्रमे प्रियम् ।
कश्यपादितिशक्राणां कर्तुं हर्तुं बलेः श्रियम् ॥ ११९ ॥
महर्षिः पाययित्वा तद्वामनस्य यशोमृतम् ।
निन्ये तमाश्रमं राम विष्णुभक्त्या मना धृतम् ॥१२० ॥
जहृषुस्तापसा दृष्ट्वा गाधिजं रामलक्ष्मणौ ।
सोत्साही षडहोरात्रं तपोवनमरक्षताम् ॥ १२१ ॥
यष्टुमद्यैव दीक्षां त्वं प्रविशेति कृतांजली ।
राघवौ मुनिशार्दूलमूचतुस्तावरिंदमौ ॥ १२२॥
राजपुत्रौ समाश्लिष्य प्रहृष्टो मुनिपुंगवः ।
प्रविवेश तदा दीक्षां नियतो नियतेंद्रियः ॥१२३॥
मर्दितुं राक्षसौ यत्तावनिद्रौ रामलक्ष्मणौ ।
सोत्साही षडहोरात्र तपोवनमरक्षताम् ॥ १२४ ॥
जलदाविव मारीचसुबाहू नभसि स्थितौ ।
वेदीमसृग्वर्षेण दूषयमासतुः क्रतोः ॥१२५॥
यत्तेन रामभद्रेण मारीचः शतयोजनम् ।
क्षिप्तोब्धौ मानवास्त्रेण वातेनेव तरुच्छदः ॥ १२६ ॥
जवेनोत्सार्य मारीचं सुबाहुं कुणपाशनम् ।
ददाह रामोग्न्यस्त्रेण स्वनाग्नेवाघपर्वतम् ॥ १२७ ॥
यशस्विप्रवरः शीघ्रं तयोरनुचरान् खलान् ।
शेषान्वायव्यमादाय निजघान रघूद्वहः ॥ १२८ ॥
राशिभिः पुण्यतपसां सर्वैराश्रमवासिभिः ।
ऋषिभिः पूजितो रामो यथेंद्रो विजये पुरा ॥ १२९ ॥
मम सिद्धाश्रमो राम कृतोन्वर्थस्त्वयेत्यमुम् ।
प्रशस्य गाधिजस्ताभ्यां सार्यं सध्यामुपागमत् ॥ १३० ॥

---

१ भास्करादि पदार्थ. २ वृक्षपर्ण. ३ राक्षस. ४ वायव्यास्त्र.

श्रीरामः सानुजः प्रातर्विधिं कृत्वा कृतांजलिः ।
किंकरः किं करोमीति गुरुं गाधिजमब्रवीत् ॥ १३१ ॥
गाधिपुत्रं तं प्राह मुनिर्जनकभूभुजः ।
यज्ञो भविष्यत्यचिराद् यास्यामस्तत्र भो वयम् ॥१३२॥
मखं द्रष्टुं त्वमस्माभिः सह राम गमिष्यसि ।
तत्र शंभोर्धनुर्दिव्यं द्रक्ष्यस्यमितविक्रम ॥ १३३ ॥
जनकस्य सभायां तद्विद्यतेऽरिनिबर्हणम् ।
पादपद्माभिवेशस्य सदा सद्भिः समर्चितम् ॥ १३४ ॥
यत्सुरासुरगंधर्वराक्षसैर्वसुधाधिपैः ।
अशक्यारोपणं राम धनूरत्नं प्रयत्नतः ॥ १३५ ॥
राममुक्त्वैवमामंत्र्य कौशिको वनदेवताः ।
सर्षिसंघः स काकुत्स्थः सञगामोत्तरां दिशम् ॥१३६।
महर्षिमनुजग्मुस्तं मृगाणां पक्षिणां गणाः ।
निवर्तयामास स तान् सर्वसत्वसुहृत्स्वयम् ॥ १३७॥
जनितप्रमुदे शोणातीरे[2] रामाय पृच्छते ।
कथयामास पूर्वेषां मुनिर्माहात्म्यमात्मनः ॥ १३८ ॥
ययावथ ततो देशाद्गंगायास्तटमुत्तमम् ।
तत्राप्यकथयद्गंगामाहात्म्यमखिलं मुनिः ॥ १३९ ॥
जन्मस्कंदस्य चरितं सगरस्य च विस्तरात् ।
गंगावतरणं पुण्यं कौशिकोऽकथयत्स्वयम् ॥ १४० ।
यमुनायाः सखीं गंगामुत्तीर्य स तपोनिधिः ।
विशालां नगरीं प्राप्य तत्रोवास महायशाः ॥ १४१
राघवेणार्य कस्येमूमिति[1] पृष्टे प्रसंगतः ।
क्षीरोदमथनं[3] प्रोक्तं युद्धं देवासुरोद्भवम् ॥ १४२ ॥
मरुतां जन्म च दितेस्तत्तपःस्थानमुत्तमे ।
पुर्या इक्ष्वाकुवंश्येन विशालेन निवेशनम् ॥ १४३ ॥

---

१ निरोप घेऊन. २ 'सोन' नांवाची नदी. ३ क्षीरसमुद्र.

श्रीमता गाधिजेनेदं प्रोक्तं रामाय सादरम् ।
विशालाधिपती राजा सुमतिस्तानपूजयत् ॥ १४४ ॥
रात्रिं तत्रातिवाह्यायं मिथिलोपवनं ययौ ।
तत्र दृष्ट्वाश्रमं रम्यं निर्जनं मुनिपुंगवम् ॥ १४५ ॥
मधुरं मधुराभाषी मनुजेश्वरनंदनः ।
रामः पप्रच्छ कस्येदं स्थानमीदृक् कथं प्रभो ॥ १४६ ॥
जगद्गीततपाः प्राह वत्सासीदत्र गौतमः ।
सोऽहल्यया सहातिष्ठत्तपः सुचिरमात्मवान् ॥ १४७ ॥
यत्नादहल्यां बुभुजे शक्रो गौतमरूपभाक् ।
तया स्वं मां च रक्षेति प्रोक्तोऽगादुटजाद् द्रुतम् ॥ १४८ ॥
राजानं द्युसदां ज्ञात्वा मुनिवेषं कृतागसम् ।
अफलस्त्वं भवेत्येवं मुनिवर्योऽशपद्रुषा ॥ १४९ ॥
महेंद्रस्यर्षिशप्तस्य पेततुर्वृषणौ भुवि ।
तथा शप्त्वा च देवेशं भार्यामपि च शप्तवान् ॥ १५० ॥
नयंतैजनकेनासि यत्त्वं ज्ञात्वापि संगता ।
अदृश्या सर्वभूतानां वाताहारा भविष्यसि ॥ १५१ ॥
यदैतच्च वनं घोरं रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ १५२ ॥
जगदेकपवित्रस्य रामस्याद्भुतकर्मणः ।
कारिष्यसि यदातिथ्यं मत्संगं त्वं तदाप्स्यसि ॥ १५३ ॥
यथोक्तं तत्तथा जातं स गतस्तुहिनाचलम् ।
मेषस्य वृषणौ दत्तौ जिष्णोरग्निपुरोगमैः ॥ १५४ ॥
राहुणेवामृतरुचेर्मंडलं राम सन्मुनेः ।
कलत्रं ग्रस्तमत्रास्ते दोषेण तां विमोचय ॥ १५५ ॥
मया सहाश्रमे तत्त्वं प्रविशाशु रघूत्तम ।
इत्युक्तोऽसौ तथा चक्रे वक्रेतरसुहृन्मणिः ॥ १५६ ॥

---

१ नगरी विशेष. २ देव. ३ कृतापराध. ४ इंद्रपुत्र. ५ इंद्र. ६ भाविकांचा मित्र.

श्रीराम आश्रमे तस्मिन् प्रविष्टे गुरुणा सह ।
सती सात्विकवृत्त्यासौ साक्षं प्रादुरभूत् क्षणात् ॥ १५७ ॥
राहित्येनैनसो यस्य साहित्येनाशु सा सती ।
शापस्यातमुपागम्य तेषां दर्शनमागता ॥ १५८ ॥
महाविनयसंपन्नौ महन्महददर्शनौ ।
राघवौ तु तदा तस्याः पादौ जगृहतुर्मुदा ॥१५९॥
जयेत्युक्त्वा रामपादौ नत्वाऽहल्या सुदर्शना ।
अर्घ्यं पाद्यं तथातिथ्यं चकार सुसमाहिता ॥ १६० ॥
यतिभिः स्वांतमध्ये यो ध्येयो वेदांतवेदिभिः ।
प्रतिजग्राह काकुत्स्थः प्रेम्णा पूजां तया कृताम् ॥१६१॥
रामार्यां मुनिवर्यस्य रामे च रघुनंदने ।
पुष्पवृष्टिर्महत्यासीद्दिव्यदुंदुभिनिस्वनैः ॥ १६२ ॥
महान् समुत्सवो ह्यासीद्गंधर्वाप्सरसां तदा ।
साधु साध्विति देवास्तामहल्यां समपूजयन् ॥ १६३ ॥
जगाम मिथिलां रामो गौतमेनाभिपूजितः ।
अहल्यां प्राप्य परमां कीर्तिं च मुदितात्मना ॥ १६४ ॥
यजमानं मुनिं प्राप्तं श्रुत्वा सह पुरोधसा ।
शतानंदेन ऋत्विग्भिर्दृष्टः प्रत्युज्जगाम तम् ॥१६५॥
जनकः पूजयामास गाधिजं परमादृतः ।
तौ रामलक्ष्मणौ दृष्ट्वाऽपृच्छत् कस्यात्मजाविति ॥१६६॥
यदृच्छया भुवं प्राप्तावश्विनाविव सुंदरौ ।
भूषयंताविमं देशं चंद्रसूर्याविवांबरम् ॥ १६७ ॥
राजर्षिर्गाधिजः प्राह प्रियौ दशरथात्मजौ ।
इमौ मया समानीतौ महाभागौ महाबलौ ॥१६८॥
मद्यज्ञविघ्नशमनावहल्यागौतमार्चितौ ।
द्रष्टुं तव क्रतुं प्राप्तौ शैवं चात्यद्भुतं धनुः ॥१६९॥

---

१ एनस् (पाप) २ँददर्शन.

श्रीमान् ज्येष्ठ शतानदो गौतमस्यात्मजो मुने ।
श्रुत्वा मातु समुद्धार प्रहृष्टो राममब्रवीत ॥ १७० ॥
राजपुत्र महाप्राज्ञ राजवंशविभूषण ।
स्वागत ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ॥१७१॥
मह्या धन्यतरो राम त्वत्तो नास्तीह कश्चन ।
गोप्ता कुशिकपुत्रस्ते येन तप्त महत्तप ॥ १७२ ॥
जगत्यधिपति पूर्वमेष आसीन्महाबल ।
जहार लोभात्सुरभि वसिष्ठस्य महात्मन ॥ १७३ ॥
यवनैर्निर्जित क्रूरै कल्माषी निर्मितैरियम ।
हुकारेण वसिष्ठस्य दग्धसैन्योऽप्रभोऽभवत् ॥ १७४ ॥
रामैष रुद्रमाराध्य प्राप्यास्त्राण्यद्भुतान्यपि ।
वसिष्ठब्रह्मदडेन भग्नदर्पोऽभवत्पुन ॥ १७५ ॥
मत्वा ब्राह्म बल श्रेष्ठ तुच्छ क्षात्रमय तदा ।
ब्रह्मत्वकारण घोर चचार सुमहत्तप ॥१७६॥
जगत्कर्ता जगाम्राद्वसहस्त्राते सुरैर्वृत ।
मन्ये गाधिज राजर्षि त्वामित्युक्त्वा दिव ययौ ॥१७७॥
परकृत तद्वृथा मत्वा भूय एव महातपा ।
तपश्चचार रामाय ब्रह्मर्षित्वाप्तये भृशम् ॥१७८॥
जगत्प्रथित इक्ष्वाकुवशजातो नृपत्तम ।
त्रिशङ्कुरिति यन्नाम वसिष्ठेन महात्मना ॥१७९॥
यात्यक्तो गुरुपुत्रैश्च नीतश्चाडालता हठात् ।
स एन शरण प्राप्तोऽमुना सप्रेषितो दिवम् ॥१८०॥
रामा यामद्भुता सृष्टि कर्तुमेष समुद्यत ।
प्रार्थितस्त्रिदशै सर्वैर्विरराम महायशा ॥ १८१ ॥
महान्विघ्न प्रवृत्तोऽत्र इति मत्वायमीश्वर ।
पुष्करेषु तपस्तेपे रामभद्र महातपा ॥ १८२ ॥

---

१ कामधेनु

श्रीमानयं शुन शेपं मृत्युपाशादमोचयत् ।
अंबरीषाध्वरे राम यत्कृते शप्तवान् सुतान् ॥ १८३ ॥
राघवायं तपस्तेपे दशवर्षशतान्यमुम् ।
ऋषिस्त्वमसि भद्रं ते इति ब्रह्माब्रवीत्पुनः ॥ १८४ ॥
महत्तपः पुनश्चक्रे तत्रापि स्नातुमागताम् ।
दृष्ट्वैव मेनकां देवीमभजद्दशवत्सरान् ॥ १८५ ॥
जनाधिप तत्रापि ज्ञात्वा दैवैस्तपोहृतम् ।
कौशिकीतीरमासाद्य तपस्यामकरोत्पराम् ॥ १८६ ॥
यतात्माब्दसहस्राणि तपः पर्वत उत्तरे ।
घोरं चकार रामास्माद्देवतानामभूद्भयम् ॥ १८७ ॥
राजीवासन एत्याह महर्षे वत्स कौशिक ।
महत्त्वमृषिमुख्यत्वं ददामि युव तोषितः ॥ १८८ ॥
महादेवमुनाचायं भवान्यदि पितामह ।
महर्षिरिति मां नाह किमहं न जितेंद्रियः ॥१८९॥
जगत्स्त्रष्टाऽभ्रमाहत्वमद्यापि न जितेंद्रियः ।
जितेंद्रियत्वं दुष्प्रापमिति मन्यामहे वयम् ॥१९०॥
यतस्व वत्स तत्प्राप्तामित्युक्त्वा त्रिदिवं गतः ।
ऊर्ध्वबाहुर्वायुभक्ष्यः पुनर्घोरं तपोऽचरत् ॥१९१॥
जगत्युग्रतपस्त्रस्ते रंभा जंभारिणा बलात् ।
प्रेषिता लोभनं कर्तुं मुनेरस्य रघूत्तम ॥ १९२ ॥
यदुक्तमात्मना कार्यं महेंद्रस्तस्य सिद्धये ।
पिकीभावमुरीकृत्य तस्याः पार्श्वमुपागमत् ॥ १९३ ॥
रामया राम याश्चेष्टा मनसो लोभनोचिताः ।
आरब्धाः सन्निधावस्य समधुस्मरया तया ॥ १९४ ॥
मन्युना तां शशापाय शैली स्यास्यसि दुर्भगे ।
वर्षायुतमिति ज्ञात्वा शक्रकृत्यमिति प्रभो ॥ १९५ ॥

---

१ इंद्र. २ कोकिळ होऊन ३ वसंत व मदन सहवर्तमान असणारी.

श्रीमान् ब्राह्मण एतस्माच्छापात् त्वामुद्धरिष्यति ।
इत्थं चकार भगवानयं तस्यामनुग्रहम् ॥१९६॥
राज्ञा सुराणामेतस्य तपोपहरणे कृते ।
निर्गतः स च कंदर्पस्तस्तोयमपि तादिशः ॥ १९७ ॥
महामुनिरय पूर्वां दिशं प्राप्य सुदारुणम् ।
सहस्रवर्षपर्यंत काष्ठमौनं व्रतं श्रितः ॥ १९८ ॥
तपतां वर एतस्मिन्व्रताते भोक्तुमिच्छति ।
शक्रो ब्राह्मणरूपेण सिद्धमन्नमयाचत ॥ १९९ ॥
यद्यप्यन्नमशेषं तद्भक्षितं राम जिष्णुना ।
न किंचिदवदद्विप्र मौनव्रतमुपाश्रितः ॥ २०० ॥
रात्रिंदिवमनुच्छ्वासं मौनमासीत्पुनस्तथा ।
अस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत ॥ २०१ ॥
महता तपसा राम सर्वेऽस्य त्रिदिवौकसः ।
मोहिताः कौशिकस्यार्थे पितामहमथाब्रुवन् ॥ २०२ ॥
भगवोने प्रभोस्माभिर्लोभितः कोपितोऽप्यलम् ।
नह्यस्य वृजिनं किंचिद् दृश्यते सूक्ष्ममप्युत ॥ २०३ ॥
यद्यस्याभीप्सितं देव कौशिकस्य न दीयते ।
त्रैलोक्यनाशो भविता न चिरादेव निश्चयात् ॥ २०४ ॥
अब्जप्रभवो देवैः सहागत्यैनमब्रवीत् ।
ब्रह्मर्षे स्वागतं तेस्तु तपसा स्म सुतोषिताः ॥ २०५ ॥
यत्तेभिल्पितं सर्वं दत्तं कौशिक तन्मया ।
दीर्घमायुर्भद्रं ते गच्छ सौम्य यथासुखम् ॥ २०६ ॥
शताय मुदितो नत्वा व्याजहार महामतिः
ब्राह्मण्यं यदि मे प्राप्तं त्वया दत्तं पितामह ॥२०७॥
ममायं परमः कामः सद्योस्त्वद्य नमोस्तु ते ।
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु सत्यदृक् ॥२०८॥

---

१ पातक.

श्रीमान्वसिष्ठब्रह्मर्षिः सर्वैरेव प्रसादितः ।
ब्रह्मर्षिस्त्वमसीत्येव प्राहैनं गाधिजं स्वयम् ॥ २०९ ॥
राघवैवंप्रभावोऽयं विश्वामित्रो गुरुस्तव ।
वसिष्ठं पूजयामास ब्राह्मण्यप्राप्तिकारणम् ॥ २१०॥
महिमा गाधिजस्यैवं शतानंदेन वर्णितः ।
यं श्रुत्वाभूत्प्रमुदितो रामः सौमित्रिणा सह ॥ २११ ॥
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ।
धन्योस्म्यनुगृहीतोस्मि यस्य मे मुनिपुंगव ॥ २१२ ॥
यज्ञं काकुत्स्थसहितः प्राप्तवानसि कौशिक ।
पावितोहं त्वया ब्रह्मन् दर्शनेन महामुने ॥ २१३॥
राजर्षिर्गाधिजेनापि प्रशस्य स विसर्जितः ।
मुनिं प्रदक्षिणं कृत्वा यज्ञशालामुपाययौ ॥ २१४ ॥
महात्मा मैथिलः प्रातः कृतकर्मा स राघवम् ।
तमाजुहाव स ब्रह्मसमाजं मुनिसत्तमम् ॥ २१५ ॥
जनकः प्राह सत्कृत्य सरामं कौशिकं मुनिम् ।
स्वागतं तेस्तु भगवन्नाज्ञापय करोमि किम् ॥ २१६ ॥
यन्तानं तं मुनिः प्राह द्रष्टुमैशं समागतौ ।
इमौ दाशरथी वीरौ क्षत्रियौ लोकविश्रुतौ ॥२१७॥
जनकः क्षत्रियश्रेष्ठौ रामलक्ष्मणयोर्धनुः ।
तद्दर्शयानयोर्दृष्ट्वा प्राप्तकामौ प्रयास्यतः ॥२१८॥
यन्चोवाच मुने शर्वप्रमुखैरमरैर्धनुः ।
न्यस्तं दक्षाध्वरध्वंसे देवराते निमेः सुते ॥ २१९ ॥
राजभिर्देवतावुध्या पूजितं निमिवंशजैः ।
मया क्ष्मा कर्षता लब्धायो सीता नाम मत्सुता ॥ २२०॥
ममापि वीर्यशुल्केति स्थापितेयमयोनिजा ।
आगम्यानरयन्सर्वे नृपा मे कन्यकां वराम् ॥ २२१ ॥

---

१ देव २ वीर्योचा पण ह्मणून नेमकेली

श्रीमस्तेभ्यो न मे दत्ता वीर्यशुल्केति दारिका ।
शैव सज्ज धनु कर्ता भर्ता स दुहितुर्मम ॥ २२२ ॥
राजानस्ते धनुर्वीर्यजिज्ञासव इहागता ।
न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि च ॥२२३ ॥
मया ततो नृपा सर्वे प्रत्याख्याता मुने बलै ।
मिथिला रुरुधु क्रुद्धा युद्धायाभ्युद्यता बलात् ॥ २२४ ॥
अन्ये भग्ना सुरैर्दत्तचतुरंगबलैन् ते ।
तदेतद्दर्शयिष्यामि धनु श्रीरामलक्ष्मणौ ॥ २२५॥
यद्यस्य धनुषो राम कुर्यादारोपण मुने ।
सुतामयोनिजा सीतां दद्यां रामाय सुंदरीम् ॥ २२६ ॥
राजानं कौशिक प्राह तर्हि दर्शय माचिरम् ।
तेनाज्ञप्ता स्वसचिवा धनुरानीयतामिति ॥ २२७ ॥
मनुष्याणां सहस्राणि पचलोहमया पुर ।
त मंजूषामष्टचक्रा युक्तयाप्यूहु कथचन ॥ २२८ ॥
जनक मंत्रिण प्रोचुरानीत धनुरैश्वरम् ।
प्राजलि स मुनिं प्राह भगवन् दर्शयानयो ॥ २२९ ॥
यस्य शेकु सुरा दैत्या राक्षसा नैव पूरणे ।
आरोपणे समायोगे वेपने तोलने तथा ॥ २३० ॥
जनकस्य वच श्रुत्वा विश्वामित्रो महायशा ।
वत्स राम धनु पश्य मैव राघवमब्रवीत् ॥ २३१ ॥
यथायाय गुरो पादौ नत्वा रामो महाबल ।
ता मंजूषा समुद्घाट्य दृष्ट्वा माहेश्वर धनु ॥ २३२ ॥
राघवोऽप्युच्चैदतस्य तोलन पूरण प्रभो ।
कर्तुमिच्छामि सत्सस्य यथाज्ञा भवतोऽरिह ॥ २३३ ॥
महर्षि कौशिको बाढं नृपश्चेत्यभ्यभाषत ।
लीलया स धनुर्मध्ये जग्राह वचनान्मुने ॥ २३४॥

---

१ पेटी

श्रीमान्नरसहस्राणां पश्यतां रघुनंदनः ।
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥ २३५ ॥
राम आरोपयिला ज्यां पूरयामास तेजसा ।
तद्बभंज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ २३६ ॥
महानासीद् ध्वनिस्तस्य निर्घात इव दारुणः ।
निपेतुर्मानवा भूमौ तेन नादेन मोहिताः ॥ २३७ ॥
जनक गाधिजं वीरौ वर्जयिला च राघवौ ।
धनुर्ध्वनिन सहसा सर्वेपि व्याकुलीकृताः ॥ २३८ ॥
यथास्थिते जने तस्मिन्विमोहे प्रकृतिं गते ।
उवाच प्रांजलिर्वाक्य जनको मुनिपुंगवम् ॥ २३९ ॥
रामोय दृष्टसामर्थ्यो भगवन् गाधिनंदन ।
अत्यद्भुतमाचिंत्य च धनुरारोपणादि यत् ॥ २४०
मम सत्या प्रतिज्ञा सा वीर्यशुल्केति कौशिक-।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ २४१
अनेन मंत्रिणो यांतु भवतोनुमतेन मे ।
नृपं दशरथं शीघ्रमानयतु पुरीं मम ॥ २४२ ॥
यतोभिलषितं राजस्तदास्त्वित्यब्रवीन्मु नि-।
अयोध्यां प्रेषयामास सचिवान् दत्तशासनान् ॥ २४२
जनकप्रेषिता दूतास्त्रिरात्रमुषिताः पथि ।
अयोध्यां प्राविशन् दृष्ट्वा नत्वा दशरथं प्रभुम् ॥ २४
यथावृत्तं समाचख्युस्तच्छ्रुत्वा मुदितो नृपः ।
वसिष्ठवामदेवादीन् पुरस्कृत्य विनिर्ययौ ॥ २४५ ॥
राज्ञा संप्रार्थिता विप्रा मार्कंडेयादयो रथैः ।
निर्ययुर्हृष्टचित्तास्ते नागराः सूतमागधाः ॥ २४६ ॥
महती मुदिता सेना सपन्ना चतुरंगिणी ।
राजानमृषिभिः सार्धं व्रजंतं पृष्ठतोन्वगात् ॥ २४७ ॥

---

१ वज्रघोष.

श्रीमतमागत श्रुत्वा सामान्य सपुरोहितम् ।
मैथिल पूजयामास प्रयुद्गम्य रघूत्तमम् ॥ २४८ ॥
राजोवाच स्वागत ते दिष्टया प्राप्तोसि राघव।
दिष्टया वसिष्ठो जाबालिरागत काश्यपोप्ययम् ॥ २४९ ॥
मत्कुल पूजित लोके सत्रधाद्राघवै सह ।
श्वे प्रभाते विवाह त्व निर्वर्तयितुमर्हसि ॥ २५० ॥
जनकस्य वच श्रुत्वा साकेतेशोप्युवाच तम् ।
प्रतिग्रहो दातृवश श्रुतमेत मया पुरा ॥ २५१ ॥
यथा वक्ष्यसि धर्मेत तत्करिष्यामहे वयम् ।
तच्छ्रुत्वा स विदेहेश पर विस्मयमागत ॥ २५२ ॥
रामाज्ञया शतानन्दो दूतान् प्रस्थाप्य शीघ्रगान् ।
आनिन्ये स पुर क्षिप्र साकाश्याया कुशध्वजम् ॥२५३॥
मतिमा मैथिल प्राह मंत्रिश्रेष्ठ सुदामनम् ।
आनयस्व सुते प्राथ राघव सपुरोहितम् ॥ २५४ ॥
जनकप्रेषितो मन्त्री राजान प्रणतोऽब्रवीत् ।
स वा व्यवसितो द्रष्टु वैदेह सपुरोधसम् ॥ २५५ ॥
य एते ब्राह्मणा सर्वे सचिवास्तव बाधवा ।
तनुजा मनुनाथेशि सहैभिस्त्वा दिदृक्षते ॥ २५६ ॥
नरेंद्रस्तद्वच श्रुत्वा श्रेष्ठ सर्षिगणस्तदा ।
सबधुरगमत्तत्र जनको यत्र वर्तते ॥ २५७ ॥
यशस्विन नृप प्राह राजा दशरथस्तदा ।
विश्वामित्राप्यनुज्ञातो वसिष्ठो भगवान् गुरु ॥ २५८ ॥
राजन्वक्ता च कर्ताच सर्वेमेभिर्द्विजै सह ।
एवमुक्त्वा दशरथे तूष्णींभूते स्वय मुनि ॥ २५९ ॥
महार्थ कीर्तयामास रघोरन्वयमादित ।
आसीत् रघोरजस्तस्य पुत्रो दशरथो नृप ॥ २६० ॥

---

१ सामोरे आळन २ अयोध्यापती

श्रीरामलक्ष्मणावस्याप्यनयोरर्थे आत्मने ॥
सीतोर्मिले ते वरये सदृशाः सदृशे प्रभो ॥

राजोवाच निमेर्वंशं कीर्तयित्वा निशाभने ॥
दद्मी ददामि ते ब्रह्मंस्त्रिर्वदामि न संशयः ॥ २६२॥

महानुभाव गोदानं पितृकार्यं च कारय ॥
रामलक्ष्मणयो राजंस्ततो वैवाहिकं कुरु ॥ २६३ ॥

जनकं गाधिजः प्राह कुशध्वजसुताद्वयम् ॥
राजन् भरतशत्रुघ्नपत्न्यर्थे वरये पुनः ॥२६४॥

यदुक्तं भवता ब्रह्मंस्तदस्तु च्छात्र एष ते ॥
एतदुत्तरफल्गुन्यां चतुर्णामस्तु मंगलम् ॥ २६५ ॥

राजैवमुक्त्वा जनकं वसिष्ठंच सकौशिकम् ॥
विसर्जयामास मुदा स्तुत्वा दशरथं नृपम् ॥ २६६ ॥

शमना रघूत्तंसस्तद्गोदानविधौ गवाम् ।
ददौ चत्वारि लक्षाणि ब्राह्मणेभ्यो यथाविधि ॥ २६७ ॥

नकस्य पुरीं प्राप्तस्तदा भरतमातुलः ॥
युधाजिद्भागिनेयं स्वं गृहं नेतुं पितुर्गिरा ॥ २६८ ॥

उक्तः समयतस्मिन् सीतां रामाय मैथिलः ॥
उर्मिलां लक्ष्मणायादाद्विधिनद्भूरिदक्षणाम् ॥ २६९ ॥

नकस्यानुजः प्रादाद्भरतायापि मांडवीम् ॥
शत्रुघ्नाय च सत्कृत्य श्रुतकीर्तिं कुशध्वजः ॥२७०॥

स्मिन्मुहूर्ते विजये विवाहोऽभून्महात्मनाम् ॥
पुष्पवृष्टिरभूद्दिव्या दिव्यदुंदुभिनिस्वनः ॥२७१॥

घवाणां विवाहेऽभून्नृत्यमप्सरसामपि ।
गंधर्वपतयस्तत्र समागत्य जगुः कलम् ॥२७२॥

हः सोत्यद्भुतस्तत्र सदारा जनकार्चिताः ।
गताः स्वाशिगिरां वीराः सर्वे रामपुरःसराः ॥२७३॥

श्रीमतावासकल्याणावयोध्यामिथिलापती ।
आपृच्छयै गाधिजस्तस्तु ययावुत्तरपर्वतम् ॥ २७४ ॥
राजा दशरथो याते गाधिजे मिथिलाधिपम् ।
आपृच्छ्य ससुतो गतुमुद्यतोभून्निजां पुरीम् ॥२७५॥
महात्मा जनकः कन्याधनं बहुविधं मुदा ।
गवां शतसहस्राणि बहूनि स्वबराणि च ॥२७६॥
जैनुं स्व सफलीकर्तुं पत्त्यश्वरथकुंजरम् ।
कन्याशतं च प्रत्येकं दासीदासान्वरान्मणीन् ॥२७७॥
यक्षेशो इव हेम्नश्च रजतस्य महामना ।
बव्हीः कोटीः प्रसन्नात्मा ददौ यद्यदनुत्तमम् ॥२७८॥
राघवं ससुतं सार्धं समनुज्ञाप्य सानुगम् ।
प्रविवेश स्वानिलयं मिथिलां मिथिलेश्वरः ॥ २७९ ॥
महीपतिरथायोध्यामागच्छन्नात्मजैः सह ।
ददर्श दुर्निमित्तानि सुनिमित्तानि कानिचित् ॥ २८० ॥
जनितत्रास उर्वीशः पप्रच्छ गुरुमात्मनः ।
हृदयोत्कंपि किमिदं दृश्यते भगवन्निति ॥ २८१ ॥
यद्यप्यस्ति भयं राजन्नैव स्थास्यति तच्चिरम् ।
भद्रं तवास्तु मा भैषीरित्युक्तो गुरुणा नृपः ॥ २८२ ॥
जमदग्निसुतं राजा ददर्श क्षत्रियांतकम् ।
याते शाते समुन्मूल्य गुरूनपि तरून् क्षणात् ॥२८३॥
यमात्क्रूरतरं रामं जामदग्न्यं निरीक्ष्य ते ।
वसिष्ठप्रमुखा विप्राः पूजयामासुरानताः ॥२८४॥
रामं दाशरथिं रामो जामदग्न्योब्रवीद्रुषा ।
शैवं मम धनुः सज्जं त्वमिदं वैष्णवं कुरु ॥२८५॥
मन्युं शमयितुं प्रैक्ष्य वृद्धं दशरथं स्थितम् ।
अनादृत्य वसिष्ठादीन् वदतः दारुणा गिरः ॥२८६॥

---

१ निरोप घेऊन २ जाणें ३ पायदळ ४ कुबेर ५ चाईट शकुन ६ नम्र

श्रीमान् दाशरथी रामस्तत्कराद्वैष्णवं धनुः ।
आदाय लीलयारोप्य सज्जं कृत्वा महाशरम् ॥ २८७ ॥
राज्ञां काल्मुवाचेदं वचनं शृणु भार्गव ।
ब्राह्मणोसीति पूज्यो मे विश्वामित्रकृतेन च ॥ २८८॥
मनो मे त्वद्वधे नास्ति जामदग्न्य वद द्रुतम् ।
गतिं वा तव धर्मं वा हन्म्यमोघो ह्ययं शरः ॥ २८९॥
जमदग्निसुतः प्राह गतिं हंतुं न मेऽर्हसि ।
जहि त्वं शरमुख्येन धर्ममप्रतिमं मम ॥२९०॥
यदहं विश्वनाथेन त्वयाद्य विमुखीकृतः ।
नचेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ॥ २९१ ॥
रामो दाशरथिः श्रीमांश्चिक्षेप शरमद्भुतम् ।
दृष्ट्वा धर्मं हतं नैज वैष्णवेन महेषुणा ॥२९२॥
महेंद्रं पर्वतश्रेष्ठं रामं कृत्वा प्रदक्षिणम् ।
पूजितो भार्गवः दृष्ट्वा जगामात्मगतिं प्रभुः ॥२९३॥
जलेगहस्ते श्रीरामो ददौ तद्वैष्णवं धनुः ।
ऋषीन्नत्वा ततः प्राह पितरं विव्हलं प्रभुम् ॥२९४॥
यथागतं गतस्तात भार्गवस्तव वाहिनी ।
प्रयात्वयोध्याभिमुखी त्वया नाथेन पालिता ॥२९५॥
जग्राह रामं बाहुभ्यां मूर्ध्न्युपाघ्राय चासकृत् ।
पुनर्जातं नृपो मेने पुत्रमात्मानमेव च ॥ २९६ ॥
ययावयोध्यां मुदितो मुदितां ध्वजमालिनीम् ।
पुत्रैरनुगतः श्रीमान् श्रीमद्भिः ■ महायशाः ॥ २९७॥
राजा भरतशत्रुघ्नौ द्रष्टुं मातामह ततः ।
युधाजिता मातुलेन सह प्रेषितवान्मुदा ॥ २९८ ॥
मनांसि रामः सर्वेषां रंजयामास सद्गुणैः ।
स वारिदो जनौघस्तु मयूर इव तत्परः ॥२९९॥
॥ इति श्रीमन्मंत्ररामायणे बालकांडे श्रीरामनंदनमयूर-
विरचिते त्रयोविंशोमंत्रः ॥

१ अग्निर्धपं. २ सेना.

## अयोध्या कांडम्.

स श्री दशरथो राजा रामाय गुणशालिने ॥
उद्यतोऽभूद्यौवराज्यं दातुं गुर्वनुमोदितः ॥ १ ॥
प रा भ्युदयसंहृतावभिषेकेऽपिवल्लभा ॥
विघ्नं चकार कैकेयी मथराभिन्नधीर्बलात् ॥ २ ॥
स म र्थोऽपि नृपः सत्यपाशबद्धो ऽबलोऽभवत् ॥
निर्बंधात्पूर्वदत्तौ सा वरौ जग्राह निर्घृणा ॥ ३ ॥
भ ज तामद्य भरतो यौवराज्यमकंटकं ॥
रामश्चतुर्दश समाश्चीराजिनधरो वनं ॥ ४ ॥
अ थ शस्करमेव तत्तस्या आकर्ण्य भाषितं ॥
राजोवाच सुदुर्बुद्धे किमिदं ते चिकीर्षितं ॥ ५ ॥
नि रा गसं प्रियं रामं देवि न त्यक्तुमर्हसि ॥
मूर्ध्ना स्पृशामि ते पादावित्यप्यार्ततरोऽब्रवीत् ॥ ६ ॥
सा म र्व्यर्थमभूद्राजा मूर्छामसकृदागतः ॥
कैकेयीसदने रात्रिं सर्वां दुःखेन सोऽनयत् ॥ ७ ॥
द्वि ज श्रेष्ठो वसिष्ठोऽथ सुमंत्रं सचिवोत्तमं ॥
प्रातः प्रोवाच राजानमभिषेकार्थमानय ॥ ८ ॥
स य यावाशु कैकेयीसदने तं नृपोत्तमं ॥
ददर्श भूमावस्वस्थं पतितं शोकविव्हलं ॥ ९ ॥
प्रा ञ्ज लि स सुमंत्रस्तं स्तुत्वोवाच प्रबोधयन् ॥
गुरूरामाभिषेकार्थं राजेंद्र त्वां प्रतीक्षते ॥ १० ॥
प्रि य मप्याह तं राजा शोकरक्तेक्षणस्तदा ॥
वाक्यैस्तु खलु मर्माणि मम भूयो निकृंतसि ॥ ११ ॥
स रा जवाक्यं करुणं श्रुत्वा दीनं च तं प्रभुं ॥
दृष्ट्वा बद्धांजलिः किंचित्तस्मादेशादपाक्रमत् ॥ १२ ॥
स म यज्ञाय कैकेयी प्राह मंत्रिन् समुत्सुकः ॥
रामाभिषेकहर्षेण सुतरां जातजागरः ॥ १३ ॥

---
१ निर्दय २ चर्मवस्त्र

स श्री मानयमद्यैवं राजा निद्रामुपागतः ॥
राममानय भद्र ते नात्र कार्या विचारणा ॥ १४ ॥
न रा धिपतिपत्न्येत्यमुक्तः स सचिवोऽब्रवीत् ॥
अश्रुत्वाऽहं प्रभोर्वाक्यं कथं गच्छामि भामिनि ॥ १५ ॥
तं म हीपतिरप्याह गच्छ राममिहानय ॥
इत्युक्तः सचिवः प्राप राममासादमाशुगः[1] ॥ १६ ॥
त्वां ज गत्याः पतिर्द्रष्टुमिच्छतीत्याह सांजलिः ॥
रामोऽपि सीतामापृच्छ्य हृष्टो राजानमभ्यगात् ॥ १७ ॥
अ य थापूर्वरूपस्य स पूर्वं चरणौ पितुः ॥
ववंदे राघवः पश्चात्कैकेय्याः सुसमाहितः ॥ १८ ॥
स रा जा राम इत्युक्त्वा बाष्पपर्याकुलेक्षणः ॥
शशाक दीनतामाप्तो नेक्षितुं नाभिभाषितुं ॥ १९ ॥
तं म नुष्येश्वरं दृष्ट्वा तथारूपं भयावहं ॥
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगं[2] ॥ २० ॥
प्रां ज लिः प्राह कैकेयीं मम वाऽन्यस्य वाऽऽगसा ॥
क्रुद्धः प्रभुस्तदाचक्ष्व मातरेनं प्रसादय ॥ २१ ॥
स्व य माहाऽतिधृष्टा सा नायं क्रुद्धो नराधिपः ॥
राम व्यसनमप्यस्य न च किंचन विद्यते ॥ २२ ॥
रा ज श्रेष्ठः कुमाराय त्वद्भयाद्वक्ति न स्फुटं ॥
प्रियं त्वामप्रियं वक्तुं नास्य वाणी प्रवर्तते ॥ २३ ॥
त्वं य न्मह्यमनेनास्ति स्वयं राम प्रतिश्रुतं[3] ॥
तदवश्यं कुरु क्षिप्रं पितुरानृण्यमाप्नुहि ॥ २४ ॥
पु रा मह्यं वरं दत्त्वा स्वयं मामभिपूज्य च ॥
स पश्चात्तप्यते राम यथान्यः प्राकृतस्तथा ॥ २५ ॥
म म राम प्रतिज्ञाय ददामीति वरं प्रभुः ॥
स निरर्थं गतजले सेतुबंधनमिच्छति ॥ २६ ॥

---

१ त्वरायुक्त २ सर्प ३ वचन दिलें.

तां श्रीमानब्रवीद्रामो मातर्वाक्यात्प्रभोरहं ॥
भक्षयेयं विषं तीक्ष्णं पतेयं पावकेऽर्णवे ॥ २७ ॥
ध रा पतेर्वचो ब्रूहि मातर्यदभिकांक्षितं ॥
करिष्ये प्रतिजाने च रामोद्विर्नाभिभाषते ॥ २८ ॥
तं म होग्रमतिः प्राह राज्ञा दत्तौ वरौ मम ॥
पुरा देवासुरे युद्धे मया गुप्तेन संकटे ॥ २९ ॥
अ त्र वशमर्दापोऽयं भरतस्याभिषेचनं ॥
तत्र मे याचितो राम गमनं तव कानने ॥ ३० ॥
स य द्यसि निदेशे त्वं राज्ञाऽनेन प्रतिश्रुतं ॥
कुर्वरण्य प्रवेष्टव्यं चतुर्दश समास्त्वया ॥ ३१ ॥
त्य रा ज्ञानमृतं कर्तुं जटाचीरधरोभव ॥
सप्त सप्त च वर्षाणि दंडकारण्यमाश्रितः ॥ ३२ ॥
ग म न त्वमर्योध्यातः कुर्वन्नेव वनं प्रति ॥
युवराजोऽस्तु भरतः सैसंसंधा पिता तव ॥ ३३ ॥
त्व त नप्रियकृद्रामः प्रोवाचांब स्वयं कुतः ॥
राज्ञा नाज्ञाप्यते वाचा भरतस्याभिषेचनं ॥ ३४ ॥
प्रि य मस्य भवत्याश्च कर्तुं मातरहं धनं ॥
प्राणान्सीतामपि भ्रात्रे दद्यां त्वत्प्रेरितः सुखं ॥ ३५ ॥
भु ज गीवोग्ररूपा सा पुनरूचे गते त्वयि ॥
रामाय तव तातोऽद्य न वै स्नास्यति भोक्ष्यते ॥ ३६ ॥
श य ने न्यपतद्राजा तच्छ्रुत्वाऽश्रुपरिप्लुतः ॥
धिक्कष्टमिति निश्वस्य कैकेय्या वागिषुक्षतः ॥ ३७ ॥
तं रा जान समुत्थाप्य कैकेय्याऽभिप्रचोदितः ॥
कैशयेवाहतो वाजी रामो गंतुं कृतत्वरः ॥ ३८ ॥
ता म ब्रवीदर्थपरोनाहं मातरसंशयं ॥
विद्धि मामृषिभिस्तुल्यं विमलं धर्ममास्थितं ॥ ३९ ॥

---

१ सर्प २ सत्यवचन ३ सत्यप्रतिज्ञ ४ चाबूक.

या श्री मतोऽस्य प्रीतिः सा मया कार्या निजासुभिः ॥
नह्यतो धर्मचरणं किंचिदस्ति महत्तरं ॥ ४० ॥
त्व ग यानधुनैवात्र भरस्या वचनादहं ॥
वने वत्स्यामि विजने वर्षाणि हि चतुर्दश ॥ ४१ ॥
क्ष म स्व तातकैकेयि यावत्त्वां पुत्रवत्सलां ॥
कौसल्यामहमापृच्छ्य सीतां चानुनयाम्यहं ॥ ४२ ॥
वि ज नं दंडकारण्यं गत एवाहमाज्ञया ॥
शुश्रूषस्व नृपं कष्टं परमं चरमं वयः ॥ ४३ ॥
न य विदमीत्ताधुर्भरतो न रतोऽपथि ॥
शुश्रूषामस्य सततं यथा कुर्यात्तथा कुरु ॥ ४४ ॥
स रा मस्य वचः श्रुत्वा भृशं दुःखगतः पिता ॥
शोकादशक्नुवन् वक्तुं प्ररुरोद महास्वनं ॥ ४५ ॥
न म स्कृत्य नृपं स्त्रैणं कैकेयीमपि दुर्धियं ॥
रामः प्रदक्षिणीकृत्य मानुरातिंकमाययौ ॥ ४६ ॥
तं ज नन्या गृहं यातं कुपितो लक्ष्मणोऽन्वगात् ॥
कैकेयीं तद्वशं तातं हंतुकामो महाबलः ॥ ४७ ॥
प्रि य पुत्राऽथ कौसल्या पतितं पादयोः सुतं ॥
आलिंग्य मूर्ध्न्यवघ्राय ददावाशिषमुत्तमां ॥ ४८ ॥
वि ज नं दंडकारण्यं प्रस्थितो राघवोऽब्रवीत् ॥
गमिष्यामि वनं मातर्मामनुज्ञातुमर्हसि ॥ ४९ ॥
प्र य च्छति महाराजो भरताय वसुंधरां ॥
मां पुनर्दंडकारण्यं विवासयति तापसं ॥ ५० ॥
ची रा जिनधरो मातश्चतुर्दश समा वने ॥
वन्येन वृत्तिं कर्ताऽहं कैकेय्याःप्रियकारणात् ॥ ५१ ॥
सा म हत्यप्रिये वाक्ये श्रुते राह्यतिवत्सला ॥
सहसा महसा त्यक्ता पपात भुवि मूर्छिता ॥ ५२ ॥

---

१ शेवटचें २ स्त्रीवश ३ समीप ४ उपजीविका ५ उत्साह.

तां श्री मान्यातरं रामः क्षिप्रमुत्थाप्य विन्हलां ॥
सांत्वयामास सौमित्रिमपि तातत्रधोद्यतं ॥ ५३ ॥
प रा क्रमस्य नत्तायं न कालः पितुराज्ञया ॥
गमिष्यामि वनं श्रेयः पुत्रस्यैकं गुरोर्वचः ॥ ५४ ॥
रा म मामहिताचारा कैकेयी दुर्वचः सदा ॥
श्रावयिष्यति तन्नाहं सोढुं शक्ता कथंचन ॥ ५५ ॥
व्र ज तस्तव मां त्यक्त्वा नैष्ठुर्यं भविता परं ॥
वत्स त्वया विना नाहं जीविष्यामि प्रसीद मे ॥ ५६ ॥
न य मामपि धर्मज्ञ यशस्ते भविताऽनघ ॥
इत्यादि करुणं श्रुत्वा रामो मातरमब्रवीत् ॥ ५७ ॥
त्वं रा ज्ञि राज्ञि कैकेय्या हृदि दुर्वागिषुक्षते ॥
मया च रहिते वृद्धे न प्रेम शिथिलीकुरु ॥ ५८ ॥
प्र म दानां कुलीनानां पत्युर्नान्या गतिर्हिता ॥
एवमुक्त्वाऽसकृद्रामो नत्वा पादौ विनिर्गतः ॥ ५९ ॥
स ज गामाथ निलयं सीतायाः रघुसत्तमः ॥
कृतस्वस्त्ययनो मात्रा तां च कृत्वा प्रदक्षिणं ॥ ६० ॥
प्रि य सत्तम नो छत्रं न वालव्यजने सिते ॥
कुतस्तुतस्त्वं नासीति कांतं पप्रच्छ जानकी ॥ ६१ ॥
रा ज पुत्रि महावंशप्रभवे धर्मचारिणि ॥
शृणु तत्रभवांस्तातः प्रव्राजयति मां वने ॥ ६२ ॥
प्रि य या खलु कैकेय्या पुरा दत्तौ वरौ प्रभुः ॥
याचितस्तत्र चैकेन भरतस्याभिषेचनं ॥ ६३ ॥
चो रा जिनभृतोऽन्येन मम प्रव्राजनं वने ॥
चतुर्दशाहि वर्षाणि वस्तव्यं दंडके मया ॥ ६४ ॥
प्र म दे कानन याते मयि तापससेविते ॥
व्रतोपवासपरया भवितव्यं त्वयाऽनघे ॥ ६५ ॥

---

१ गृह २ केसांची चवरी.

स श्री मान्कल्य उत्थाय पिता मम जनेश्वरः ॥
वंदितव्यस्त्वया माता कौसल्या चान्यमातरः ॥ ६६ ॥
तौ रा जपुत्रौ भरतशत्रुघ्नौ मम सुप्रियौ ॥
भ्रातृ-पुत्रसमौ देवि द्रष्टव्यौ प्रीतये मम ॥ ६७ ॥
न म नागपि कर्तव्यं विप्रियं भरतस्य ते ॥
सहि राजा च वैदेहि देशस्य च कुलस्य च ॥ ६८ ॥
सा ज नकात्मजा क्रुद्धा प्रणयादिदमब्रवीत् ॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा ॥ ६९ ॥
नि य मादुपजीवंति स्वं स्वं भाग्यं न चेतरत् ॥
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ ॥ ७० ॥
श्री रा तश्चाहमादिष्टा गुरुभिस्त्वमिव ध्रुवं ॥
न पिता नात्मजो माता स्त्रीणामेका पतिर्गतिः ॥ ७१ ॥ —
त्व म द्यैव वनं दुर्गं प्रस्थितो यदि राघव ॥
अग्रतस्ते गमिष्यामि मृद्नती कुशकंटकान् ॥ ७२ ॥
ग ज गामिनि मा मैवं वद दुःखतरं वनं ॥
इत्युवाचासकृद्रामो न नेतुमकरोन्मनः ॥ ७३ ॥
न य मां वीर विस्रब्धः पापं मयि न विद्यते ॥
यदि नेच्छसि मां नेतुं मरिष्यामि त्वया विना ॥ ७४ ॥
रा ज कन्येति शोकार्ता विलप्य करुणं बहु ॥
पतिमालिंग्य बाहुभ्यां कंठे चुक्रोश सुस्वरं ॥ ७५ ॥
आ प तांक्षि प्रियेऽहं त्वां सह नेष्यामि सर्वथा
त्वं हातुं न मया शक्या प्रीतिरात्मवता यथा ॥ ७६ ॥
य रा देहेऽद्य सर्वस्वं क्षिप्रं ब्राह्मणसात्कुरु ॥
इत्युक्ता जानकी पत्या कृतवत्यखिलं तथा ॥ ७७ ॥
प्रे म याधिपतेःसाक्षाद्धनेश इव भक्तिमान् ॥
रामस्य चरणौ गाढं निपीड्योवाच लक्ष्मणः ॥ ७८ ॥

---

१ मतःकार्ये २ क्षिन.

भो: श्री मन् रामभद्रार्य स्वानुगं नय मामपि ॥
इत्युक्तवत सौमित्रिं कौसल्येयोऽब्रवीदिदं ॥ ७९ ॥

धी रा यॅव्रत वत्स त्व मम प्राणसमः सखा ॥
कौसल्यांच सुमित्राच वद कोऽत्र भरिष्यति ॥ ८० ॥

त म य प्राह कौसल्या सुमित्रां भरतः स्वय ॥
/ तवैव तेजसा राम पूजयिष्यत्यसशय ॥ ८१ ॥

ते ज सा त वधिष्यामि नोचेदत्र न सशयः ॥
कौसल्या बिभृयादार्या सहस्र मद्विधानपि ॥ ८२ ॥

न य ज्ञा स्वस्य मातुश्च मम सा भरणक्षमा ॥
यस्याः सहस्र ग्रामाणा सप्राप्तमुपजीविभि. ॥ ८३ ॥

श रा सन समादाय खनित्र पिटकौ धर. ॥
अग्रहस्ते गमिष्यामि पथान त्वां प्रदर्शयन् ॥ ८४ ॥

श्र म आर्य न मेऽरण्ये भविता दयया तव ॥
कृत्य सर्व करिष्यामि जाग्रत. स्वपतश्च ते ॥ ८५ ॥

व्र ज वत्साशु पृच्छ त्व सर्वमेव सुहृज्जन ॥
ये च राज्ञे ददौ दिव्ये महात्मा वरुणः स्वय ॥ ८६ ॥

सौं य कासनरत्ने च खड्गावक्षयसायकौ ॥
तूणावाचार्यगेहस्थमानयैतद्धन वर ॥ ८७ ॥

स ज ग्राहायुधं सर्वं गुरुमागत्य लक्ष्मण ॥
श्रीराम दर्शयामास पुनस्त राघवोऽब्रवीत् ॥ ७८ ॥

स्व य मद्य धन यन्मे त्वया सह परतप ॥
द्विजेभ्यो दातुमिच्छामि लक्ष्मणानुमतेन ते ॥ ८९ ॥

घ रा सुरवर वत्स सुयज्ञ गुरुनदन ॥
त्वमानयान्याश्चाप्यत्र सर्वान् वत्सोपजीविन ॥ ९० ॥

त म हर्षयुत गत्वा सौमित्रि प्राह मदिर ॥
सखे सुयज्ञ रामस्य पश्य दुष्करकारिणः ॥ ९१ ॥

---

१ राम २ कुद्दल ३ पाटी ४ 'अह' असाही पाठ आहे ५ मनुष्यभेद.

स श्री मत्सदनं प्राप्तः शीघ्रं सौमित्रिणा सह ॥
तं नत्वा पूजयामास स सीतोलक्ष्मणाग्रजः ॥ ९२ ॥

हा रा दिभिरलंकारै रामस्तं प्रत्यपूजयत् ॥
तत्पत्न्यै प्रददौ सीता स्वभूषाः शीलभूषणा ॥ ९३ ॥

स म स्तमन्यद्विप्रेभ्यो धनं रामःसलक्ष्मणः ॥
प्रददावुपजीविभ्यः सीताऽपि प्रीतमानसा ॥ ९४ ॥

तौ ज ग्मतुरथो द्रष्टुं पितरं सीतया सह ॥
पद्भ्यामेव महासत्वौ सुमुखौ रामलक्ष्मणौ ॥ ९५ ॥

दे य स्यपौरप्रमुखो जनः सर्वोऽपि राघवौ ॥
जानकींच तथा दृष्ट्वा बभूवातीव विव्हलः ॥ ९६ ॥

न रा नार्योऽपि राजानं कैकेयीं भृशदुःखिताः ॥
गर्हयामासुरत्यंतं श्रीरामस्तवनादृताः ॥ ९७ ॥

स म र्थं पालनेऽस्माकं रामं राजीवलोचनं ॥
गच्छंतमनुगच्छामो वयमित्यब्रुवन् जनाः ॥ ९८ ॥

स ज नन्या गृहं गत्वा दृष्ट्वा पितरमाकुलं ॥
सुमंत्रं राघवः प्राह पितुराख्याहि मामिति ॥ ९९ ॥

न य ज्ञः स सुमंत्रस्तं संबोध्य प्राह भूपतिं ॥
द्वारि तिष्ठत्ययं रामस्त्वामिदानीं दिदृक्षते ॥ १०० ॥

त्वां ज नेश्वरमायातः प्रष्टुं पृष्ट्वा सुहृज्जनं ॥
वनं गंतुं सुतः सिद्धस्तवसत्यपराक्रमः ॥ १०१ ॥

तं य त्ना दशरथोराजा सुमंत्र शृणु मे वचः ॥
दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि राघवं ॥ १०२ ॥

दा रा स्ते तत्र भूभर्तुराज्ञयाऽऽज्ञां सुमंत्रतः ॥
कौसल्यां परिवार्यांता आजग्मुस्ताम्रलोचनाः ॥ १०३

स म हिष्या तया सार्धत्रिशत्या योषितां वृतः ॥
उवाच राजा तं सूतं सुमंत्रानय मे सुतं ॥ १०४ ॥

---

१ मित्र २ 'त्रिशत्=स्त्रीभिरावृतः' इति वा पाठः

त श्री मत सुत दृष्ट्वा सूतानीत महीपति ॥
उत्पपातासनात्तूर्णमार्त स्त्रीजनसंवृत ॥ १०५॥
औ रा दालिंगन कर्तुमभिदुद्राव वेगत ॥
तमेस प्राप्य दु खार्त पपात भुवि मूर्च्छित ॥१०६॥
त म सा व्याकुल रामोऽप्यपतत्त सलक्ष्मण ॥
स्त्रीसहस्रनिनादोभूद्धाहा रामेति वेश्मनि ॥ १०७॥
रा ज श्रेष्ठ परिष्वज्य भुजाभ्या रामलक्ष्मणौ ॥
सीता च नि यु पर्यंके रुदतस्त शनैस्त्रय ॥१०८॥
श य ने लब्धसज्ञ त राम प्रोवाच साजलि ॥
आपृच्छे त्वा महाराज पश्य त्व कुशलेन मा ॥ १०९॥
मा रा जन्नियमन्वेतु जानकी भवदाज्ञया ॥
लक्ष्मण चानुजानीहि वार्यमाणो नवेच्छत ॥११०॥
त म हीश उवाचेन कैकेय्या वरदानत ॥
मोहित मा निगृह्य त्व भव राम भुव पति ॥ १११ ॥
प्रा ज लिस्तमुवाचासौ राम सत्यपराक्रम ॥
भवान् वर्षसहस्राय महाराज धरापति ॥ ११२ ॥
प्रि य क दण्डकारण्य राज्य नाद्य मुदे मम ॥
त्व पादौ ग्रहीष्यामि प्रतिज्ञा ते पुन पित ॥ ११३ ॥
र ज नीं त्वमिमामेका पुत्र मा गच्छ सर्वथा ॥
त्वया सहाह मोक्ष्यामि दीनो राजा ब्रवीदिति ॥ ११४॥
प्रि य न सीतदाश्चर्यं नैव ज्येष्ठ सुतोमम ॥
अपानृतकथ यच्च तात मा कर्तुमिच्छसि ॥ ११५॥
त रा म प्राह ये भेदा न गुणा सन्तु ते पित ॥
वृणे गमनमेवात सर्वकामातिरिक्त मे ॥ ११६ ॥
नि भ र्यो मास्तु वसुधा भरताय प्रदीयता ॥
भवा सत्यप्रतिज्ञोस्तु वन गच्छाम्यह पित ॥ ११७ ॥

श्री मान् सुतमालिंग्य श्रुत्वैनं मूर्च्छितोऽभवत् ॥
देव्यः समस्ता रुरुदुः कैकेयीं तामृते भृशम् ॥११८॥
क्रूरमनार्यां कैकेयीं सुमंत्रः प्राह किं त्वया ॥
प्रारब्धं व्यसने देवि मा मज्जय रघोःकुलम् ॥ ११९ ॥
न म हीं भरतोजातु त्रातुमर्होग्रजे सति ॥
वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥१२०॥
द्विज स्ते विषये कश्चिन्नात्र ये वस्तुमर्हति ॥
पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चांततः॥ १२१ ॥
त्वं य त्यत्युर्न मरणाद्भीता न्हीता महाजनात् ॥
दुःशीलं तव मन्येहं यथा मातुस्तथैवहि॥ १२२ ॥
धीरा वदन्ति निंबान्न स्रवेत्क्षौद्रं नतन्मृषा ॥
पितॄन् समनुजायंते नरा मातरमंगनाः ॥ १२३ ॥
स म क्षं नृपतेरित्थं सुमंत्रकृतगंजनो ॥
न तत्याजाग्रहं दृष्ट्वाब्रवीद्दशरथस्ततः ॥ १२४ ॥
रं क नायास्य सूत्सेदा वणिजोवारयोषितः॥
सेना व्याधाश्च निर्यांतु धनसंञ्चाजराशयः ॥ १२५॥
भ य माप्यात्रपोवाच नृपेत्रं क्रियते यदि ॥
निःसारं भरतो राज्यं शून्यं नाभिमपत्स्यते॥१२६ ॥
तां ज गत्यधिपःप्राह पूर्वमेव ममाहिते ॥
सर्वं त्यक्त्वा वनं रामो यात्विखेवं न कि वृतम्॥१२७॥
सा य शस्कारिणी प्राह तव वंशे समंजसम् ॥
यथा तत्याज सगरस्त्वमप्येनं तथा त्यज ॥१२८॥
स रा जा तद्वचःश्रुत्वा तां धिगित्यब्रवीत्तदा ॥
कैकेय्याःसेवकजनः सर्वोपि व्रीडितोऽभवत् ॥१२९॥
तां म हामात्रउद्गोपःसिद्धार्थोऽप्यब्रवीत् हितम् ॥
तदप्यणु प्रभोःपादा पादानतया न तया श्रुतम् ॥१३०॥

---

१ मध २ निद्रा ३ प्रधन.

स श्री मान् सगरः पौरवालब्धं सूनुमभ्यजत् ॥
रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ १३१ ॥
न रा घवे वय दोष पश्यामो यदि पश्यसि ॥
त्वमद्यब्रूहि तत्तेन तदा रामो विवास्यते ॥ १३२ ॥
तां म नुष्येश्वरोऽथाह भुंक्ष राज्यं यथासुखम् ॥
अनुव्राजिष्याम्यद्याहं रामं सर्वैर्जनैः सह ॥ १३३ ॥
रा ज न्मे सक्तराज्यस्य किं सैन्येन धनेन वा ॥
त्यक्त्वा गजं कः कक्ष्यायां कुरुते मानसं कृती ॥ १३४ ॥
स्व य मेवानुजानामि सर्वं प्रीतेन चेतसा ॥
खनित्रपिटके चोभे चीराण्येत्रानयतु मे ॥ १३५ ॥
सा रा म इत्युक्तवति स्वयं केकयकन्यका ॥
चीराण्याहृत्य तं प्राह परिधत्स्वेति निस्त्रपा ॥ १३६ ॥
स म हार्हमवाक्षिप्य सूक्ष्म वासो रघूत्तमः ॥
मुनिवस्त्रमनैस्ताथ लक्ष्मणोऽप्युरुलक्षणः ॥ १३७ ॥
न ज ग्राह न सा चीरं सीता कौशेयवासिनी ॥
परं तत्प्रेक्ष्य सन्त्रस्ता पृषती वागुरामिव ॥ १३८ ॥
भ य लज्जाकुला राममुवाचाकुशला सती ॥
कथन्नु चीरं बध्नाति मुनयो वनवासिनः ॥ १३९ ॥
नि ज कंठे सती कृत्वा चीरं तस्थौ तदा प्रभुः ॥
तस्या बबंध तत्तूर्णं कौशेयस्योपरि स्वयम् ॥ १४० ॥
न य नै र्मुमुचुस्तोयं तदा रामस्य मातरः ॥
ऊचुर्नेत्स नियुक्तेयं वनवासे न मा नय ॥ १४१॥
धी रा ग्रणीर्वसिष्ठस्तां निर्भर्त्सयनयमार्थिताम् ॥
कैकेयीमब्रवीत्क्रुद्धः सवाग्मी नयधर्मवित् ॥ १४२ ॥
न म हीं भरतः पित्रा प्रदत्तां शास्तुमिच्छति ॥
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ १४३ ॥

---

१ध्वद २ गेलक्षा ३ हरिणी ४ कुडें.

स श्री मानेवमुक्त्वा तां वहुसद्भृत्ववर्जिताम् ॥
सीतामप्याह च से त्वं चीरं मा स्पृश जातुचित् ॥ १४४ ॥
गु रा वेवं वदत्यार्तो राजा धिकृत्य तां स्वयम् ॥
तस्यावाक्-शिरास्तुष्णीं रामस्तमिदमब्रवीत् ॥ १४५ ॥
म म धार्मिकमातेयं कौसल्या त्वां न गर्हते ॥
मया हीनामिमां देव भूयः संमंतुमर्हसि ॥ १४६ ॥
रा ज श्रेष्ठ इति श्रुत्वा वनं संप्रस्थितं सुतम् ॥
नाशक्नोद्द्रष्टुमत्यार्तो विललापातिवत्सलः ॥ १४७ ॥
अ य सा घटितं नूनं हृदयं मे न दीर्यते ॥
विनत्सा वहवो जीवा कृतास्तन्मामुपस्थितम् ॥ १४८ ॥
न रा धिपो विलप्यैवं सुमंत्रं प्राह मे रथम् ॥
आनय त्वमितो नेतुं रामं जनपदांतरम् ॥ १४९ ॥
स म यत्नस्तथा चक्रे तं पुनः प्राह पार्थिवः ॥
रथे स्थापय जानक्या वासांस्याभूषणानिच ॥ १५० ॥
रा ज पुत्रीं नतां श्वश्रूः कौसल्या मणिभूषणैः ॥
भूषयित्वा समालिंग्य साश्रु प्राह मनस्विनीं ॥ १५१ ॥
प्र य ता भज भर्तारं पतिरेव गतिः स्त्रियः ।
तव देव समस्तेप सधनो निर्धनोऽपि वा ॥ १५२ ॥
भ ज नीयोऽवमंतव्यो नायं प्रव्राजितोऽपि ते ॥
जनकस्य सुताऽसिर्तं धर्मं जानासि शाश्वतं ॥ १५३ ॥
सा य ज्ञक्षितिसंभूता श्वश्रूं प्रोवाच सांजलिः ॥
करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् ॥ १५४ ॥
तां रा मः प्रांजलिः प्राह मातरं पुत्रवत्सलाम् ॥
अंब मा दुःखिता भूत्वा पश्येस्त्वं पितरं मम ॥ १५५ ॥
रा म ग्रमिह संप्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥
सुप्तायास्ते गमिष्यंति नव वर्षाणि पंच च ॥ १५६ ॥

---

१ कदाचित् २ स्वर्तां मान केलेला ३ दुसरा देश.

सु श्री रेवं मनुमुक्त्वा मातृन्या नतोऽब्रवीत् ॥
संवासात् परुषं किंचिदज्ञानादपि यत्कृतम् ॥ १५७॥

आ रा धने यन्स्खलितं मातरः शोऽभूषणाः ॥
तन्मे समुपजानीत सर्वांश्चामंत्रयामि वः ॥१५८ ॥

स म स्तास्ता इति श्रुत्वा रामस्य मांजलेगिरम् ॥
रुरुदुर्वस्सज्ञा रामास्तस्मै मददुराशिषः ॥ १५९ ॥

प ज नानिलशीतांबुद्धृतमोहं धरापतिम् ॥
नत्वा सौमित्रिसीताभ्यां सह रामो विनिर्ययौ ॥ १६० ॥

न य त्वात्प्रणतं पुत्रं सुमित्रा पुत्रवत्सला ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ॥ १६१ ॥

वं रा जधानीमटवीं विद्धि शत्रुघ्नपूर्वज ॥
अश्रुपूर्णमुखीत्याह प्रस्थितं निर्जनं वनम् ॥ १६२ ॥

अ म त्वात्मा तथेत्युक्त्वा नत्वा सर्वा नृपांगनाः ॥
रामेण सीतया सार्धमारुरोह रथोत्तमम् ॥ १६३ ॥

म ज तूर्णमिति प्राह सुमंत्रं राम आत्मवान् ॥
यं जनेशोऽजनश्चापि क्षणं तिष्ठेत्यचोदयत् ॥ १६४ ॥

मि य पुत्राननं द्रष्टुमुत्थाय द्वारमागतः ॥
गच्छत्येव द्रुतं रामे पपात भुवि भूपतिः ॥ १६५ ॥

न ज नन्या न तातस्य न मित्राणां तथा वचः ॥
तत्पूर्वे मानयामास रामः श्रुत्वाप्यकर्णवत् ॥ १६६ ॥

ग य नं पतितं भर्ता क्षिप्रो दशरथात्मजैः ॥
कौसल्या पतिमुत्थाप्य समाश्वासयदाकुलं ॥१६७॥

रा रा ज्यस्य भुजं धृत्वा दक्षिणं मंदिरांतरे ॥
नेतुं प्रचलिता वामं कैकेयी चाधिगच्छता ॥१६८

अ म नोऽलपीत्स्त्वा तामाह राजा न मां स्पृश ॥
नाहं त्वां द्रष्टुमिच्छामि न त्वं भार्या न बांधवी ॥१६९॥

---

१ कौसल्यारामे.

स श्री ला भात्मतीतः स्याद्दूरतश्चेद्दुराशये ॥
यन्मे प्रदद्यात्सौम्यर्थं मा मां तद्दत्तमन्वगात् ॥ १७० ॥

का रा, मे वत कैकेय्या गेहमेतदसंशयम् ॥
मां राममातुः सदनं नयन्त्वित्यब्रवीन्नृपः ॥ १७१ ॥

स म हिष्या गृहे नीतः शायितः शयनोत्तमे ॥
अपश्यद्रामरहितं तदचंद्रमिवांबरम् ॥ १७२ ॥

र ज न्यां चिंतयन् रामं भुजमुद्यम्य भूपतिः ॥
उच्चैः स्वरेण प्राक्रोशद्धा राम विजहासि नौ ॥ १७३ ॥

तं य शस्विनमध्यास्मयोध्यां पुनरागतं ॥
दृष्ट्वालिंग्य भविष्यंति प्रहृष्टा ये त उत्तमाः ॥ १७४ ॥

न रा धीशो वदन्नित्थं महिषीमाकुलोऽब्रवीत् ॥
न त्वां पश्यामि कौसल्ये साधु मां पाणिना स्पृश ॥१७५ ॥

म म देव्यलिनी पद्मं महावातल्हतं यथा ॥
वत्सं तेऽनुगता दृष्टिरद्यापि न निवर्तते ॥१७६ ॥

सा ज नन्यपि रामस्य विललापाकुला शुचा ॥
सभार्यं सानुजं रामं पश्येयं किमहं नृप ॥ १७७ ॥

द य या सक्तया नूनं मया राजन्पुरा बलात् ॥
वत्सेषु पातुकामेषु मातॄणां शातिताःस्तनाः ॥१७८ ॥

द्वि[२] ज राजमिवाल्हादप्रदं विद्याविशारदम् ॥
नैकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १७९ ॥

व य स्ये च प्रिया साध्वी सुमित्रा रामसंस्तवैः ॥
शमयामास कौसल्याशोकमश्रिमिवांबुभिः ॥ १८० ॥

चो रा जिनधरं रामं गच्छंतमपराजितम् ॥
सीतेवानुगता लक्ष्मीस्तस्य किं नाम दुर्लभं ॥ १८१ ।

हि म रश्मिस्तथा युक्तशीतोष्णोऽतिसुखोऽनिलः ॥
शुचिं सेविष्यते रामं न रविस्तापयिष्यति ॥ १८२ ॥

---

१ उभाल्न २ चद्र.

म श्री मान् गाधिजो यस्मै सर्वास्त्राण्याशिषो ददौ ॥
तस्य के न भविष्यन्ति नम्राः सम्राट् तवात्मजः १८३ ॥
पौ रा राम पुरीं त्यक्त्वानुगताः सर्व एव ते ॥
पांथा वटामिव श्रान्ता वार्योघा इव वारिधिम् ॥ १८४ ॥
त म सातीरमागम्य पीत्वा तोयं द्रुमच्छदैः ॥
सुप्तानुजकृते रामः सुष्वाप शयने प्रभुः ॥ १८५ ॥
स ज नान्वृक्षमूलेषु सुप्तानालोक्य दुःखितान् ॥
अपृष्ट्वैव जगामाशु दर्शितोदग्गतिः क्षणं ॥ १८६ ॥
द य मानमपि त्यक्तस्नेहं मत्वा रघूत्तमम् ॥
पौरा वदंतो निःश्रीकामयोध्यामगमन् शनैः ॥ १८७ ॥
प रा वृत्य विना राममागतान्स्वपतीन् स्त्रियः ॥
रुदत्योगर्हयामासुरात्मजेष्वप्यनादराः ॥ १८८ ॥
गो म तीमतरत्तीर्त्वा पूर्वं वेदश्रुतिं नदीम् ॥
उत्तीर्य स्यंदिकां रामः कोसल्यानस्यगाद्द्रुतं ॥ १८९ ॥
श्री ज न्हुकन्यामगमन् मुन्याश्रमविभूषिताम् ॥
ह/ शंकरस्य जटाजूटाद्भ्रष्टां सागरतेजसा ॥ १९० ॥
म य ष्र्नां सरूतेः प्राप्य शृंगवेरपुरं प्रति ॥
तत्रेंगुदीतरोर्मूले रथात्प्रभुरवातरत् ॥ १९१ ॥
रा ज नैः सह धर्मात्मा रामस्यात्मसमः सखा ॥
गुहो राजा निषादानामाजगाम समुत्सुकः ॥ १९२ ॥
तं य शस्वी स्वयं रामः समालिंग्याब्रवीदिति ॥
प्रियैः पितुर्हयैस्सूतैरहमंग सुपूजितः ॥ १९३ ॥
स रा त्र्यामुदकं प्राश्य सुप्ते रामे धरातले ॥
गुहः सलक्ष्मणोऽतिष्ठद्विनिद्रश्चापबाणभृत् ॥ १९४ ॥
र म णीयगुणः प्रातः सुमंत्रं बहु सांत्वयन् ॥
पितुः समीपं याहीति प्रोवाच विरहातुरम् ॥ १९५ ॥

---

१ वृक्षविशेष ( इंगणबद. )

स श्री मान् मेटट्रुम्धेन गुहानीतेन राघवः ॥
स लक्ष्मणो जटाः कृत्वाऽतरन्नावा समुद्रगां ॥ १९६ ॥
य रा हादीन्मृगान् हत्वा चतुरः स कृताशनः ॥
न्यग्रोधमूले सुप्त्वाथ प्रातर्निर्गम्य राघवः ॥ १९७ ॥
स म दर्शिनमर्चार्हं भरद्वाजं रघूद्वहः ॥
प्रयागे सायमासाद्य ननाम परया मुदा ॥ १९८ ॥
र ज नीमवसद्रामो भरद्वाजाश्रमेऽर्चितः ॥
चित्रकूटमगात्तेन मुनिना मोक्तवर्त्मना ॥ १९९ ॥
ती य मस्य स्वसारं तां तीर्त्वा काष्ठैः कृतप्लवी ॥
तस्यास्तीरे निशां नीत्वा चित्रकूटं नगं गतौ ॥ २०० ॥
ध रा मवराम्नत्वा वाल्मीकिप्रमुखान्प्रभुः ॥
तत्राकरोत्पर्ण-शालां लक्ष्मणो भ्रातुराज्ञया ॥ २०१ ॥
॥ म स्तं रामवृत्तान्तं गुहचारानिवेदितं ॥
ज्ञात्वा सुमंत्रः साकेतं प्रययौ गाढदुर्मनाः ॥ २०२ ॥
रा ज मार्गेण सचिवः सुमंत्रः पिहिताननः ॥
यत्र राजा दशरथस्तदेवोपययौ गृहं ॥ २०३ ॥
आ य ताक्ष्यस्तु तां दृष्ट्वा सूतं रामं विनाऽगतं ॥
रुरुदुर्नृपतेर्भार्या मूर्छितोन्यपतन्नृपः ॥ २०४ ॥
र ज न्यामथपष्ठ्यां स शापं स्मृत्वा तमात्मनः ॥
महिर्षी कथयामास राजा दशरथः स्वयं ॥ २०५
क्ष य प्रियेण सत्वानां निशायां शब्दवेधिना ॥
शूद्रा कुक्षिभवो वैश्यपुत्रो देवि मया हतः ॥२०६॥
मां रा ज्ञि तत्पिता प्राह कुपितः पुत्रघातिनं ॥
यथाहं पुत्रशोकेन त्वमप्यार्तो मरिष्यसि ॥ २०७ ॥
स, म मासून् मुनेः शापः प्राप्तो हर्तुमसंशयः ॥
अंजलिं ते करोम्यद्य राज्ञि मंतुं क्षमस्व मे ॥२०८॥

---

१ वड २ नौका ३ अपराध.

वि श्री रत्नाकुले राजा हा रामेति वदन् मुहुः ॥
अर्धरात्रे स्मरन् पुत्र जीवितात्मुपागमत् ॥ २०९ ॥
त रा त्र्यन्ते मृतं ज्ञात्वा रुरुदुः सकलाः स्त्रियः ॥
भूयः शोकार्णवे मग्न सर्वमन्तःपुरं पुरं ॥ २१० ॥
त म ह्या पालक तैलद्रोण्यां सनेरय साधव ॥
चक्रुर्वसिष्ठेनादिष्टाः सचिवाः कार्यमस्य यत् ॥ २११ ॥
स ज वेन पटून् दूतान् वसिष्ठः प्राहिणोत्स्वयं ॥
गत्वा भरतशत्रुघ्नावानिन्युस्ते पुरीं प्रति ॥ २१२ ॥
प्र य त्नात्सप्तभिर्गत्वा दिनैस्तावाद्भिरेव ते ॥
दूता भरतशत्रुघ्नावादाय पुनरागताः ॥ २१३ ॥
त्व रा वानेत्य मातुः स ज्ञात्वा दुष्कर्म तत्तथा ॥
गर्हयामास तां पापां भरतो भरतोर्द्धपः ॥ २१४ ॥
आ म बुद्धेऽहिते क्रूरे भूरेपा तस्य धर्मतः ॥
यः कौसल्यासुतः श्रीमांस्त्वया रामो विवासितः ॥ २१५ ॥
त्व ज गन्निद्यचरिता रामस्य त्वयि मातृधी ॥
अतोऽहं न त्यजामि त्वां दुष्टां तस्यैव गौरवात् ॥ २१६ ॥
प्र य तः सौसकृत्क्रोपात्ता धिक्कृत्यातिवशश ॥
कौसल्यां सान्त्वयामास चक्रे तातस्य सत्क्रियां ॥ २१७ ॥
स्व ज नत्या समेतां तां मथरां हन्तुमुद्यतः ॥
शत्रुघ्नं वारयामास भरतो रामसाध्वसात् ॥ २१८ ॥
गे य कीर्तिर्गुरोराज्ञां विलङ्घ्यापि महामतिः ॥
भरतस्त्यक्तराज्येहः श्रीरामं शरणं ययौ ॥ २१९ ॥
मो रा मान्यगुरुभ्रातृमातृपौरसुहृद्वृतः ॥
भरतः शृगवेरस्थगुहेन सह संगतः ॥ २२० ॥
॥ म हर्षिर्भरद्वाजः परीक्ष्य शुचिमानसः ॥
ससैन्यं पूजयामास विसर्जाग्रजप्रियं ॥ २२१ ॥

---

१ रामाच्या भक्तीं.

तं श्री मंतं चित्रकूटे ददर्श भरतोऽग्रजं ॥
पतित्वा पादयोस्तस्य रुरोदातीवभक्तिमान् ॥ २२२ ॥
पं रा सुं पितरं श्रुत्वा हातातेति भृशं रुदन् ॥
सदारः सानुजो रामस्तस्मै नद्यां जलं ददौ ॥ २२३ ॥
स म मार्क्षैर्वसिष्ठाद्यैः सचिवैर्मातृभिर्भृशं ॥
गुरुरभ्यर्थितो रामो भरतेन निवर्तनं ॥ २२४ ॥
तं . न गादानुजं रामश्चतुर्दश समा वने ॥
मया स्थेयं त्वया कार्यं राज्यं तातस्य शासनात् ॥ २२५ ॥
श्रे य एतत्परं विद्वन्सत्यं वचः पितुः ॥
प्रियमस्याश्रमे मातुर्निर्बंध तात मा कुरु ॥ २२६ ॥
भा रा पनयनं तेऽहं कर्ता पूर्णे चतुर्दशे ॥
मारोदीस्तात वर्षाणि गमिष्यंत्याशु मा शुचः ॥ २२७ ॥
तं म हा मुनयः क्षिप्रं दशकंठवधैषिणः ॥
भरतं प्रोचुरार्यस्य ग्राह्यं रामस्य ते वचः ॥ २२८ ॥
द्वि न वर्यो वसिष्ठोऽपि प्रोवाचैनं ततः प्रभुं ॥
भरतः प्रार्थयामास पादुके हेमभूषिते ॥ २२९ ॥
द प पार्थाधिरोह त्वं पादाभ्यां भक्तवत्सल ॥
एतेहि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २३० ।
ते न स्मीशः सोधिरुह्य व्यवमुच्य च पादुके ॥
प्रायच्छत्पुरुषव्याघ्रो भरताय महात्मने ॥ २३१ ॥
प प तोराममहासावहं पूर्णे चतुर्दशे ॥
नद्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशने ॥ २३२ ॥
आ रा ध्यं भरतो नत्वा रामं कृत्वा प्रदक्षिणं ॥
मूर्ध्नि ते पादुके धृत्वा प्रययौ साश्रुलोचनः ॥२३३॥
तं म हर्षि भरद्वाजं नत्वाऽयोध्यां गतो व्रती ॥
नंदिग्रामेऽवसन्मातृः संस्थाप्य पितुरालये ॥ २३४ ॥

---

१ गतप्राण.

स श्री मान् राघवो हतुर्मैद्र काक कृतागस ॥
चिक्षेपाशु कुशं ब्राह्म सयोज्य प्रियकृत् स्त्रिया. ॥ २३५ ॥
प रा भूत स बभाम सर्वत्र त्रस्तमानस ॥
ब्रह्मणो वचनाद्राम प्राणार्थी शरण गत ॥ २३६ ॥
स म येनातिकारुण्यात् सीतावचनगौरवात् ॥
रक्षितोऽस्त्राय दत्त्वैक तदक्षि प्राणसकटे ॥ २३७ ॥
द्वि ज वृद पते श्रुत्वा तत्र पीडा प्रभु खरात् ॥
रावणावरजात् पापात् जनस्थाननिवासिन. ॥ २३८ ॥
भ य द्रुतेषु विप्रेषु तत्रत्येषु गिरेस्तत
रामोऽत्रेराश्रम गत्वा प्रणनाम तमादरात् ॥ २३९ ॥
दा रा नुजान्वित राम भगवानत्रिरादृत ॥
सपृच्छ्यागीचकारातिप्रेम्णा पुत्रमिवौरस ॥ २४० ॥
स म शीला महाभागामनसूया प्रिया स्वय ॥
प्रतिगृह्णीष्व वैदेहीमिमामित्यनवीन्मुनि ॥ २४१ ॥
नि ज पत्न्या महासाध्व्या प्रभाव तपसोद्भुत ॥
रामायातावाचचक्षे शृणु वत्सेति सादर ॥ २४२ ॥
स य दा भूदनावृष्टिर्दश वर्षाणि राघव ॥
अनया तात सृष्टानि मूलानि च फलानि च ॥ २४३ ॥
भो ज ‘हुक यान्यनया स्नानार्थ च तपस्विना ॥
आहूय सहसा वत्स स्वाश्रमेऽस्मिन्प्रवर्तिता ॥२४४॥
भ य प्रशमन राम विघ्नाना लीलया कृत ॥
दशवर्षसहस्राणि तपस्तप्त पुराऽनया ॥ २४५ ॥
सु रा णामपि कार्यार्थमनयोग्रप्रभावया ॥
दशरात्र कृता रात्रि सेय मातव तेऽनघ ॥ २४५ ॥
न म स्कार्या समस्तानामिम राम तपस्विनीं ॥
अभिगच्छतु वैदेही वृद्धामक्रोधना प्रति ॥ २४७ ॥

---

१ भक्त

स श्री मान्मैथिलीमाह श्रुत्वैतन्मुनेर्वचः ॥
श्रेयोर्थं राजपुत्रि त्वमभिगच्छ तपस्विनीं ॥ २४८ ॥
ध रा कन्या तथेत्युक्त्वा मुनेः पत्नीं महासतीं ॥
अभ्यवादयदव्यग्रां स्वं नाम समुदाहरत् ॥ २४९ ॥
सा म हर्षिप्रियां नत्वा तापसीं तां दमान्विता ॥
बद्धांजलिपुटा हृष्टा पर्यपृच्छदनामयं ॥ २५० ॥
प्रां ज लिं जानकीमाह ब्राह्मणी ब्रह्मवादिनी ॥
बालाऽपि वत्से प्रौढा त्वं दिष्ट्या धर्ममवेक्षसे ॥ २५१ ॥
प्रि य मेतं त्वमेवं चेद्वर्तसे नित्यमनुव्रता ॥
शुद्धं यशश्च धर्मं च जगत्सु समवाप्स्यसि ॥ २५२ ॥
न रा धिपसुते सीते किं प्रियं करवाणि ते ॥
इति श्रुत्वा वचस्तस्याः सा तां प्रांजलिरब्रवीत् ॥ २५३ ॥
म य सर्वं प्रियं मातर्जातं त्वत्पाददर्शनात् ॥
कृतकृत्याऽस्मि ते दृष्ट्या दुर्लभोऽयमनुग्रहः ॥२५४॥
भा ज नं तां प्रसादस्य ज्ञात्वा सीतामथाब्रवीत् ॥
इदं दिव्यं वरं माल्यं भूषणान्यम्बरं वरं ॥ २५५ ॥
प्र य च्छामि गृहाण त्वमंगरागं च कन्यके ॥
शोभयिष्यसि गात्राणि सर्वमेतत्सदा नवं ॥ २५६ ॥
स ज स्तथांगरागं च वस्त्रमाभूषणानि सा ॥
प्रतिगृह्यांतिके तस्थौ बद्धांजलिरुदारधीः ॥ २५७ ॥
प्रि य मस्या मुनेः पत्न्याः कर्तुं सीता स्वयंवरं ॥
आत्मनः कथयामास पृष्टं सर्वं सविस्तरं ॥ २५८ ॥
तां रा मोऽलंकृतां दृष्ट्वा जानकीमनसूयया ॥
जहर्ष लक्ष्मणोऽप्यत्रि मुनिमापृच्छ्य निर्ययौ ॥ २५९ ॥
स म यूरमिवांभोदो मुनिसंघं प्रहर्षयन् ॥
वनं विवेश श्रीरामो मनः शुद्धं सतामिव ॥ २६० ॥

॥ इति श्रीमंत्ररामायणे रामनंदनमयूरविरचितेऽयोध्याकांडे विंशो मंत्रः ॥

---

१ उटी. २ निरोप घेऊन.

## आरण्यकांडम्.

रामः श्रीमान् स प्रविश्य दंडकारण्यमात्मवान् ॥
दर्दर्श तत्र पुण्याढ्यं तापसाश्रममंडलम् ॥ १ ॥
सुचि रा हितसंकल्पा रुचिराशि तपोधनाः ॥
श्रीरामं पूजयामासू राक्षसेभ्योऽभयार्थिनः ॥ २ ॥
जगा म तैरनुज्ञातस्तस्मादाश्रममंडलात् ॥
विराधं राक्षसं रामो ददर्शातीव भीषणम् ॥ ३ ॥
सीतां ज ग्राह सहसा सोऽभिद्रुत्य निशाचरः ॥
बाणैर्विद्धोऽपि तां त्यक्त्वा तावुभौ रामलक्ष्मणौ ॥ ४ ॥
धृत्वा य यौ बलान्न्यस्य स्कंधे बालाविवेश्वरौ ॥
रुरोद सीता शोकार्ता ततः क्रुद्धौ बलांबुधी ॥ ५ ॥
प्रव रां श्यामसिभ्यां तं चक्रतुर्बाहुवर्जितं ॥
उद्यम्योद्यम्य बाहुभ्यां तौ निष्पिपिषतुर्भुवि ॥ ६ ॥
विद्धो म मण्योपि शरैः छिन्नबाहुश्चमुष्टिभिः ॥
पार्ष्णिभिर्मर्दितो गाढं तथापि न ममार सः ॥
गाढं ज गत्पतिः कंठे पादेनाक्रम्य राक्षसम् ॥
उवाच लक्ष्मण गर्ते पिहितोऽयं मरिष्यति ॥ ८ ॥
मुक्तो य क्षेत्रशापात्तं राघवं प्राह तुंबरुः ॥
शरभंगं मुनिं गच्छ स ते श्रेयो विधास्यति ॥ ९ ॥
गर्ते ज गत्यां निक्षिप्य मृदापूर्य निशाचरम् ॥
शरभंगाश्रमं सीतामाश्वास्याभिजगाम सः ॥ १० ॥
उद ॥ रथमिवादित्यं दूरात्संप्रेक्ष्य वासवं ॥
शरभंगेन संमंत्र्य तस्मिन्नपगते प्रभुः ॥ ११ ॥
सदा रा घ्यः स्वयं रामः सदारानुजानैर्मुनिं ॥
स्वनाम संकीर्त्य ततो ननाम विनयेन तम् ॥ १२ ॥
कोऽप म आगतो देव इति पृष्टो महामुनिः ॥
शरभंगोऽब्रवीद्राम मां नेतुं हरिरागतः ॥ १३ ॥

---

१ पावरा भाऊ.

सोहं श्री मंतमभ्यर्च्य त्वां प्रियातिथिमागतम् ॥
ब्रह्मलोकं गमिष्यामि त्वत्समक्षं जगद्गुरो ॥ १४ ॥

इति रा जीवनेत्रं तमुक्त्वा संपूज्य सादरम् ॥
प्रविश्याग्नौ क्षणादेव दिव्यरूपोऽभवन्मुनिः ॥ १५ ॥

पिता म हादिभिर्देवैर्देवर्षिभिरुपागतैः ॥
नीतो विमानमारोप्य रामदर्शननिर्वृतः ॥ १६ ॥

समा ज स्तत्र तत्रस्थमहर्षीणां रघूत्तमं ॥
सत्कृत्य दर्शयामास राक्षसैर्निहतान्मुनीन् ॥ १७ ॥

तेभ्यो प शास्त्रिप्रवरोऽभयं दत्वाऽभयप्रदः ॥
शरभंगप्रकथितं सुतीक्ष्णाश्रममभ्यगात् ॥ १८ ॥

तं सम रा धिकलावण्यं सदारं सानुजं नतम् ॥
आलिंग्य मूर्ध्न्यवघ्राय सुतीक्ष्णोऽतीवनिर्वृतः ॥ १९ ॥

पर म प्रेमलात् तस्मात्प्राप्य सत्कारमुत्तमं ॥
अन्यानपि ययौ द्रष्टुं दंडकारण्यवासिनः ॥ २० ॥

मार्गे ज नकजोवाच हिंसा नेष्टा तपोवने ॥
तामाह ब्रह्मरक्षार्थं हिंसा कार्येति राघवः ॥ २१ ॥

रामो य यौ वने धन्वी कवची सासिरग्रतः ॥
मध्ये सीता पृष्ठतस्तु लक्ष्मणोऽनुजगाम ताम् ॥ २२ ॥

ते यो ज नायतं सायं तडाकं ददृशुर्वने ॥
गीतवादित्रनिर्घोषं तस्मिन् शुश्रुवुरद्भुतम् ॥ २३ ॥

विस्म य स्य पदं रामः पप्रच्छ सहवासिनं ॥
मुनिं धर्मभृतं नाम स प्राह रघुनंदनम् ॥ २४ ॥

अम रा स्तपसोभीता मांडकर्णेर्महात्मनः ॥
विघ्नं कर्तुं योजितास्तैः पंचाप्सरस उत्तमाः ॥ २५ ॥

नीतो म दनवश्यत्वं ताभिरत्र स तापसः ॥
तासां सरांसि रामाय गीतवादित्रसद्ध्वनिः ॥ २६ ॥

श्रुत्वा श्रीमान्महाश्चर्यमिक्ष्वाकु जयतां वरः ॥
जगाम चाश्रमास्तेषां पर्यायेण तपस्विनां ॥ २७ ॥
भूसु र र णाया श्रमेषु रममाणस्य सत्पते ॥
सुखेन दंडकारण्ये ययुः संवत्सरा दश ॥ २८ ॥
आश्र म प्रवरं रामः सुतीक्ष्णस्य मुनेः पुन ॥
जगाम न्यवसत्तत्र कंचित्कालमरिंदमः ॥ २९ ॥
येट ळ स्याश्रम रामः सुतीक्ष्णप्रोक्तवर्त्मना ॥
गच्छस्तद्भ्रातुरभ्यागादाश्रम प्रथम पथि ॥ ३० ॥
कथा य द्दास्करीं रामः कुंभजस्य महात्मनः ॥
वातापील्वलयोर्हेतुः कथयामास सन्मतां ॥ ३१ ॥
भ्रातु रा श्रममासाद्य कुंभयोनेस्तपोनिधेः ॥
रामः सीता च सौमित्रिः सत्कारं प्राप्य निर्वृताः ॥ ३२ ॥
जगा म तदनु भ्रात्रा सीतयानुगतः पथि ॥
पुण्यं रम्याश्रमपदं रामः कलशजन्मन. ॥ ३३ ॥
अनु ज म्यानमनुग लक्ष्मण राघवोऽब्रवीत् ॥
आश्रमोऽयं भगवतो यच्छाता मृगपक्षिणः ॥ ३४ ॥
बत्ता य माश्रमः सेव्यः प्रयतैरेव नेतरैः ॥
'नात्र रक्षःप्रवेशोऽस्ति प्रतापोऽस्य मुनेर्महान् ॥३५॥
पत्ते य सोऽनिशं भीतो विंध्योऽद्यापि न वर्धते ॥
यःस किं बहुनोक्तेन पीतोयेनाखिलोऽबुधिः ॥३६॥
विन य ह्रोऽसि सौमित्रे तात त्वं प्रविशाग्रतः ॥
निवेदयेह मां प्राप्तमृषये सह सीतया ॥ ३७ ॥
तदा ग्र गुक्तिमाकर्ण्य प्रविश्याश्रममद्भुतम् ॥
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच सः ॥ ३८ ॥
पुत्रो म हीपतेर्ज्येष्ठो रामो दशरथस्य य. ॥
प्राप्तोऽद्य मुनिश्रेष्ठ भार्यया सह सीतया ॥ ३९ ॥

---

१ अगस्त्य.

अहं श्री मत एतस्य भक्तो भ्राताऽनुजोद्विज ॥
इष्टुमिच्छाम इति त भगवंतं निवेद्यताम् ॥ ४० ॥
सोऽग्नि रा लयमासाद्य प्रोवाच प्रांजलिर्गुरुम् ॥
भगवन् सीतया प्राप्तौ त्वां द्रष्टुं रामलक्ष्मणौ ॥ ४१ ॥
श्रुत्वा म हात्मा तं प्राह वत्स किं न प्रवेशितौ ॥
ममापि रामागमनं मनसा कांक्षितं चिरम् ॥ ४२ ॥
सानु ज म्यानमाशु त्वं ससीतं राममानय ॥
इत्युक्तः स तथेत्युक्त्वा लक्ष्मणं प्राह तापसः ॥ ४३ ॥
दर्शं य कामजस्तेऽय भगवांस्त्वं प्रतीक्षते ॥
सभार्यः स मुनिं द्रष्टुमेतु प्राविशतु स्वयम् ॥ ४४ ॥
स त्व रा त्मान् सुमित्रायाः पुत्रस्तमृषिमात्मनः ॥
अग्रजं दर्शयामास रामं सीतासमन्वितं ॥ ४५ ॥
शिष्यो म हर्षेस्तद्विद्वान् प्रश्रितं वचनं ब्रुवन् ॥
प्रावेशमथयान्यायं सत्कारार्हं सुसत्कृतम् ॥ ४६ ॥
रामो ज नकजा देवी लक्ष्मणश्चाश्रमे मुनेः ॥
देवस्थानानि पश्यंतः प्रवेश चक्रुरुत्सुका ः ॥ ४७ ॥
ततो य थाभार्त्तिर्माशुनिर्गतोऽभिगृह्याग्मुनिः ॥
तं दृष्ट्वा राघवः प्राह पश्य लक्ष्मण यः श्रुतः ॥ ४८ ॥
सोऽयं ज गति विख्यातः कुंभजन्माऽपरोविधिः ॥
औदार्येणावगच्छामि निदानं तपसामिद ॥ ४९ ॥
आग्नीय राशेस्तस्याथ सीतया सह सानुजः ॥
पादौ जग्राह विनयाद्रामः सद्धर्मपालकः ॥ ५० ॥
सदा रा वरज राममगस्त्योऽभ्यर्च्य वैष्णवम् ॥
धनुः शरं ब्रह्मदत्तं तूणी चाक्षयसायकौ ॥ ५१ ॥
ददौ म हासिं चोवाच महेंद्रेणेदमर्पितम् ॥
जयाय प्रतिगृण्हीष्व त्वमायुधमनुत्तमम् ॥ ५२ ॥

---

१ विनययुक्त २ सूर्य ३ वेदमूल.

रामः श्री मान् गृहीत्वा तान्यायुधानि महामुनें ॥
ननाम यस्याशेनितो न नामं ह्यूनमोजसा ॥ ५३ ॥
कांता रा खिन्नचित्तेयं कांता राम तवोचिता ॥
धन्यो जनकराजस्य कन्यां मन्यामहे वयं ॥ ५४ ॥
एवं म नोहरां वाचं वदतं कुंभसंभवं ॥
॥ उवाच प्रांजलिर्नत्वा सत्काकारो रघूत्तमः ॥ ५५ ॥
सानु ज स्य सभार्यस्य गुणैस्तुष्टोऽसि मे गुरो ॥
धन्योऽस्म्यनुगृहीतोऽस्मि वस्तुं देशं तु बोधय ॥ ५६ ॥
वासा य ते स्थलं राम गोदावर्यास्तटेऽनघे ॥
ख्यातं पंचवटीत्यास्ते कुरु तत्राश्रमं शुभं ॥ ५७ ॥
इत्य रा तिवधोद्युक्त उक्तस्तेन महर्षिणा ॥
तं प्रणम्य रघूत्तंसस्ततः पंचवटीं ययौ ॥ ५८ ॥
स भी म विक्रमो रामो गच्छन् पंचवटीं पथि ॥
आससादांतरा गृध्रं महाकायं महामतिं ॥ ५९ ॥
सानु ज स्तं प्रभुर्गृध्रं मेने मनसि राक्षसं ॥
कोमवानिति पप्रच्छ स चाह प्रीतमानसः ॥ ६० ॥
सखा य मात्मनोविद्धि पितुर्दशरथस्य मां ॥
वत्स रामारुणसुतं गृध्रं नाम्ना जटायुषं ॥ ६१ ॥
अग्र ज न्मा च मे नाम्ना संपातिरिति विश्रुतः ॥
साहाय्यस्ते भविष्यामि रक्षिष्यामि च जानकीं ॥ ६२ ॥
तं व य स्यं पितुः प्रेम्णा प्रतिपूज्य स्नुपामिमां ॥
त्रात त्वं पालयेत्युक्त्वा रामः पंचवटीं गतः ॥ ६३ ॥
रुचि रा मग्रजाज्ञातः पर्णशालां महामतिः ॥
पंचवट्यां चकाराशु सौमित्रिर्मित्रवत्सलः ॥ ६४ ॥
तस्यां म नुष्यचरितः ससीतः सानुजः सुखं ॥
उवास भगवान् रामो मुनिवृत्तिं समाश्रितः ॥ ६५ ॥

---

१ मग.

तत्र श्री मद्दर राम हेमंते प्रेक्ष्य राक्षसी ॥
यदृच्छयाऽऽगता पापा बभूव स्मरमोहिता ॥ ६६ ॥
स्वसा रा क्षसराजस्य रडा शूर्पणखाभिधा ॥
समासाद्य सुदुर्वृत्ता सद्वृत्तमशिवा शिवे ॥ ६७ ॥
अस म र्थी समर्थं त सुस्वर भैरवस्वना ।
प्रियरूप विरूपा सा वृद्धा तरुणमब्रवीत् ॥ ६८ ॥
कस्त्व ज टी शस्त्रधरः सभार्यो यतिसेवितं ॥
इम देश कथ प्राप्तः किमागमनकारणम् ॥ ६९ ॥
रामो य थावदाखिल ऋजुबुद्धितयैवतां ॥
आदित. कथयामास विस्तराद्वृत्तमात्मन. ॥ ७० ॥
ताच रा मोप्यपे का त्व मनोज्ञाङ्गीह राक्षसी ॥
प्रतिभासि मम ब्रूहि तत्त्वेनेत्यवदत्प्रभु : ॥ ७१ ॥
वृत्त म धुरवाग् व्यक्त कथयामास कामुकी ॥
अह शूर्पणखा नाम राक्षसी कामरूपिणी ॥ ७२ ॥
भ्राता ज गैद्रावणो मे यदि ते श्रोत्रमागत ॥
प्रवृद्धनिद्रश्च सदा कुंभकर्णो महाबल. ॥ ७३ ॥
तथा य तात्मा धर्मज्ञस्त्यक्तराक्षसचेष्टित ॥
विभीषणः ख्यातवीर्यौ भ्रातरौ खरदूषणौ ॥ ७४ ॥
तेभ्यो ऊ न्मत एवाह वीर्येणाभ्यधिका सदा ॥
त्वामुपेताऽस्मि भावेन भर्तारं पुरुषोत्तम ॥ ७५ ॥
चिरा य भव मे भर्ता सीतया किं करिष्यसि॥
विकृता च विरूपा च न सेय सदृशी तव ॥ ७६
अह रा-मानुरूपा ते भार्यारूपेण पश्य मा ॥
इमां तेऽह सह भ्रात्रा भक्षयिष्यामि मानुषीं ॥ ७७ ॥
एव म स्यावचः श्रुत्वा प्रहस्याह विशारद ॥
कृतदारोऽस्मि भवति भार्येय दयिता मम ॥ ७८ ॥

---

१ अकस्मात् २ राक्षस ३ जगत्पालक.

शृणु श्री मति रामाणां त्वद्विधानां तु सर्वथा ॥
स्वच्छंदचित्तवृत्तीनां सपत्नी दुःसहा खलु ॥ ७९ ॥
एष रा जीव नयनोऽकृतदारो गुणाकरः ॥
एन भज विशालाक्षि भर्तारं भ्रातरं मम ॥ ८० ॥
सा का म मोहिता रामं विसृज्योवाच लक्ष्मणम् ॥
अस्य रूपस्य ते युक्ता भार्याहं वरवर्णिनी ॥ ८१ ॥
मां भ ज प्रियमत्यंतं त्व वने प्राप्स्यसि ध्रुव ॥
ततः शूर्पणखां स्मित्वा सौमित्रिर्युक्तमब्रवीत् ॥ ८२ ॥
यवी य सी भवार्यस्य भार्या त्वं मदिरेक्षणे ॥
कथं दासस्य मे दासी भार्या भवितुमिच्छसि ॥ ८३ ॥
एतां रा त्रिचरि स्पष्टं विरूपां निर्णतोदरीं ॥
वृद्धां भार्यां परित्यज्य त्वामेवैष भजिष्यति ॥ ८४ ॥
रूप म सद्भुतमिदं कोहि संत्यज्य सुंदरि ॥
मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ ८५ ॥
सोट म स्यं पुनारामं परिहासा विचक्षणा ॥
ससीतमतिदुर्धर्षमब्रवीत् काममोहिता ॥ ८६ ॥
इमां य स्मादवष्टभ्य विरूपामसतीं स्त्रियं ॥
अनुरूपां सुकुल्जां न मां त्वं बहु मन्यसे ॥ ८७ ॥
तदो म सीतामत्राहं भक्षयिष्यामि मानुषीं ॥
त्वया सह चरिष्यामि निःसपत्ना यथासुख ॥ ८८ ॥
अन्या य वृत्तेत्युक्त्वा सा तां मृगाक्षीमलीतदृक् ॥
अभ्यगच्छत्सुसंक्रुद्धा महोल्का रोहिणीमिव ॥ ८९ ॥
तां क्रू रा मसतीं वाचा निगृह्य कुपितः प्रभुः ॥
उवाच लक्ष्मणं क्रूरैः परिहासो न संमतः ॥ ९० ॥
इमां म त्तामसाध्वीं त्वं विरूपामतिदारुणां ॥
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ ९१ ॥

---

१ "सह.ता सस पत्नता" इति या पाठः ३ मोक्षितानमाणे शोडे जिरे २ एवोदरी.

इति श्री मत आर्यस्य श्रुत्वाज्ञां लक्ष्मणः कृती ॥
॥ उध्दृत्य खड्गं चिच्छेद तस्या नासां श्रुती च सः ॥९२ ॥
प्रख र सिंध्छिन्नकर्णनासात्युग्रं विनैव सा ॥
॥ यथागतं प्रदुद्राव घोरा शूर्पणखा वनं ॥ ९३ ॥
तदा म होग्रा सा पापा राक्षसी शोणितोक्षिता ॥
॥ चकार विविधान्नादान्यथा प्रावृषि तोयदः ॥ ९४ ॥
भ्रातुर ब स्य खरस्यांतो जनस्थानगतस्य सा ॥
॥ पपात पुरतः क्रूराकारा ऽऽकाशादिवाशनिः ॥ ९५ ॥
खरो ऽथ शस्करं दृष्ट्वा तत्तां पप्रच्छ केन ते ॥
॥ दुर्दशेयं कृता ब्रूहि कोऽगुल्या मृतुदर्याहि ॥ ९६ ॥
न सु रा णां पतिः शक्रः शक्तः कर्तु ममाप्रियं ॥
॥ कोऽयमेवं महावीर्यस्त्वां विरूपां चकार यः ॥९७॥
तंद्दये म या हतस्योग्रैः शरैः संकृत्तमर्मणः ॥
॥ सफेनं रुधिरं कस्य मेदिनी पातुमिच्छति ॥ ९८ ॥
ताभ्या ज हार तरुणौ सुकुमारौ महाबलौ ॥
॥ पुंडरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ॥ ९९ ॥
तव प स्को धर्मरतौ फलमूलाशिनौ मुनी ॥
॥ पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १०० ॥
दृष्टा अ गस्त्यनुपमा तयोर्मध्ये सुमध्यमा ॥
॥ तरुणी रूपसंपन्ना सर्वाभरणभूषिता ॥ १०१ ॥
संभू य ताभ्यां भ्रातृभ्यां निमित्तीकृत्य तां स्त्रियं ॥
॥ इमामवस्थां नीताऽहं यथाऽनाथा सती तथा ॥ १०२ ॥
तयो रा गस्कंतोरब तस्याश्चापि खरानृजोः ॥
॥ सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ १०३ ॥
एव म स्याः खरः श्रुत्वा स्वसुः प्रियचिकीर्षया ॥
॥ वीरानाज्ञापयामास चतुर्दश निशाचरान् ॥ १०४ ॥

---

१ कान २ ओरडून ३ 'ननाद' इति वा पाठः ४ देवचही ५ युद्धांत.

राम: श्रीमांस्तया सार्द्धमात्मानं हन्तुमागतान् ॥
उवाच नौ तापसयोः किमर्थमुपहिंसनं ॥ १०५ ॥
ऊचू रा क्षसवीरास्ते भर्तुर्नः कर्तुरप्रिय ॥
तव रक्तमिय पातु राम कामयतेऽधुना ॥ १०६ ॥
ते प्र म ता: परे शून्यान्येवमुक्त्वा प्रचिक्षिपुः ॥
तानि चिच्छेद तावद्भिः शरैरामश्चतुर्दश ॥ १०७ ॥
ततो ज घान तान् रामश्चतुर्दशभिराशुगैः ॥
क्रुद्धा प्रधाविता भूयः सा किंचिच्छुष्कशोणिता ॥ १०८ ॥
दत्ता य तेऽस्यभिमत तत्कर्तुं राक्षसा मया ॥
स्वसः पुना रोदिषि किं पप्रच्छेति स तां खरः ॥ १०९ ॥
पाम रा स्ते हतास्तेन तदैवेति शशास सा ॥
निनिंद च खरं मर्त्याद्भीतस्त्व बालिशेति तं ॥ ११० ॥
सोऽतिम न्युः खरः प्राह दूषण स्वचमूपतिं ॥
चतुर्दश सहस्राणि निर्यांतु मम राक्षसाः ॥ १११ ॥
रथं स मावह क्षिप्रमुपस्थापय सायुध ॥
तेन चोद्योजिता सेना स्यंदनः स्थापितोऽग्रतः ॥
तं ज य पदमारुह्य स्यदन राक्षस. खरः ॥
निर्जगाम जनस्थानात् कृत्वा स्वबलमग्रतः ॥ ११३ ॥
परा क्र यद्मत्युग्रमुत्पातशतमुद्गतः ॥
अचिंतयन् खरः प्रास आश्रम कालचोदितः ॥ ११४ ॥
तद्ब य प्रदमुद्दामदुदुभिध्वनिसूचित ॥
रक्षः सैन्य हन्तुकामो रामो लक्ष्मणमब्रवीत् ॥ ११५ ॥
त्वं वी रा शु धनुष्पाणिर्गृहीत्वा जानकीं द्रुत ॥
गुहामाश्रय शैलस्य दुर्गां पादपसंकुला ॥ ११६ ॥
वत्स म द्वाक्यमेतन्न प्रत्याख्येयमिह त्वया ॥
ममासि शापितोऽध्रिभ्यां सौमित्रे गच्छ माचिरं ॥ ११७ ॥

---

१ तुला माझ्या पायांची शपत आहे.

गते श्री मति सौमित्री गुहामादाय जानकीं ॥
रामो बभूव सन्नद्धो रक्षसां निधनेप्सया ॥ ११८ ॥

व्योम्नि रा त्रिचरध्वंसं द्रष्टुं देवाः समागताः ॥
तेजसाप्यायितं रामं ददृशुर्विस्मयान्विताः ॥ ११९ ॥

अथा म पर्वतं सैन्यं खरस्य विविधायुधं ॥
ववर्ष रामे सर्वत्र मेघजालमिवाचले ॥ १२० ॥

यथा ज लधरं वातः शस्त्रौघं व्यधमत्प्रभुः ॥
गांधर्वेण बलं कृत्स्नं जघानाशु खरस्य तत् ॥ १२१ ॥

अथ य त्नेन तत्सैन्यं हत्वा दाशरथी रणे॥
न्यवधीद्दूषणं सेनापतिं त्रिशिरसं च तं ॥ १२२ ॥

प्रख रा युध उद्दामः खरो राक्षसपुंगवः ॥
मुष्टिदेशे रघुपतेर्धनुश्चिच्छेद संगरे ॥ १२३ ॥

ततो म हद्धनुर्दत्तं यदगस्त्येन वैष्णवं ॥
तत्सज्यमकरोद्रामस्तं ततक्ष खरैः शरैः ॥ १२४ ॥

खरो ज न्ये[1] छिन्नगदाश्छिन्नसालो निरायुधः ॥
मत्तो रुधिरगंधेन राममभ्यद्रवद्द्रुतं ॥ १२५ ॥

दृष्ट्वा य शाखिराजस्तमापतंतं महाजवं ॥
अपासर्पाद्द्वित्रिपदं किंचित्त्वरितविक्रमः ॥ १२६ ॥

धैनं—ज—यामं नाशाय खरस्य समरे शरं ॥
रामो जग्राह दिव्यं तं ब्रह्मदंडमिवापरं ॥ १२७ ॥

जया य दत्तं मुनिना कुंभजेन महात्मना ॥
संदधे च स धर्मात्मा मुमोच च खरं प्रति ॥ १२८ ॥

मुक्तो रा घवराजेन खरोरस्यपतच्छरः ॥
स पपात खरो भूमौ दह्यमानः शराग्निना ॥ १२९ ॥

पुरा म हेशानिर्दग्धः श्वेतारण्ये यथांधकः ॥
स वृत्र इव वज्रेण फेनेन नमुचिर्यथा ॥ १३० ॥

---

१ पुन्नाग. २ अभिनुद्धव. ३ दैत्यविशेष.

रामे श्रीं मति संप्राप्तविजये निहते खरे ॥
देवदुंदुभयोनेदु पुष्पवृष्टिर्महत्यभूत् ॥ १३१ ॥
अम रा अब्रुवन् दृष्टा अहो सर्वे निशाचरा ॥
अर्द्धाधिकमुहूर्तेन रामेण निहता रणे ॥ १३२ ॥
राम म हर्षं योऽगस्त्यप्रमुखा हर्षनिर्भरा ॥
पूजयित्वोचुरिंद्रस्त शरभंगाश्रमं स्वयं ॥ १३३ ॥
समा ज गमितदर्थमिमं देशमुपायतं ॥
आनीतस्त्वं वधायैषां राक्षसानां महर्षिभिः ॥ १३४ ॥
प्रत्य य स्त्वयि नो राम राजर्षिकुलभूषण ॥
स्वस्त्यस्तु ते कृतं कार्यं महद्दशरथात्मज ॥ १३५॥
एवं रा क्षसहंतारं पूज्यमानं महर्षिभिः ॥
लक्ष्मणो मुदितोऽभ्येत्य ननामाग्रजमीश्वरं ॥ १३६ ॥
रक्षो म र्दनमाश्लिष्टं समीक्ष्य विजयश्रिया ॥
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ १३७ ॥
ततो ज वेन निर्गत्य जनस्थानादकंपनः ॥
प्रविश्य लंकां वित्रस्तो रावणं वाक्यमब्रवीत् ॥
सैन्यं य त्ते जनस्थाने प्रभो तत्सकलं हतं ॥
खरश्च निहतः संख्ये कथंचिदहमागतः ॥ १३९ ॥
श्रुत्वा ज गद्दुर्निवार्यप्रतापो दशकंधरः ॥
अकंपनमुवाचेदं निर्दहन्निव तेजसा ॥ १४० ॥
रे कोऽय मेवं बलवान् जनस्थानविनाशकृत् ॥
कृत्वा मे विप्रियं शक्यं सुखं प्राप्तुं न वज्रिणा ॥ १४१ ॥
राजे रा जेन न न वा यमेन न च विष्णुना ॥
कालस्यचाप्यहं कालो दहेयमपि पावकं ॥ १४२ ॥
मृत्युं म रणधर्मेण संयोजयितुमुत्सहे ॥
अकंपनस्तथा क्रुद्धं ययाचेऽभयमीश्वरं ॥ १४३ ॥

---

१ कुबेर.

ददौ श्री मान् दशग्रीवोऽभय तत उवाच सः ॥
पुत्रो दशरथस्यास्ति रामो नाम महाबलः ॥ १४४ ॥
तेन रा यण वीरेण भास्कराधिकतेजसा ॥
सदूषणः सत्रिशिरा जनस्थाने हतः खरः ॥ १४५ ॥
तस्स म न्युर्दशग्रीवः श्रुत्वाऽकपनभाषित ॥
नागेद्र इव निश्वस्य वचन चेदमब्रवीत् ॥ १४६ ॥
मम्रु ज स्त्रिदशैर्युक्तः स रामो वेंद्रसंयुतः ॥
उपयातो जनस्थान ब्रूहि कच्चिदकंपन ॥ १४७ ॥
अभ य प्रदमुग्र तमुवाचेदमकपनः ॥
रामो नाम महातेजाः श्रेष्ठः सर्वधनुष्मतां ॥ १४८ ॥
तस्य रां कैंदुसंकाशवदनो दुदुभिस्वनः ॥
कनीयान् लक्ष्मणो भ्राताऽनुरूपो वीर्यसंपदा ॥ १४९ ॥
यथा म रुत्सहायोऽग्निर्दु:सहः सर्वदेहिनां ॥
तथा सलक्ष्मणो रामो द्विपतां राक्षसेश्वर ॥ १५० ॥
हता ज नस्थानगताः सर्वे रामेण राक्षसाः ॥
न तस्य पुरतः स्थातु शक्यमद्भुततेजसः ॥ १५१ ॥
वृत्ता य तभुजः श्यामो रामो राजीवलोचनः ॥
दृष्टः पलायमानैस्तैः सर्वैरेवाग्रतः स्थितः ॥ १५२ ॥
स्वयं ज नस्थानमह गमिष्यामि सलक्ष्मणं ॥
रामं हंतुमिति प्राह क्रोधांधो दशकंधरः ॥ १५३ ॥
प्रल य ज्वलनाकारं तमाहाकंपनः प्रभो ॥
असाध्यः कुपितो रामो विक्रमेण महायशाः ॥ १५४ ॥
नहि रा जन् स रामोऽद्य शक्यो जेतुं रणे त्वया ॥
समग्रैराक्षसैर्वाऽपि स्वर्गः पापजनैरिव ॥ १५५ ॥
न त म न्ये वध्यमह सर्वै दैवासुरैरपि ॥
अथ तस्य वधोपायस्तमाकर्णय मन्मुखात् ॥ १५६ ॥

---

१ पूर्णिमेचा इंद्र.

तस्य श्री रिव भार्याऽऽस्ते सीता नामातिसुंदरी ॥
श्यामा समविभक्तांगी स्त्रीरत्नं रत्नभूषिता ॥ १५७ ॥

तां ह रा शु प्रलोभ्य त्वं प्रथमं राममत्सरिम् ॥
सीतया रहितः क्षिप्रं सोऽसह्यो न भविष्यति ॥ १५८ ॥

मत्वा म तं हितं तस्य तमुवाचाथरावणः ॥
बाढं प्रातर्गमिष्यामि समानेष्यामि तामिह ॥ १५९ ॥

ततोऽ जै र्लब्धैः प्रवरैर्वरैर्मतो दशाननः ॥
सीतां हर्तुमनाः क्षिप्रं लंकाया निर्गतोबली ॥ १६० ॥

स वि[3] य त्पथमाविश्य रथमारुह्य कामगम् ॥
उत्तरं तीरमगमच्चोर्व्यां नदनदीपतिः ॥ १६१ ॥

प्राप रा क्षसराट् तूर्णं ताटकातनयाश्रमं ॥
तं मारीचोऽर्चयामास भक्ष्यभोज्यैरमानुषैः ॥ १६२ ॥

स्वाश्र म प्राप्तमधिपं स मारीचोऽब्रवीदिदम् ॥
कच्चित्ते कुशलं राजन् किमर्थं तूर्णमागतः ॥ १६३ ॥

तं रौ ज राजावरजः प्राह रामेण तात मे ॥
जनस्थानमवध्यं तत्सर्वं युधि निपातितम् ॥ १६४ ॥

सहा य स्त्वं भवाद्यांग तद्भार्या-हरणे मम ॥
इत्युक्तो राक्षसेंद्रेण मारीचो वाक्यमब्रवीत् ॥ १६५ ॥

त्वया ज गत्पते तात को न नदति नदितः ॥
आख्याता केन वा सीता मित्ररूपेण शत्रुणा ॥ १६६ ॥

नेद य शस्करं कर्म स्वदारेषु रमस्व सः ॥
सभार्यो रमतां रामो वनेषु स्वपुरं व्रज ॥ १६७ ॥

एव रा क्षसराडुक्तो मारीचेन हितैषिणा ॥
न्यवर्तत पुरीं लंकां विवेश च गृहोत्तमम् ॥ १६८ ॥

अथा म रारिमभ्येत्य लंकायां भ्रातरं निजं ॥
मुखं शूर्पणखा भग्नं विरूपितमदर्शयत् ॥ १६९ ॥

---

१ सोळा वर्षांची स्त्री २ महादेवशास्त्र मिळालेले ३ आकाश मार्गे ४ कुबेराचा कनिष्ठ बंधु (रावण)

हत श्री स्त्वं स्वसः केन कृतैवं वद सत्वरम् ॥
रुदतीमिति पप्रच्छ रावणः क्रोधमूर्छितः ॥ १७० ॥
साऽऽह रा मस्य दयितां त्वदर्थं हर्तुमुद्यता ॥
भ्रातस्तस्यानुजेनाहं लक्ष्मणेन विरूपिता ॥ १७१ ॥
त्वं म म त्तः कामभोगे स्वैरवृत्तो निरंकुशः ॥
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥ १७२ ॥
त्वम ज्ञे त्वं विगृह्यार्थैर्देवगंधर्वदानवैः ॥
अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥ १७३ ॥
विपे य स्यावनेऽशक्तो जनस्थानक्षयं भयं ॥
रामाद्दाशरथेः प्राप्तं न जानासि जडोऽस्यलं ॥ १७४ ॥
न चा रा यस्य स ह्यंधो राजानश्चारचक्षुषः ॥
विपन्नराज्यो न चिराद्विपत्तिं प्राप्स्यसेऽवशः ॥ १७५ ॥
त्वं स म र्थोऽसि चेत्तत्वं रत्नभोक्ता दशानन ॥
रामस्य दयितां सीतां स्त्रीरत्नं भुंक्ष्व तेजसा ॥ १७६ ॥
सा रा ज ते स्वरूपेण साक्षाच्छ्रीरिव जानकी ॥
न तादृशी दृष्टपूर्वा श्रुतपूर्वाऽपि चांगना ॥ १७७ ॥
सीता य स्य भवेद्भार्या यं च हृष्टा परिष्वजेत् ॥
अभिजीवेत्स सर्वेषु लोकेष्वपि पुरंदरात् ॥ १७८ ॥
भूयो ज गाम रामस्य हर्तुं भार्यां स रावणः ॥
पिशाचास्यैः खरैर्युक्तं रथमारुह्य कामगम् ॥ १७९ ॥
तन म स्याश्रमं प्राप्तस्ताटकायाः पुनर्हृतम् ॥
दृष्ट्वा चतुःशतक्रोशशाखं पथि महावटम् ॥ १८० ॥
आद रा त्पूजयित्वा तं मारीचः प्राह रावणम् ॥
राजंच्छमस्तु ते कच्चित्किं पुनस्तूर्णमागतः ॥ १८१ ॥
ततो म नुष्यभुग्भर्ताऽब्रवीन्मारीच सर्वथा ॥
रामः पित्रा परित्यक्तो दुर्वृत्तोऽराज्यभागीति ॥ १८२ ॥

---

१ सतत. २ हेर. ३ देश.

मम श्री मत उद्धतो रामो वैरं विना रणे ॥
जनस्थानं जघानांग स्वसारं च व्यरूपयत् ॥ १८३ ॥

हत्वा रा त्रिचरान् सर्वान् ससरान्सहदूषणान् ॥
दत्तवानभयं तत्र मुनिभ्यः परमोद्धतः ॥ १८४ ॥

कृत्वा म मप्रियं धृष्टो निर्दयोभूतहिंसकः ॥
न बिभेति मनुष्योऽपि मत्तो मत्तो जयश्रिया ॥ १८५ ॥

रक्षो ज नेश्वरस्याद्य सहायो भव मे सखे ॥
सौवर्णस्त्वं मृगो भूत्वा सीतायाः प्रमुखे चर ॥ १८६ ॥

त्वामा य ताक्षी दृष्ट्वैव सौवर्णं मृगमद्भुतं ॥
गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ १८७ ॥

तयो रा श्रमतो जातेऽपगमे तां यथासुखम् ॥
निराबाधो हरिष्यामि कृतार्थेनान्तरात्मना ॥ १८८ ॥

इत्य म स्य वचः श्रुत्वा मारीचस्य महात्मनः ॥
शुष्कं समभवद्वक्त्रं परित्रस्तो बभूव सः ॥१८९ ॥

कृतां ज लिरतं प्रोवाच हितं तस्यात्मनश्च यत् ॥
मामेवं वद दुर्वृत्त इति सक्तो न राघवः ॥१९०॥

पित्रा य दुक्तं तत्सत्यं कर्तुं काननमागतः ॥
रामो जगद्धितत्राताऽसतां हन्ता सतां प्रभुः ॥ १९१ ॥

कथं ज नकजां हर्तुं दशकंधर वांच्छसि ॥
शौर्यमत्यद्भुतं तस्य मेऽध्यहं त्वं न वेत्सि तत् ॥ १९२ ॥

त्वमा य त्तः कथं भर्तुं जातोऽस्यास्थाय साहसं ॥
नैव धर्षयितुं शक्या दीप्तस्याग्नेःशिखेव सा ॥ १९३ ॥

मुने रा श्रम एनेन गाधिजस्यावताऽध्वरम् ॥
शरेण ताडितः क्षिप्तः समुद्रे शतयोजने ॥ १९४ ॥

नैवं म तुं त्वया कार्यं राजंस्त्वां नानुयाम्यहं ॥
रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ १९५ ॥

---

१ मनरूपाराणी. २ राक्षस राजा.

न मां श्री मंतमेवं त्वं वक्तुमर्होऽद्य मे वचः ॥
नोचेत्करोषि मारीच हन्मि त्वाहं न संशयम् ॥ १९६ ॥
एवं रा क्षसराजोक्तो मारीचः स उवाच तम् ॥
श्रेयो मे मरणं रामान्न त्वत्तोऽतो व्रजाम्यहम् ॥ १९७ ॥
ध्रुवं म रिष्यस्यचिरात्त्वं तु पुत्रादिभिः सह ॥
इत्युक्त्वा स्पष्टमुद्वृत्तं सन्नद्धो भूतसराक्षसः ॥ १९८ ॥
स रा ज राजवरजस्तं परिष्वज्य सांत्वयन् ॥
रथं तेन सहारुह्य गतः पंचवटीं द्रुतम् ॥ १९९ ॥
राज्ञा य योक्तो मारीचो रथादुत्तीर्य सत्ववान् ॥
मृगो भूत्वाऽऽश्रमद्वारि रामस्य विचचार सः ॥ २०० ॥
रुचि रा क्ष्या मृगं दृष्ट्वा तमत्यद्भुतदर्शनम् ॥
उत्सृज्य पुष्पावचयमाहूतौ रामलक्ष्मणौ ॥ २०१ ॥
सी रा म लक्ष्मणौ वीरावाहूतौ मैथुं सीतया ॥
वक्ष्यमाणौ तु तं देशं रम्यं ददृशतुर्मृगम् ॥ २०२ ॥
रामं ज गाद सौमित्रिर्नास्ति रत्नमयो मृगः ॥
तमेवैतमहं मन्ये मारीचं पापरूपिणम् ॥ २०३ ॥
स मा य या विविधया चरंतो मृगयां वने ॥
अनेन हि हता राम राजानो बहवो पुरा ॥ २०४ ॥
तं सा ज नकजा वीरं प्रतिवार्याशु लक्ष्मणम् ॥
उवाच रामं संहृष्टा छद्मना हृतचेतना ॥ २०५ ॥
आन य त्वं मृगं धृत्वा क्रीडार्थनेऽभविष्यति ॥
आर्यपुत्राभिरामोऽसौ भृशं हरति मे मनः ॥ २०६ ॥
सुम रा श्वमराश्चान्ये दृष्टा नानाविधा मृगाः ॥
नानेन सदृशो राजन् दृष्टपूर्वो मृगो मया ॥ २०७ ॥
मृगो म मायं श्वश्रूणां भरतस्य तवापि च ॥
अंतःपुरे वसन्नित्यं विस्मयं जनयिष्यति ॥ २०८ ॥

---

१ सज्ज. २ सत्वर. ३ [illegible]

यदि श्री भान्मग्रहण जीवन्नभ्येष्यमृग ॥
अजिन नरशार्दूल रुचिर तु भविष्यति॥ २०९ ॥
इति रा.मावचः श्रुत्वा रामो लक्ष्मणमब्रवीत् ॥
वत्स त्वदुक्त चेत्सत्य कार्योरक्षोवधो मया ॥ २१० ॥
अस्या म हा न्महो नो चेद्गृहीतेनास्य वा त्वचा ॥
सीतां रक्षन्नत्रैव यावदागमन मम ॥ २११ ॥
एव भ लज पत्राक्ष उक्त्वा खड्गी धनुर्धरः ॥
मायामृग सुचपल त्वरयाऽनुससार तम् ॥ २१२ ॥
स भ य व्याकुलो राममापतत धनुर्धरम् ॥
बभूवान्तर्हितो दृष्ट्वा पुनः सदर्शनेऽभवत् ॥ २१३ ॥
तमा रा निर्गत दृष्ट्वा दृश्यादृश्य वने मृगम् ॥
छिन्नाभ्रैरिव सवीत शारदं चद्रमडलं ॥ २१४ ॥
अरि म र्दनमुग्रेषु चापे सधाय राघवः ॥
मुमोच ज्वलित क्रोधादस्त्र ब्रह्मविनिर्मितम् ॥ २१५ ॥
मृगा ज येन हृदय तस्येषुर्निर्बिभेद सः ॥
तालमात्र मथोत्प्लुत्य न्यपतत्स भृशातुरः ॥ २१६ ॥
सम य प्राप्तमात्मा स चकार ततः स्वनम् ॥
महात राघवस्येव हा सीते लक्ष्मणेतिच ॥ २१७ ॥
तस्या ज मृगरूप तन्मारीचो जीवित च म ॥
जगाम मनसा सीता रामो भ्रातुर्वच. स्मरन् ॥ २१८ ॥
सभ य स्त स्वन श्रुत्वा प्रभुरप्यभवद्वने ॥
अचिंतयत्कथ सीता लक्ष्मणश्च कथ भवेत् ॥ २१९ ॥
ससा रा श्रममेवान्य निहत्य पृषत प्रभुः ॥
तन्मास द्रुतमादाय भृश मनसि शंकितः ॥ २२० ॥
आर्त म हास्वन श्रुत्वा भर्तृकांता भयाकुला ॥
उवाच लक्ष्मण सीता गच्छ जानीहि राघवम् ॥२२१॥

---

१ भ्राद. २ मृग.

भशं श्री मंत भापन्नं रक्षसां त्रातुमर्हसि ॥
तं क्षिप्रमभिधाव त्वं भ्रातरं शरणैषिणम् ॥ २२२ ॥
भर्तु रा तस्य शद्बोऽलं क्रोशतोऽथ श्रुतो मया ॥
न हि मे जीवितं स्थाने हृदयं वाऽवतिष्ठते ॥ २२३ ॥
लगा म न तयोक्तः ▪ भ्रातुराज्ञाय शासनम् ॥
तमुवाच ततस्तत्र क्षुभिता जनकात्मजा ॥ २२४ ॥
न त्र ज स्याशु कस्मात्त्वं त्रातुं प्राणप्रियं मम ॥
सौमित्रे मित्ररूपेण भ्रातुः शत्रुरसि ध्रुवम् ॥ २२५ ॥
अस्यां य स्त्वमवस्थायां भ्रातरं नाभिपद्यसे ॥
इच्छसि त्वं विनश्यंतं रामं लक्ष्मणमत्कृते ॥ २२६ ॥
तद्वी–रा–मां प्रमाकर्ण्य सीतां सौमित्रिरब्रवीत् ॥
सुरासुरैरशक्यस्ते भर्ता जेतु न संशयः ॥ २२७ ॥
न त्वा म स्मिन्वने हातुमुत्सहे राघव विना ॥
अनिवार्यं बलं तस्य बलैर्बलवतामपि ॥ २२८ ॥
रामो ज गन्यवध्यस्तं प्रतियुध्येत कः पुमान् ॥
रक्षसः स स्वरोदेवि नैव त्वं वक्तुमर्हसि ॥ २२९ ॥
मृगं प–भक्षयं नीत्वा शीघ्रं रामो महायशाः ॥
आगमिष्यति ते भर्ता हर्तायुर्द्विषतां मृधे ॥ २३० ॥
त्वं स ज त्रासमार्येण न्यस्तासि मयि मैथिलि ॥
रक्षसां वैरमस्माभिस्त्वां सक्तुं नोत्सहे वने ॥ २३१ ॥
क्रुद्धा य यार्थं वाचं तमुवाचारक्तलोचना ॥
अनार्याकरुणारभ नृशंस कुलपांसन ॥ २३२ ॥
अहं रा मस्य मन्ये ते व्यसनं परमं प्रियम् ॥
नैवं चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् ॥ २३३ ॥
रामं म रूकृत एवैकमेकोऽरण्येऽनुगच्छसि ॥
सुदुष्टस्त्वं प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २३४ ॥

राम श्री मत माश्रित्य कामयेय कथ परम् ॥
समक्ष तव सौमित्रे प्राणास्त्यक्ष्ये ऽसशयम् ॥२३५॥
निष्ठु रा णि वचास्युक्त सीता प्राञ्जलिरब्रवीत् ॥
उत्तर नोत्सहे वक्तु दैवत भवती मम ॥२३६॥
वाक्य म प्रतिरूप तु न चित्र स्त्रीषु मैथिलि ॥
विमुक्तधर्माश्चपलास्तीक्ष्णाभेदकरा स्त्रिय ॥२३७॥
वचो ज नककन्येऽहमीदृश न सहे तव ॥
श्रोत्रयोरुभयोर्मध्ये तप्तनाराचसन्निभम्॥ २३८ ॥
धिक्त्वा य दद्य मामेव नश्यती त्व विशकसे ॥
यास्यामि यत्रकाकुत्स्य स्वस्ति तेऽस्तु वरानने ॥२३९॥
स दा रा नग्रजस्यार्त प्रणम्य रचिताञ्जलि ॥
बहुशोऽवेक्ष्य ता राम समीप सत्वर ययौ ॥ २४० ॥
आश्र म स्था तदा सीतामभिचक्राम रावण ॥
क्षिप्रमतरमासाद्य परिव्राजकवेषभृत् ॥ २४१ ॥
रक्षो ज येनाससाद ता ताभ्या रहिता वने ॥
वियुक्ता चद्रसूर्याभ्या सध्यामिव महत्तम ॥ २४२ ॥
तम य स्तत्क्षणे वातो निश्चलोऽभूद्द्रुमव्रज ॥
स्तिमित गतुमारेभे गोदावर्यपि तद्भयात् ॥ २४३ ॥
ता रा ज कन्या कामार्त प्रशशस दशानन ॥
मनोहरसि रूपेण नदी कूलमिवाभसा ॥ २४४ ॥
शुच य स्ते विशालाक्षि श्रीर्वा त्वमथवा रति ॥
अत्यद्भुतमिद रूप क्वापि दृष्ट नहीदृश ॥ २४५ ॥
का त्व रा मे वने सिंहव्याघ्रराक्षससेविते ॥
ब्रूहह श्रोतुमिच्छामि नाम वृत्त च देवि ते ॥ २४६ ॥
पू य म स्वाशन मत्वा भिक्षुमाश्रममागतम् ॥
कथयामास वैदेही निजवृत्तमशेषत ॥ २४७ ॥

---

१ राग, २ स पक्षी

मम श्री मान् दशरथ. श्वशुरो जनक' पिता ॥
रामो दाशरथिर्भर्ता वनवासो गुरोर्गिरा ॥ २४८ ॥
नद्यो-रा-रण्यवासो मे भयदः पत्युरोजसा ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥ २४९
वस्तु म त्र त्वया शक्य गोत्रं नाम च किं तव ॥
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥ २५०
एव ज नककन्यायां ब्रुवत्यां स महाबलः ॥
प्रत्युवाचोत्तरं तीव्र रावणो राक्षसाधिपः ॥ २५१ ॥
लोका य स्मादिमे त्रस्ताः सदेवा-सुरमानुषा. ॥
अह स रावणो नाम सीते रक्षोगणेश्वरः ॥ २५२ ।
त्वां च रा क्षीं सुवर्णां त्वा श्रुत्वा दृष्ट्वाऽतिसुदरीं ॥
रुचिं स्वकेषु दारेषु नाधिगच्छाम्यनिंदिते ॥ २५३ ॥
उत्त म स्त्रीसहस्राणामाहृतानामितस्ततः ॥
सर्वेषामेव भद्र ते ममाग्रमहिषी भव ॥ २५४ ॥
लंका ज लधिना सीते परिक्षिप्ता पुरी मम ॥
तस्यामुपवने साक मया त्व विचरिष्यसि ॥ २५५ ॥
भार्या य दि त्व भवसि मम सद्रत्नभूषिताः ॥
दास्यः परिचरिष्यंति त्वां पचाशच्छतान्यपि ॥ २५६ ॥
तं सा ज नकजोवाच शार्दूलोत्वोर्यदंतर ॥
[१] यत्तार्क्ष्ये काकयोरास्तस्य ते च तदतरम् ॥ २५७ ॥
रक्षो य दतर लोके स्पष्ट सिंहशृगालयोः ॥
तदतर राघवस्य तव च क्षुद्र किं त्वया ॥ २५८ ॥
स्थिते रा जीवनयने रामे नाथे धनुर्धरे ॥
हताप्यह त्वया पाप गमिष्यामि न ते वशम् ॥ २५९ ॥
इति म न्युमती सीता तमुक्त्वा रजनीचरम् ॥
वेपमाना बभौ तन्वी प्रवाते कदलीव सा ॥ २६० ॥

---

१ 'पूज्या नो महिषीभर' इति वा पाठ. २ 'देवी' इति वा पाठ ३ व्याघ्र व मार्जारे. ४ गरुड.

दृष्ट्वा श्री जानकी भीषा वेपमाना दशानन ॥
स्वरूप कालरूपाम भेजे भृश भयकरम् ॥ २६१ ॥
दिक्कुश रा विंशतिभुजो नीलजीमूतसन्निभ ॥
रक्ताम्बरधर प्रेक्ष्य मैथिलीरावणोऽब्रवीत् ॥ २६२ ॥
सीते म नोरयस्तेचेत्त्रिषु लोकेषु विश्रुतम् ॥
मामाश्रय वरारोहे तवाह सदृश पाते ॥ २६३ ॥
आत्म ज स्तेन राज्ञा स स्वपदे स्थापित प्रिय ॥
मद्वीर्यस्ततो ज्येष्ठ सुत प्रस्थापितो वनम् ॥ २६४ ॥
तेना प ताक्षि साम्राज्यच्युतेन गतचेतसा॥
किं करिष्यसि वामोरु तापसेनाल्पतेजसा ॥ २६५ ॥
नि स्वे रा मे पितृत्यक्ते तपस्विनि मितायुषि ॥
कैर्गुणैरनुरक्तासि मूढे पंडितमानिनि ॥ २६६ ॥
त्यक्त्वा म हीं स्त्रीवचसा योऽस्मिन्वसति कानने ॥
स्नेहस्तत्र न दुर्बुद्धौ मयि भावोऽस्तु ते चिरम् ॥ २६७ ॥
एव ज नकजामुक्त्वा स वामेन करेण ताम् ॥
केशेषु दक्षिणेनोर्वो परिजग्राह साहसी ॥ २६८ ॥
आदा य सीतामङ्केन रथमारोपयत्तदा ॥
प्रादव मृत्युसकाश त दृष्ट्वा वनदेवता ॥ २६९ ॥
परि ज ग्राह स यदा दारुण प्रसभेन सा ॥
अतिचुक्रोश हा राम हा रामेति भृशातुरा ॥ २७० ॥
आदा य तां विचेष्टन्तीं पन्नगेन्द्रवधूमिव ॥
सकाम आश्रमात्तस्मादुत्पपात स तार्क्ष्यवत् ॥ २७१ ॥
सीता रा क्षसराजेन ह्रियमाणा विहायसा ॥
भृश चुक्रोश मत्तेव सौमित्रे किं न पासि माम् ॥ २७२॥
कथ म न्दा-भुते त्व मां ह्रियमाणां न रक्षसि ॥
नानीषे तात सौमित्रे गुरुचित्तप्रसादक ॥ २७३ ॥

---

१ दशक २ मेव, ३ कथ [illegible] ४ आ [illegible]

कथं श्री मन्प्राप्तकाले शासनं न करोष्यरौ ॥
नन्नु नामाविनीतानां विनेतासि परंतप ॥ २७४ ॥
पाप रा क्षस कर्मेतत्कुरुषे काल्मोहितः ॥
जीवितांतकरं घोर रामाद्व्यसनमाप्नुहि ॥ २७५ ॥
यः का म स्ते स कैकेय्याः सिद्धोऽद्य सुखमाप्नुहि ॥
आमंत्रये जनस्थानं वदे गोदावरीं नदीम् ॥ २७६ ॥
देवा ज नस्थानगता ये मृगास्तरवोऽद्रयः ॥
नमस्करोमि तेभ्योऽद्य शरणं यामि तानहम् ॥ २७७
रामा—य शंसत क्षिप्रं दुरात्मा रावणो बलात् ॥
मामकामां हरत्येष व्याघ्रो बालमृगीमिव ॥ २७८ ॥
मां त्व रा वन्महातेजाः परलोकगतां प्रभुः ॥
आनेष्यति प्रियां भार्यां वैवस्वतहृतामपि ॥ २७९ ॥
एवं म हीजा करुण विलपंती सुदुःखिता ॥
वनस्पतिगतं गृध्रं दृष्ट्वोवाचायतेक्षणा ॥ २८० ॥
ह हो ज टायो पश्यायं ह्रियमाणां बलेन माम् ॥
वधूमनाथामिव ते रक्षसाऽनेन पापिना ॥ २८१ ॥
आर्या म मद्य नो शक्यः क्रूरोवारयितुं त्वया ॥
सत्ववान् जितकाशी च सायुधश्चापिदुर्मतिः ॥ २८२
सरो ज लोचनायेदं रामाय हरणं मम ॥
आख्यातव्यमशेषेण लक्ष्मणाय च धीमते ॥ २८३ ॥
महा य शाः ■ सुप्तोऽपि शुश्रावैतां वधूगिरम् ॥
ददर्श रावणं गृध्रो वैदेहीं च स्नुषां निजाम् ॥ २८४
स तं रा त्रिचराधीशं व्याजहार शुभां गिरम् ॥
श्रृणु भ्रातर्दशग्रीव जटायुर्नाम विश्रुतः ॥ २८५ ॥
अह म स्य वनस्येशो गृध्रराजः पुरातनः ॥
सख्युर्दशरथस्येयं स्नुषा मम च धर्मतः ॥ २८६ ॥

१ मम २ जय गर्वित.

राम श्री मान् सर्वलोकराज सर्वहिते रत ॥
तस्यैषा दयिता साध्वी मुधैना माऽनय कुरु ॥ २८७ ॥
इमा रा क्षसराज त्व मयि त्रातरि जीवति ॥
नैव नेष्यसि रामस्य प्रिया गीतामन्त्रक्रियाम् ॥ २८७ ॥
कार्यं म या प्रिय सर्वं तस्यावश्य महात्मन ॥
जीवितेनापि रामस्य तथा दशरथस्य च ॥ २८९ ॥
अह ज राग्रस्ततनु शक्तिहीनश्चिरतन ॥
षष्टिर्वर्षसहस्राणि जातानि मम रावण ॥ २९० ॥
त्व व य स्त्वा मध्येऽसि रथी खड्गी शरासनी ॥
तथापि कुशली सीतामादाय न गमिष्यसि ॥ २९१ ॥
इति रा क्षसराज स श्रुत्वा क्रुद्ध खगेश्वर ॥
अभिदुद्राव नि र्सीम समरोऽभूत्तयो द्वयो ॥ २९२ ॥
सोऽसम र्षणमुग्रेषून् पक्षाभ्या प्रविधूय त ॥
रावण विरथ चक्रे शक्रैश्वशनिभगदम् ॥ २९३ ॥
बभ ञ्ज कार्मुक तस्य चरणाभ्या खगेश्वर ॥
द्वितीय च नखैस्तस्य व्रणान् गात्रे चकार स ॥ २९४ ॥
तत्का ष त्राणमपि च व्यधुनोद्गृध्रसत्तम ॥
अकेनादाय वैदेहीं पपात भुवि रावण. ॥ २९५ ॥
अड ज प्रवर दृष्ट्वा जरया श्रातमाशु ■ ॥
उत्पपात पुनर्हृष्टो गृहीत्वा मैथिलीं तत ॥ २९६ ॥
निधा य जानकीमके खड्गेणैव दशाननम् ॥
गच्छत स समुत्पत्य तमावार्याब्रवीद्रुषा ॥ २९७ ॥
तस्क रा चरितो मार्गो नैष वीरनिषेवित ॥
स्त्रीरत्नमेतद्वैडिश त्व मीनो राक्षसाधम ॥ २९८ ॥
उक्त्वा प त मनस्येव तत्पृष्ठ विददार स ॥
अधिरूढो गजारोहोऽयथा स्याद्दुष्टवारणम् ॥ २९९ ॥

---

१ ढारे २ रण ३ मम दोंचा भग करणारा २ गळ ३ महान.

पुनः श्री मान् स महारान् दुःसहानकरोद्भृशम् ॥
केशांश्चोत्पाटयामास नखपक्षमुखायुधः ॥ ३०० ॥
गृध्र रा जेन स तदा क्लिश्यमानो मुहुर्मुहुः ॥
अमर्षस्फुरितोष्ठः सन् प्राकंपत निशाचरः ॥ ३०१ ॥
ता वा म तोऽङ्केन तदा सपरिष्वज्य जानकीं ॥
तले नाभिजघनार्तो जटायुः क्रोधमूर्च्छितः ॥ ३०२
क्रुद्धो ज टायुस्त तस्य प्रहारमभिनिर्चितयन् ॥
तुडेन त्रोटयामास तस्य वामभुजान्दश ॥ ३०३ ॥
भुजा य क्षपतेर्भ्रातु पूर्ववत्सहसाऽ भवन् ॥
विषज्वालावलीयुक्ता वाल्मीकादिव पन्नगाः ॥ ३०४ ॥
ततो रा क्षसलोकेशः सीतामुत्सृज्य वीर्यवान् ॥
मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ ३०५ ॥
सग्रा म स्तत्र स तयो र्मुहूर्तमतिवीर्ययोः ॥
बभूव घोरो वयसा रक्षसामधिराजयोः ॥ ३०६ ॥
य न ज टायोरामार्थं कुर्वाणस्य दशाननः ॥
पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥ ३०
आन्द य स्तातिसत्कीर्तिपुण्यधीर्मा स पक्षिराट् ॥
निपपात च्छिन्नपक्षो धरण्यामल्पजीवितः ॥ ३०८ ॥
दृष्ट्वा ज टायुष भूमौ रक्तार्द्रं पातित द्रुतम् ॥
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ३०९ ॥
त व य स्य प्रिय राज्ञः श्वशुरस्याऽङ्गजेश्वरम् ॥
सीता भुजाभ्यामालिंग्य रुरोद परया शुचा ॥ ३१०
सा तां रा पमुखी सीता निलम्पाकुलेन्द्रिया ॥
क्व रामलक्ष्मणौ वीरौ हा कष्ट दैव किं कृतम् ॥ ३११
अय म हात्मा कृपया त्रातु मामिह सगतः ॥
शेते विनिहतो भूमौ ममभाग्याद्विहगम. ॥ ३१२ ॥

---

१ कुबेराचा भाऊ. २ ताडिले ३ चंद्रमुखी.

पुन श्री दोनुज सीता वशूनिव महाद्रुमान् ॥
परव्जतीं जग्राह कशोष्वतकसंनिभ ॥ ३१३ ॥
सच रा चरमुद्भ्रातमेधेन तमसा वृत्तम् ॥
प्रर्धार्षताया वैदेह्या जगत्सर्वमभूत्तदा ॥ ३१४ ॥
पिता म ह परामृष्टां दृष्ट्वा ज्ञानेन जानकीं ॥
कृत कार्यमिति श्रीमान् व्याजहार भविष्यवित् ॥ ३१५ ॥
ये द्वि ज प्रवरा सर्वे दडकारण्यवासिन ॥
प्रधर्षिताया सीताया आसन् खिन्नाश्च हर्षिता ॥ ३१६ ॥
आदा य रामरामेति रुदतीं लक्ष्मणेति ताम् ॥
जगामाकाशमाविश्य राहुश्चद्रप्रभामिव ॥ ३१७ ॥
[1]तु रा र्व्य )मणिमय भ्रष्ट तच्चरणाबुजात् ॥
पपात भूषण भूमौ विद्यु मडलसन्निभम् ॥ ३१८ ॥
दृष्ट्वा म हीधरे पच वानरान् जनकात्मजा ॥
त मध्ये सोत्तरीयाणि भूषणानि मुमोच सा ॥ ३१९ ॥
तें ता ज नकजा देवीं विक्रोशता प्लवगमा ॥
नेत्रैरनिमिषैर्व्योम्नि ददृशु पिंगलोचना ॥ ३२० ॥
विहा य सा गृहीत्वा तामकेन भुजगीमिव ॥
पपासिधुमतिक्रम्य प्रविवेश निजा पुरीम् ॥ ३२१ ॥
अ रा ज पुत्रीं निदधे रावणोऽत पुरे निजे ॥
रक्षार्थ स्थापयामास राक्षसीर्घोरदर्शना ॥ ३२२ ॥
निधा य स्वालये सीता रावणोऽष्टौ निशाचरान् ॥
ज्ञातु प्रवृत्तिं रामस्य प्रेषयामास सर्वतान् ॥ ३२३ ॥
सस्न रा तं पुन सीता प्रलोभयितुमात्मन ॥
प्रासादान् दर्शयामास मणिकाचननिर्मितान् ॥ ३२४॥
नाना म णि मयान् भावान् महार्हान् पटुर्ल्भान् ॥
वापीश्च मणिसोपाना सहस्राणि स्वयोषिताम् ॥३२५॥

---

१ कुंभेऽन्त त

ततः श्री दानुजः सीतामुवाच शृणु सुंदरी ॥
द्वात्रिंशत्कोटिसंख्या मे राक्षसाः संति संमताः ॥३२६॥
किंक रा स्ते विना वृद्धैर्बालैस्तेषां तु शोभने ॥
सहस्रमेकमेकस्य मम कार्यपुरःसरम् ॥ ३२७ ॥
इदं म द्राज्यतंत्रं यत्त्वयि सर्वं प्रतिष्ठितम् ॥
जीवितंच विशालाक्षि त्वं मेऽसुम्योगरीयसी ॥ ३२८ ॥
त्वम ज स्वाशु मा सीते मम भार्या भव प्रिये ॥
किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ ३२९ ॥
पीड य त्यसितैःपागे कामो मां मृशदारुणः ॥
साधु किं तेऽन्यथाबुद्ध्या रोचयस्व वचो मम ॥३३० ॥
नसु रा सुरसंघैर्मे शक्या धर्षयितुं पुरी ॥
परिक्षिप्ता समुद्रेण लंकेयं शतयोजनम् ॥ ३३१ ॥
म हाजवः पार्श्वेन शक्यो वायुरवरे ॥
तथाहं विक्रमैरन्यै. सत्यं विद्धि वचो मम ॥३३२॥
एव ज स्यतमल्पं तमुवाच जनकात्मजा ॥
मा पाप व्यापदं प्राप्तुं मा कुलामय कामय ॥ ३३३ ..
त्वां प्र य त्वं विना रामो लक्ष्मणश्च महाबलः ॥
हनिष्यत्यचिरात्पुत्रैर्भ्रातृभिः सचिवैः सह ॥ ३३४ ॥
महा ज वैर्नैवैर्बाणैः प्राणांस्त्वां रहितं रणे ॥
कर्तुं समर्थो मे भर्ता स्मर्तासि वचनं तदा ॥ ३३५ ॥
अन य ब जड त्वां धिक् परस्त्रीसंगलालसं ॥
कालसंकाशमस्त्रं मे पत्युर्जातु न सालसं ॥ ३३६ ॥
अध्व रा ध्यर्चिता वेदि र्यथास्रुग्भांडमंडिता ॥
मंत्रपूता न शक्या सा चांडालेनावमर्दितुम् ॥ ३३७ ॥
अध म स्मद्गुणचिता तथा नाहं खलु त्वया ॥
नेदं रक्ष्यं जीवितं मे बधान च्छिन्धि वा वपुः ॥ ३३८ ॥

१ रावण २ "मया कार्या ओंकस्थर्य" इति मूलपुस्तक एव व्याख्यातम् ३ क आहेत नेत्रमांत जांचे. ४ प्रसाद कुरु मे क्षिप्र वश्योदासोऽहमस्मिते" इति ।६। कुल-रोग ६ वर्षा.

क्रुद्धः श्री मांस्तामुवाच मासान् द्वादश जानाकि ॥
प्रतीक्ष्येऽनेन कालेन यदि नाप्येषि मां ततः ॥ ३३९ ॥

प्रैत रा शाय सूदास्त्वां ननु छेत्स्यंति लेशशः ॥
इत्युक्त्वा राक्षसीर्घोरा उवाच दशकंधरः ॥ ३४० ॥

दर्प म स्या निशाचर्यो हरध्वं क्रव्यभोजनाः ॥
अशोकवनिकामध्ये नीयतां घोरदर्शनाः ॥ ३४१ ॥

गूढं ज नकजा तत्र रक्ष्यतां सांत्वतर्जनैः ॥
कुरुध्वं मेवशां सर्वा वन्यां गजवधूमिव ॥ ३४२ ॥

इति य ताः समादिष्टास्तच्चक्रुरतिदारुणाः ॥
अशोकवनिकां जग्मुः परिगृह्याशु जानकी ॥ ३४३ ॥

सुघो रा णां राक्षसीनां व्याघ्राणां हरिणीव सा ॥
जानकी वशमापन्ना शर्म लेभे नकिंचन ॥ ३४४ ॥

रामो म नासि तं शब्दं मारीचस्य स्मरन् द्रुतम् ॥
निवृत्तः श्वतः श्रुत्वा गोमायोर्भैरवं रवम् ॥ ३४५ ॥

तूर्णं ज गाम रामः स्वं मैथिलीं द्रष्टुमाश्रमं ॥
हंत घोराणि दृश्यते निमित्तानीतिचिंतयन् ॥ ३४६ ॥

दद य स्वास्थ्यमालेभे नागच्छंस्तूर्णमध्वनि ॥
दूरादनुजमायांतं दृष्ट्वाभूदतिशंकितः ॥ ३४७ ॥

अनु ज स्य मुखं दृष्ट्वा परिम्लानं गतप्रभम् ॥
मिलित्वा तेन तं रामः पप्रच्छागतिकारणं ॥ ३४८ ॥

विहा य सीतां विपिने घोरे राक्षससेविते ॥
कथं वत्सागतोसि त्वं कृतं गर्ह्यमिदं त्वया ॥ ३४९ ॥

वीर रा त्रिचरैः सीतापहृता भक्षितापवा ॥
नास्यत्र संदेहश्चक्षु र्वाम स्फुरति मे मुहुः ॥ ३५० ॥

अपि म ध्ये वन वीर त्वया त्यक्तां पुनः प्रियां ॥
प्राप्स्यामि जानकीं ब्रूहि कुतस्त्यक्त्वा त्वमागतः ॥ ३५१ ॥

---

१ "यानि असोहे संदेहवचन परिदेवनप्रमार्गमिनितव" होते मूल पुस्तके व्याख्यानम ध्यराती. २ मासाभिन्दो राक्षस (वर्ष=वर्षे मास) ३ अनुकार (गोन्दावें) अपशकुन.

इति श्री मत्तमाष्टः सौमित्रिः खिन्नमानसः ॥
कथयामास तत्सर्वं यदुक्तं परुषं तया ॥ ३५२ ॥

श्रुत्वा रा जीवनयनो वदन् हाहेति सत्वरः ॥
धात्रा सहाश्रमं गत्वा नापश्यत्तत्र मैथिलीं ॥ ३५३ ॥

नात्र म दयिता सीता क स्थिता सा गते त्वयि ॥
गोदावरीं नु यातासौ विचेतुं कुसुमानि वा ॥ ३५४ ॥

उट ज स्तु तया शून्यो निपुणं पश्य लक्ष्मण ॥
इति प्रियतमां रामोऽविचिक्रोश समंततः ॥ ३५५ ॥

निली य नूनं नर्माद्य करोति कमलेक्षणा ॥
सीते दृष्टासि दृष्टासि [3]कौशेयेनासि सूचिता ॥ ३५६ ॥

रामो रा मां विचेतुं तां प्रेषयामास लक्ष्मणं ॥
दृष्टानपि वनोद्देशान्स्वयमप्यसकृद्ययौ ॥ ३५७ ॥

तां द्रु म क्ष्माभृदेणेभान् पप्रच्छ प्राणवल्लभां ॥
प्राणिनो रोदयामास हा सीतेति रुदन् स्वयं ॥३५८॥

गृध्रं ज टायुषं रामः कुर्वन्नन्वेषणं वने ॥
अपश्यत् पतितं पृथ्व्यां परं प्रेम्णः पदं पितुः ॥३५९॥

तृष्णा य तं स निश्वस्य नवीभूतपितृव्यथः ॥
कुतस्तात दशेयं त इति पप्रच्छ तं रुदन् ॥ ३६० ॥

सरो ज नेत्र वैदेहीं हरती रावणादिति ॥
उक्त्वा प्राणान् जहौ पक्षी रामास्यन्यस्तलोचनः ॥ ३६१ ॥

चक्रे य यावत्तस्यासौ सर्वामप्युत्तरक्रियां ॥
पितुः सख्युर्महाशोके तां विस्मृत्य मनःप्रियां ॥३६२॥

गृध्र रा जं परित्यज्य मत्कृते यं हतो मृतः ॥
यथा दशरथः पूज्यस्तथैव मम लक्ष्मण ॥ ३६३ ॥

एवं म हामनाःप्राह गृध्राय गतिमुत्तमां ॥
स्वर्गं ददौ तदौदार्यं कोऽस्ति वक्तुं कविः क्षमः ॥ ३६४ ॥

---

१ अन्वेषयामास. २ विनोद. ३ रेशमी वस्त्र. ४ वृक्ष-पर्वत-हरण मनाव. ५ पितुर्दशरथ-स्य-परं प्रीति-स्थान. ६ रामगुखे अभिनिविष्टदृष्टि.

तत श्री मास सौमित्रि क्रौंचारण्य धनप्रभम् ॥
दिदृक्षमाणो वैदेहीं जगामासिधनुर्धर ॥ ३६५ ॥
तौ वी रा वतिवीर्याढ्यौ साताहरणदु खितौ ॥
मतगस्याश्रम प्राप्तौ गिरौ दृष्ट्वा महादरीम् ॥ ३६६ ॥
तस्या म हाकदराया अदूरे विकृताकृतिम् ॥
राक्षसी तौ ददृशतुर्भक्षयतीं मृगा बहून् ॥ ३६७ ॥
वने ज ग्राह सौमित्रि रतु राक्षस्ययोमुखी ॥
कर्णौ नासा स्तनौ तस्या म चिच्छेद महासिना ॥ ३६८ ॥
अत्रा य तभुजो भीम कबधो नाम राक्षस ॥
नग्राहातु हरिभ्यामद्विपाशो रामलक्ष्मणौ ॥ ३६९ ॥
तौ व रा भ्या रूपाणाभ्या तद्भुजौ याजनायतौ ॥
छित्वा मुक्तौ प्रभू तस्मात् ज्ञानिभक्तौ भवादिव ॥ ३७० ॥
सस म र्यावपृच्छत्तौ कबध कौ युवा वने ॥
कार्यं किं वामिति तदा सर्वं सौमित्रिरब्रवीत् ॥ ३७१ ॥
हृष्टो ज गाद तौ सोऽपि ज्ञात्वा शापान्तमात्मन ॥
दानवोऽह दनुर्नाम्ना सुरूपो रामलक्ष्मणौ ॥ ३७२ ॥
मद्ब य प्रदरूपेण मुनिभ्यस्त्रासदाऽभवम् ॥
शप्तोऽह स्थूलशिरसा युवाभ्यामद्य तारित ॥ ३७३ ॥
कृतो जं घतपित्राहमेव वज्रप्रहारत ॥
दाहोतर करिष्यामि युवयो कार्यमीप्सितम् ॥ ३७४ ॥
तेत य त्यर्पित वारी तद्दाहाचक्रतु प्रियम् ॥
दिव्य रूप विमान च प्राप्य तौ दनुरब्रवीत् ॥ ३७५ ॥
मान रा रामवर्तते पच सुग्रीव–नायका ॥
ऋष्यमूके गिरौ, रम्ये पम्पापर्यंतशोभिते ॥ ३७६ ॥
अर्य म प्रभव साधु सुग्रीवस्नेन राघव ॥
सख्य कुरु त्व दृष्ट्वा तां श्रमणीं शबरीं पथि ॥ ३७७ ॥

---

१ मिह बाप व हर्ती यास रागारा ( राक्षस ) २ ज्यंताचा बाप ( इंद्र ) ३ सूर्यपुत्र

दनुं श्री मान् रघूत्तंसः प्रेपयित्वा दिवं स्वयं ॥
ययौ पथा तदुक्तेन शबर्या रम्यमाश्रमम् ॥ ३७८ ॥
सा प रा मभ्युपगता मुदं सिद्धर्षिसंमता ॥
वन्येन पूजयामास भक्ता रामं सलक्ष्मणम् ॥ ३७९ ॥
ताभ्यां म तंगतच्छिष्यप्रभावं परमाद्भुतम् ॥
कथयामास शबरी कैवरी या तपःश्रियः ॥ ३८० ॥
यदा ज गत्पते राम चित्रकूटं त्वमागतः ॥
तदा गता ममाचार्या ब्रह्मलोकं महर्षयः ॥ ३८१ ॥
ते मां य दब्रुवन्रामे संपूज्यातिथिमाश्रमे ॥
आगच्छ ब्रह्मलोकं त्वमिति संपन्नमद्य तत् ॥ ३८२ ॥
शरी रा ज्याहुतिं हुत्वा हुताशे संप्रहर्षिता ॥
ब्रह्मलोकं गमिष्यामि त्वयाऽऽज्ञप्ता रघूत्तम ॥ ३८३ ॥
इति म थात्मजाकांत उक्तस्तामाह सन्मते ॥
शबरि ब्रह्मलोकं त्वं गच्छ श्रेयोऽस्तु सन्मते ॥ ३८४ ॥
नत्वा ज लधरश्यामं रामं सा मंजुभाषिणी ॥
पंपान्वर्त्मोपदिश्याग्नौ जुहावात्मानमुत्तमा ॥ ३८५ ॥
अन्हा[1] य शबरी दिव्यं रूपं लब्ध्वा हुताशनात् ॥
निर्गत्य व्योमयानेन ब्रह्मलोकं जगाम सा ॥ ३८६ ॥
वीरौ ज गतुरध्वानं तदुक्तमनुसृत्य तौ ॥
तां रम्यां सरसीं पंपां शर्पोंचितधनुर्लतौ[2] ॥ ३८७ ॥
पानी य वाहिनीं पंपां प्राप्तौ नाना द्रुमैर्वृताम् ॥
सखीभिरिव वल्लीभिर्वेष्टितां पंकजैश्चिताम् ॥ ३८८ ॥
स्वदा स्र पक्षिभिर्गीतां मुदा रामः सलक्ष्मणः ॥
पंपां प्राप्य वियोगार्तो विललाप स्मरन्प्रियाम् ॥ ३८९
दृष्ट्वा म यूरान्हंसांश्च सारसान् कोकिलान् शुकान् ॥
पंपायास्तीरमासाद्य साऽद्य केत्याह लक्ष्मणम् ॥ ३९०

इति श्री मंत्ररामायणे श्रीरामनंदनमयूरविरचितेऽरण्यकांडे ^

1 वेणी. 2 तात्काळ. 3 विंद्दुह्लता/

## किष्किंधाकांडम्.

ता पपा श्री मतीं प्राप्य स्मृत्वा सीता रघूत्तम ॥
विललाप भृश कांतावियुक्त कोंनै विन्हल ॥ १ ॥
पश्य वी रा त्र सुखिन कांतान्कांतान्विता खगान् ॥
दु खास्पदमह सा च वयतेऽद्य मम प्रिया ॥ २ ॥
धया स म य एतस्मिन् ये ये कांताभिरन्विता ॥
तान्वि तारयितु त्वाह नाल मेकैव धन्विता ॥ ३ ॥
वसते ज नितानंदे स्त्रीमता श्रीमता सताम् ॥
न ता लभेहं या प्राप्तो मुद प्राणभृता मताम् ॥४ ॥
सा मे प्रि य तमा सीता मरिष्यति मया विना ॥
अह च तामृते वत्स त्व साधु भरत व्रज ॥ ५ ॥
न हि ता रा जतनया सुकेशीं मृदुभाषिणीम् ॥
अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम् ॥ ६ ॥
अय हि म दिराक्ष्या मे वसतोऽत्यतमीप्सित ॥
नून परवशा सीता साऽपि शोचत्यह यथा ॥ ७ ॥
पृच्छामि ज ननीं किंनु स्नुषा मे क्वेति वादिनीम् ॥
पृच्छंत च जनक गुरु दुहितृवत्सलम् ॥ ८ ॥
अथवा ऽय ह्यसा स्पष्टमात्मान त्यजतो मम ॥
केय चिंता त्वया वत्स मामनुज्ञातुमर्हसि ॥ ९ ॥
इत्यग्र ज मर्तीवार्ते विलपतमनाथवत् ॥
त सौमित्रिरुवाचार्य न त्व शोचितुमर्हसि ॥ १० ॥
त्यज प्रि य-जने शोक स्मृत्वा दु ■ वियोगजम् ॥
अतिस्नेहपरिष्वंगाद्वर्तिरार्द्रापि दह्यते ॥ ११ ॥
सर्वथा रा वणस्तात न भविष्यति पापकृत् ॥
यदि गच्छति पाताल ततोऽप्यधिकमेव ■ ॥ १२ ॥
प्रवृत्तो म नुजाधिश लभ्यतां तस्य सर्वथा ॥
भविता कृतकार्यश्च वधिष्याम्यहमेव तम् ॥ १३ ॥

---

१ नेत्र २ रत्न ३ वामी

उत्साहः श्री मता कार्य आर्येनार्यस्योऽक्षयाः॥
महात्मानं कृतात्मानमात्मानं किं न बुध्यसे ॥ १४ ॥
धीरा वी रा महात्मानो नैवं कुर्वंति गर्हितम् ॥
चोरस्य तस्य काऽहंता हंताऽहं तान तं रणे ॥ १५ ॥
रामः सा-म-म्टो भ्रातु गिरा प्राप्य पुनर्धृतिम् ॥
पंपातोयं सुधा-धारामंपातोऽयं सतां पपौ ॥ १६ ॥
पंपातो .ज ग्मतु र्वीराद्दृष्यमूकं महागिरिम् ॥
तौ दृष्ट्वैव वित्रास सुग्रीवः कपिकुंजरः ॥ १७ ॥
आंजने य स्ततस्तेन प्रेषितो राघवांतिकम् ॥
नत्वा तापसवेषेण तावुवाच विचक्षणः ॥ १८ ॥
महाप रा क्रमौ देवप्रतिमौ तापसव्रतौ ॥
देशं कथमिमं प्राप्तौ त्रासयंतौ वनौकसः ॥ १९ ॥
कौ युवां मे हिमाद्रीसौ द्युतिमंतौ धनुर्धरौ ॥
यदृच्छयेव संप्राप्तौ चंद्रसूर्यौ वसुधराम् ॥ २० ॥
कीशेरा ज स्तीक्ष्णदंडो वाली तेन निराकृतः ॥
सुग्रीवो नाम तद्भ्राता ऋगहनाति दुःखितः ॥ २१ ॥
तेनाहं य स्तेंद्राभौ प्रेषितः पवनात्मजः ॥
भिक्षुरूपप्रतिच्छन्नो हनूमन्नाम वानरः ॥ २२ ॥
सोऽद्य ते ज स्विवर्याभ्यां युवाभ्यां सख्यमिच्छति ॥
कामरूपः कामचारी तस्याहं सचिवः प्रियः ॥ २३ ॥
कौसल्ये य स्तु तच्छ्रुत्वा स्तुत्वा त प्राह लक्ष्मणम् ॥
वत्सार्य पंडितः शक्यं वक्तुं नैवेदृगन्यथा ॥ २४ ॥
तं वान रा धिपस्यामं सचिवं प्राह लक्ष्मणः ॥
विदिता नो गुणा विद्वन् सुग्रीवस्य महात्मनः ॥ २५ ॥
तमेव म तिमन्नावां मार्गावः प्लवगेश्वरम् ॥
करिष्यावः प्रियं तस्य वचनात्तव सत्तम ॥ २६ ॥

---

१ रामूचे माग २ महात्मे ३ वानरराज

पप-ठ श्री मतो वृत्त रामस्य पवनात्मज ॥
सौमित्रि कथयामास ख्यातो दशरथ प्रभु ॥ २७ ॥

तस्याय रा जसिंहस्य ज्येष्ठ पुत्रो महाबल ॥
रामोनाम वन प्राप्तस्तद्गिरा तापसव्रत ॥ २८ ॥

भ्राताहं म रघनाथस्य लक्ष्मणो नाम किंकर ॥
भार्या रामस्य दयिता सीता नाम जनै श्रुता ॥ २९ ॥

तनया ज नकस्यार्यो गोदावर्यास्तटे वने ॥
आश्रम्या रहिते काले रक्षसापहृता तु सा ॥ ३० ॥

न तद्वा य त उद्वृत्त रक्षो विद्वन् विशेषत ॥
दनुर्नाम दिते पुत्र शापाद्राक्षसतागत ॥ ३१ ॥

ते नाथ रा क्षस पाप क्रूर सीतापहारिणम् ॥
ज्ञास्यतीति समाख्यात सुग्रीवो व्रजता दिवम् ॥ ३२ ॥

एतद्वी म तिमन् सर्वमाख्यात पृच्छतस्तव ॥
अहचाय रघूत्तम सुग्रीव शरण गतौ ॥ ३३ ॥

महारा ज सुते रामे शरण्ये शरणागते ।
यूथपै सह सुग्रीव प्रसाद कर्तुमर्हसि ॥ ३४ ॥

आमने य उवाचाहो ईदृशा सद्गुणार्णवा ॥
दृष्ट्यावानरेंद्रेण दिष्ट्या दर्शनमागता ॥ ३५ ॥

स व्यम्र ज गिरौ स्तोऽत्र हृतदारो रवे सुत ॥
सुग्रीवो वर्तते वीरौ साहाय्य वा करिष्यति ॥ ३६ ॥

तस्मान्न य त त सार्धं गच्छाम ऋश्यमूकम् ॥
इति श्रुत्वा तथेत्येवमूचतू रामलक्ष्मणौ ॥ ३७ ॥

तत स रा म सौमित्रि पृष्ठमरोप्य मारुति ॥
तौ सुग्रीवायाचचक्षे तद्वृत्त च यथाश्रुतम् ॥ ३८ ॥

सुग्रीवो म नुजेंद्रस्य सुतौ दशरथस्य तौ ॥
दृष्ट्वा प्रीतोऽभवज्ज्ञात्वा स्नेहेनो शरणागतौ ॥ ३९ ॥

---

१ पाठ [illegible]

सुग्रीवः श्री मतामाद्यं प्रीत्योवाच रघूत्तमम् ॥
भवान् धर्मविनीतश्च सुतपाः सर्ववत्सलः ॥ ४० ॥

आख्याता रा जसुत मे त्वद्गुणा वातसूनुना ॥
तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो ॥ ४१ ॥

यदि च्छा म पसे सख्यं वानरेण मया सह ॥
रोचते यदि सौहार्दं बाहुरेष प्रसारितः ॥ ४२ ॥

नवीन ज लदश्याम राम कामशनोत्तम ॥
गृह्यतां पाणिना पाणिर्मर्यादा वध्यतां ध्रुवा ॥ ४३ ॥

एतत्प्रि य वचः श्रुत्वा सुग्रीवस्य सुभाषितम् ॥
संप्रहृष्टमना हस्तं पीडयामास पाणिना ॥ ४४ ॥

तं वान रा णामधिपं पर्यष्वजत पीडितम् ॥
रामः सौहृदमालंब्य हर्षयामास हर्षितः ॥ ४५ ॥

पावक म थनोद्भूतं चक्रतुस्तौ प्रदक्षिणम् ॥
सखायौ रामसुग्रीवौ मल्लपाशौ बभूवतुः ॥ ४६ ॥

तौ नाभि ज ग्मतुस्तृप्तिमन्योन्य वीक्ष्य सन्मती ॥
रामः प्राह सखा मे त्वमेकं दुःखं सुखं च नौ ॥ ४७

स रामा य ददौ शाखां भङ्क्त्वा सालस्य पुष्पिताम् ॥
लक्ष्मणाय मरुत्पुत्रश्चन्दनस्य मनोरमाम् ॥ ४८ ॥

तस्यां रा ज सुतो रामः सुग्रीवश्च महामनाः ॥
निषसाद महाभागो लक्ष्मणश्चारुलक्षणः ॥ ४९ ॥

राम व य स्यः सुग्रीव उवाच रघुनन्दन ॥
वालिनो मे महाबाहो भयार्तस्याभयं कुरु ॥ ५० ॥

तमाह रा घवो मित्रमुपकारफलं सखे ॥
वानरेंद्रं वधिष्यामि[1] तव दारापहारिणम् ॥ ५१ ॥

सोऽपि रा म मुवाचाहं समानेष्यामि जानकीम् ॥
अनुमानात्तु जानामि मैथिली सा न संशयः ॥ ५२ ॥

---

१ हनिष्यामीति वा पाठ ।

रक्षसा श्री मती व्योम्नि ह्रियमाणा बलीयसा ॥
दृष्टा सा राम रामेति क्रोशन्ती लक्ष्मणेति च ॥ ५३ ॥
सा वान रा णामस्माकं मध्ये राम मुमोच यत् ॥
उत्तरीयं सभूषं तद्दर्शयिष्यामि तेऽनघ ॥ ५४ ॥
रामस्त म ब्रवीत्तूर्णं सखे तद्दर्शयाद्य माम् ॥
आनयोत्तिष्ठ सुग्रीव किमर्थं प्रविलम्बसे ॥ ५५ ॥
कपिरा ज स्तस्य गिरेर्गुहां तूर्णं प्रविश्य तत् ॥
आनीय दर्शयामास साम्बरं रत्नभूषणम् ॥ ५६ ॥
उत्तरी य मथालोक्य रामस्तद्भूषणानि च ॥
हा प्रिये जानकीत्युक्त्वा प्ररुदन्नपतत्क्षितौ ॥ ५७ ॥
अलङ्का रा नुत्तरीयं हृदि कृत्वा रुदन्बहु ॥
उवाच लक्ष्मण पश्य प्रियाया भूषणानि मे ॥ ५८ ॥
॥ वास्य म ब्रवीज्जाने न केयूरे न कुण्डले ॥
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥ ५९ ॥
कपिरा ज मथापृच्छद्रक्षसा निजमृत्यवे ॥
क देशे मे प्रिया सीता नीता जानासि चेद्वद ॥ ६० ॥
नयामि य मलोकं त सह सर्वैर्निशाचरैः ॥
इति श्रुत्वा प्रभोर्वाक्यमुवाच कपिनायकः ॥ ६१ ॥
न जाने जा गतां नाथ तस्य देशं कुलं बलम् ॥
सत्यं तु प्रतिजानामि त्यज शोकमरिंदम ॥ ६२ ॥
अहं म य त्न राजेंद्र करिष्याम्यचिरात्तथा ॥
यथा त्वं मुदिरश्याम राम प्राप्स्यसि मैथिलीम् ॥ ६३ ॥
ममापि हा यम प्राप्तं व्यसनं स्त्रीवियोगजम् ॥
परन्तु नैव शोचामि धीरस्तो वानरोऽपि सन् ॥ ६४ ॥
इति प्रे म मयं श्रुत्वा हितं वाक्यं रघूद्वह ॥
समारोप्यास्य बाहुभ्यां सत्रापमिदमब्रवीत् ॥ ६५ ॥

---

१ बलिना वानरेन्द्रेण

यत्तव श्री मतः कार्यं प्रथमं तत् करोम्यहम् ॥
त्वं प्रयत्नं कुरु सखे सीतायाः परिमार्गणे ॥ ६६ ॥
कथं वै—रा—मिरुद्भूतः सुग्रीव हृदि वालिनः ॥
तत्त्वं कथय तत्त्वेन करिष्ये प्रियमेव ते ॥ ६७ ॥
हृदि मे म न्युरुद्भूतः श्रुत्वा त्वामवमानितम् ॥
जानीह्यपुर्मया सृष्टो निरस्तश्च रिपुस्तव ॥ ६८ ॥
कपिः मां ज लिराहार्य दुंदुभेः पूर्वजः सुतः ॥
मायावी नाम तेजस्वी बलदृप्तो महासुरः ॥ ६९ ॥
स्त्रीकृते य दभूद्वैरं तेन राघव वालिनः ॥
तद्घोरमेकदा शत्रुः किष्किधाद्वारमागतः ॥ ७० ॥
आहूय रा त्री युद्धाय नर्दति स्म स कोपनः ॥
सुप्तो वाली स्वनं श्रुत्वा क्रोधान्न ममृषे प्रभो ॥ ७१ ॥
हंतुं त म सुरं वाली निःसृतोऽहं च राघव ॥
दृष्ट्वा मां वालिनं भीतः प्राद्रवत्सोऽसुर स्तदा ॥ ७२ ॥
विवरं ज गता नाथ जगत्या अवनोऽहितः ॥
संप्राविशत्स मायावी मायावीर्यो रघूत्तम ॥ ७३ ॥
कौसल्ये य बिलद्वारि स्वपादशपथैः स्वयम् ॥
अस्थापयत्स मां वाली प्रविशंते निवार्य सः ॥ ७४ ॥
रघुरा ज ततस्तूर्णं विशति स्म महाबिलम् ॥
तस्य तत्र प्रविष्टस्य साग्रसंवत्सरो गतः ॥ ७५ ॥
नर्दतां य स्तदा तत्र दैत्यानां निनदोऽभवत् ॥
स श्रोत्रमागतो मे नो वालिनः शौर्यशालिनः ॥ ७६ ॥
रक्तपू रा द्बिलात्तस्मात् सफेनाद्राम निःसृतात् ॥
भ्रातुर्वधमहं मत्वा भृशं शोकाकुलोऽभवम् ॥ ७७ ॥
बिलस्य म हतो द्वारं शिलया गिरिमात्रया ॥
पिधाय चोदकं कृत्वा किष्किंधामागतः सखे ॥ ७८ ॥

---

१ सोडला.

तद्वृत्त श्री मतो ज्ञात वालिनो भत्रिभि प्रभो ॥
ततोऽह तै समागम्य समेतैरभिषेचित ॥ ७९ ॥

न्यायेन रा ज्य तत्तस्य मयि शासति राघव ॥
हत्वा तमसुर वाली किष्किधामागतो गुहाम् ॥ ८० ॥

काकुत्स्थ म त्वा मा शत्रु राज्यकाम स साहसी ॥
इयेष भक्त प्रणत हतु बध्वा स्वमंत्रिण ॥ ८१ ॥

मयाग्र ज इति ख्यात समर्थेनापि निग्रहे ॥
स निर्वासितवान् राम वस्त्रेणैकेन मा कपि ॥ ८२ ॥

तस्माद्भ य मभूद्धारे भ्रातवानखिला महीम् ॥
रामाहमपविद्धश्च हृतदारश्च वालिना ॥ ८३ ॥

एत दु—रा—धर्षनग वालिन कारणांतरे ॥
प्रविष्टोऽस्मि महाराज वैरमेवमभून्महत् ॥ ८४ ॥

उवाच म घुद्दा रामस्त सुग्रीव शुचाकुलम् ॥
आत्मानुमानात्पश्यामि मग्नस्त्व शोकसागरे ॥ ८५ ॥

सुग्रीव ज हि शोक मे शरा प्राणहरा रिपो ॥
त्वामह तारयिष्यामि काम प्राप्स्यसि पुष्कलम् ॥ ८६ ॥

प्राप्तभ य उवाचायो सुग्रीवो राघव प्रभुम् ॥
वालिन पौरुष श्रुत्वा विधत्स्व यदनतरम् ॥ ८७ ॥

चतुरो ज लधीन् व्रीह्मे मुहूर्ते नियमुत्थित ॥
क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लम ॥ ८८ ॥

गुरूण्य य त्नत शैलशिखराणि स वीर्यवान् ॥
ऊर्ध्वे कदुकवत्क्षिप्त्वा प्रतिगृण्हाति राघव ॥ ८९ ॥

मनुष्य रा ज महिषो दुदुभिर्नाम दारुण ॥
मह्य युद्ध प्रयच्छेति स उवाच महार्णवम् ॥ ९० ॥

नाह स म र्थ भ्गुर शकरस्य हिमाचल ॥
[1] महाप्यनवोद्याम सागरो वरदार्पितम् ॥ ९१ ॥

---

1 मार्ग्री

श्रद्युरः श्री शैलस्यापि गजेंद्रप्रतिमाः शिलाः ॥
क्षिपंतं बहुगर्जतं प्रादुर्भूयाब्रवीदिदम् ॥ ९२ ॥

यो वान रा णामधिपो वाली शक्रात्मजो बली ॥
प्रदास्यति स ते युद्धं न त्वं मां क्रोष्टुमर्हसि ॥ ९३ ॥

किष्किंधां म हिषः प्राप्य रुद्ध्वा द्वारं मदोद्धतः ॥
ननर्द कंपयन् भूमिं दुंदुभिर्दुंदुभिर्यथा ॥ ९४ ॥

खुरैः स ज गतीं मत्तो दारयामास भूरुहान् ॥
भंजन् द्वारं विषाणाभ्यांमालिखन् करिराडिव ॥९५॥

तं श्रुत्वा य मारिं वाली निष्क्रम्यांतःपुराद्रुषा ॥
उवाच दुंदुभे प्राणान् रक्ष त्वं विदितोऽसि मे ॥ ९६ ॥

कपे गि रा किमनया स्त्रीणामंतिक उक्तया ॥
मह्यं युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ९७ ॥

श्रुत्वेवं म हिषप्रोक्तं वालिना हेममालिना ॥
निहतो लीलया क्षिप्तो वेगेनैकेन योजनम् ॥ ९८ ॥

रामरा ज तमाविध्य गजायुतबलं खलम् ॥
गृहीत्वा शृंगयोर्दूरं चिक्षेप कपिकेसरी ॥ ९९ ॥

ये श्रुत्वा य स्य वदनादुद्गता रक्तबिंदवः ॥
पर्वेतुस्तेऽनिलोत्क्षिप्ता मतंगस्याश्रमे शुचौ ॥ १०० ॥

मुनिरा ज स्ततिक्रुद्धः शप्तवान् वालिनं प्रभो ॥
तेनात्र न प्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ॥ १०१ ॥

वालिनो य इह स्थाने केचित्स्थास्यंति वानराः ॥
बहुवर्षाणि शैलत्वं तेषामपि भविष्यति ॥ १०२ ॥

तं वान रा णां वदनात् शापं श्रुत्वा कपीश्वरः ॥
ऋष्यमूकमिमं द्रष्टुमपि राम बिभेत्यलम् ॥ १०३ ॥

अतोह म त्र तिष्ठामि द्विपोऽपगतसाध्वसः ॥
गिरिकूटनिभः शुष्कः कायस्तस्यैव दृश्यते ॥ १०४ ॥

---

१ श्रीरंड ( शिव ) २ रेडा.

इमे च श्री भूतः शालाः सप्त शाखावलंबिनः ॥
यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ १०५ ॥
एतद्धि रा म तद्वार्यं मया सर्वं प्रकाशितम् ॥
कथं तं वालिनं हंतुं समरे शक्ष्यसे नृप ॥ १०६ ॥
सुग्रीव म य तच्छ्रुत्वा प्रहसल्लक्ष्मणोऽब्रवीत् ॥
कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् ॥ १०७ ॥
कपि रा ज उवाचाग सप्त शालानिमान् पुरा ॥
एकमेकैकशो वाली पीडयामास चासकृत् ॥ १०८ ॥
एषाम— य भंग राम एकमेकेषुणा यदि ॥
विदारयेद्धतं मन्ये वालिनं शक्तिशालिनम् ॥ १०९ ॥
यस्त्वेतत् रा सुरस्यास्थि पादेनैकेन लक्ष्मण ॥
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते ॥ ११० ॥
उवाच म धुरं रामः मययो मे न विक्रमे ॥
तर्हि तं समरे श्लाघ्यमहमुत्पादयामि ते ॥ १११ ॥
उक्त्वैवं ज गदीशस्तं दुंदुभेः कायपंजरम् ॥
पादांगुष्ठेन चिक्षेप लीलया दशयोजनम् ॥ ११२ ॥
आर्द्रः पा य लदा, शुष्क इदानीं, तेन राघव ॥
नात्र शक्यं बलं ज्ञातुमिति कीशाधिपोऽब्रवीत् ॥ ११३ ॥
तच्छ्रुत्वा ज गतां नाथः शालानुद्दिश्य सायकम् ॥
मुमोचाशु स तान् सप्त भित्वा भूमिं च दुर्धरः ॥ ११४ ॥
पाताले य मसातरस्वा दानवान् शरार्थं पुनः ॥
प्रविवेश मुहूर्तेन तद्दृष्ट्वा विस्मितः कपिः ॥ ११५ ॥
प्रणम्य रा घवायाह सेंद्रानपि सुरान् शरैः ॥
समर्थोऽसि रणे हंतुं किं पुनर्वालिनं प्रभो ॥ ११६ ॥
अ...र्ते त म दैव रणे कपिपार्थे महाभुज ॥
नहि दाशरथे तुभ्यं मया बद्धोऽयमंजलिः ॥ ११७ ॥

---

१ रस २ मरिचपुर

तं रामः श्री पतिः प्रेम्णा परिष्वज्याब्रवीत्सखे ॥
इतो गच्छाम किष्किंधां क्षिप्रं गच्छ त्वमग्रतः ॥ ११८ ॥
गत्वा चा रा दर्शंत तमाव्हय भ्रातृगंधिनं ॥
त्वया समागतं पापं हंताशु मम मार्गणः ॥ ११९ ॥
तथेति म हदास्थाय धैर्यं कीशो गतोऽग्रतः ॥
वृक्षैराःछानमावृत्य रामोऽतिष्ठन्महावने ॥ १२० ॥
सुग्रीवो ज नितोत्साहो बध्वा परिकरं दृढं ॥
वेगेन व्यनदद्घोरं कोपादाहूय वालिनं ॥१२१॥
सभरा य समाहूतः क्रोधांधो वानरेश्वरः ॥
निष्पपात सुसंरब्धो भास्करोऽस्तंतटादिव ॥ १२२ ॥
ततःप रा क्रम[1]तोस्तयो र्भ्रात्रोः सरोषयोः ॥
रणोऽभवत्सुतुमुलो बुधांगारकयोरिव ॥ १२३ ॥
दृष्ट्वा स म स्वरूपौ तावुभौ देवाविवाश्विनौ ॥
नावगच्छत्सुकंठं सं वालिनं वापि राघवः ॥ १२४ ॥
ततो नि ज मिषु मोक्तुं बुद्धिं चक्रे न राघवः ॥
भग्नः सुकंठोऽजानानो नाथं शैलमनुद्रुतः ॥ १२५ ॥
प्राप्ताभ य माभिप्रेक्ष्य ऋष्यमूकमगं गतं ॥
मुक्तोऽद्यासि त्वामित्युक्त्वा परावृत्तः कपीश्वरः ॥ १२६ ॥
सहानु ज स्तमागच्छद्राघवोऽमुमुवाच सः ॥
आव्हयस्वेति मामुक्त्वा किमिदानीं त्वया कृतं ॥ १२७ ॥
रामो य य स्यं श्लक्ष्ण तमुवाचाभिसांत्वयन् ॥
श्रूयतां कारणं तात क्रोधश्च व्यपनीयतां ॥ १२८ ॥
परस्प रा भिन्नरूपस्वराविक्रमवेगयोः ॥
सादृश्यातिशयाद्भ्रात्रोर्व्यक्तिर्वो नोपलक्षिता ॥ १२९ ॥
छ्व ग म पत्तेऽप्यंतं सादृश्यान्मोहितेन वां ॥
त्वद्घातशंकितेनेषुर्न प्रक्षिप्तः सखे मया ॥ १३० ॥

१ भानुपीडक. २ अस्ताचल.

तत्त्वया श्री मता भूयो योद्धव्यं तेन वालिना ॥
हंताहं तात तं दृष्ट्वा त्वय्यभिज्ञानमुज्ज्वलम् ॥ १३१ ॥

उक्त्वैवं रा घवः प्राह लक्ष्मणोचित सत्वरम् ॥
प्रफुल्लां नागपुष्पीं त्वं सख्युः कंठे स्वयं कुरु ॥ १३२ ॥

स्रगंग म स्तया कंठे कृतया लतया बभौ ॥
आकाशे शारदश्चंद्रो यथा नक्षत्रमालया ॥ १३३ ॥

सुग्रीवो ज यकामस्तां किष्किंधां प्राप्य वालिनम् ॥
आह्वयामास सहसा स्वपुरात्सोऽपि निर्गतः ॥ १३४ ॥

वाली प्र य तयोऽसिक्तस्तारया श्रुतवृत्तया ॥
निवारितोऽपि निरगादपुनर्गतये गृहात् ॥ १३५ ॥

तं संग रा य प्रवृत्तं पुनर्वालिनमुद्धतम् ॥
हीयमानं च सुग्रीवं दृष्ट्वा श्रितहितः प्रभुः ॥ १३६ ॥

बाणेन म हता रामस्ताडयामास वक्षसि ॥
स विद्धवक्षाः सहसा निपपात धरातले ॥ १३७ ॥

इंद्रध्व ज इवोद्धूतो गतसत्वो विचेतनः ॥
पातितः प्लवगाधीशः प्रभोः परशराहतः ॥ १३८ ॥

सुरना य कदत्ता या माला कंठेऽस्य कांचनी ॥
सा दधार श्रियं प्राणान् पातितस्यापि वालिनः ॥ १३९ ॥

देवैरा ज सुतो दृष्ट्वा समीपे सानुजं प्रभुम् ॥
गर्हयामास बहुशः पराङ्मुखतयाहतः ॥ १४० ॥

कः क्षत्रि य कुले जातः श्रुतवान् नष्टसंशयः ॥
धर्मलिंगप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ १४१ ॥

शठः क्रू रा चरणवान् मिथ्या प्रश्रितमानसः
कथं दशरथेन त्वं जातः पापो महात्मना ॥ १४२ ॥

सुग्रीव म नसः कर्तुं प्रियमेतत्कृतं त्वया ॥
सदारप्रतिकांक्षेण राम कामपरात्मना ॥ १४३ ॥

---

१ इन्द्रध्वज [illegible] २ [illegible] ३ [illegible]

रावणं श्री मदांधं तं पूर्वं सप्रार्थितोऽह्यहं ॥
नैकाह्नेन क्रिमाहर्ता कंठे बध्वा तवांतिकं ॥ १४४ ॥

पारावा रा प्सु वा न्यस्तां पाताले वापि मैथिलीं ॥
आनयेयं तवादेशाद्धयग्रीव इव श्रुतिं ॥ १४५ ॥

इत्यादि म न्युमान् राममुवाच कुवचः कपिः ॥
तमुवाच प्रभुर्न त्वं धर्मं जानासि वानर ॥ १४६ ॥

भरतो ज गतीपालस्तदाज्ञाकारिणा मया ॥
वध्या अधार्मिकाः सर्वे नृपैरन्यैरपि क्षितौ ॥ १४७ ॥

त्वं यवी य सउदृत्त भार्यायां खलु वर्तसे ॥
पुत्रः कनीयान् धर्मेण तद्भार्या च स्नुषा मता ॥१४८॥

भ्रातृदा रा पहर्तारं हत्वा त्वां वानराधमं ॥
धर्मस्य रक्षणाल्लोकसंग्रहोऽप्य मया कृतः ॥१४९॥

नमेऽत्र म नसस्ताप श्रुत्वा दृश्याश्च भूमिपाः ॥
मृगान् हत्वापि निर्दोषास्त्वं च शाखामृगः स्फुटं ॥१५०॥

इत्युक्तो ज गदीशेन वाल्युवाच रघूत्तम ॥
मया यदुक्तं परुषं तत्क्षमस्व कृपां कुरु ॥ १५१ ॥

मम का य जमत्यंतप्रिय तारेयमंगदं ॥
पालयामुं च सुग्रीवं पुत्रवद्बंधुवत् प्रभो॥ १५२ ॥

रघुरा ज मम प्राणप्रियां तारां तपस्विनीं ॥
सुग्रीवो नावमन्येत तथा कर्तुं त्वमर्हसि ॥ १५३ ॥

कौसल्ये य स्तमाह त्वं वालिन् पुण्यां गतिं व्रज ॥
सुतं ते पालयिष्यावस्तां तारां च शुचं त्यज ॥१५४॥

तत्र ता रा ययौ पद्भ्यां रुदती ससुता द्रुत ॥
रामादिभिर्व्यश्चित्तैस्तस्याविलपितं श्रुतम् ॥ १५५ ॥

कांचनी म य तां माल्यां सुग्रीवाय ददौ स्वयं ॥
रामस्य कुरु साहाय्यं तारायाश्च वचो हितं ॥१५६॥

---

१ तारासुत.

राग्यस्य श्री स्त्वा भजतु पाल्यागदमात्मज ॥
कारिष्यति महत्कर्मेत्युवाचानुजमानत ॥ १५७ ॥

उवाच रा जा कोशानामय त पुत्रमगद ॥
वत्स त्राता पिता तेऽय सुग्रीवस्त्वममु भज ॥१५८॥

इत्युक्त्वा म रण प्राप्तो गतो वाली वरा गति
सुग्रीव कर्म तत् कृत्वा पश्चात् तप्तोऽभवद्भृश ॥१५९॥

उवाच ज गता नायमृष्यमूकमह गिरि ॥
गतुमिठामि किष्किधामगद पालयिष्यति ॥ १६० ॥

आजने य प्रभृतयो वानरा राम जानकीं ॥
विचिन्वतु समर्थस्त्व हतु दारापहारिण ॥ १६१ ॥

न वान रा णा राज्य मे प्रिय राम न जीवित ॥
हत्वाग्रज कृपा जातोऽकीर्ते शोकस्य भाजन ॥१६२॥

त शुच म हर्ता प्राप्त सुग्रीव राघव प्रभु ॥
स्वयमाश्वासयामास मधुरार्भिर्हितोक्तिभि ॥ १६३ ॥

सा प्रभ ज नपुत्रेण तारा पूर्वप्रबोधिता ॥
उवाच राम शोकार्ता भो भो राजीवलोचन ॥१६४॥

रघुना य क मे भर्ता येन समेपितो दिव ॥
मा च तेनैव बाणेन पत्यु प्रेषय सन्निधि ॥१६५॥

मा विना क ल्पदद्याम धामधाम वराकृते ॥
रभोर्वश्यादप्सरोभि स्वर्गेऽपि न स रस्यते ॥१६६॥

अप्रमे य दयस्तारामुवाच प्रभुसत्तम ॥
शोक मा कुरु भद्रे त्व सुग्रीवान्मुदमाप्स्यसि ॥१६७॥

त्व यौव रा ज्ये तनय दृष्ट्वांगदमपि स्थित ॥
प्रीति प्राप्स्यसि कल्याणि वैरपन्यस्यत्न शुचा ॥१६८॥

कुरु त्व य स्य सुग्रीव प्रेतकार्यमनन्तर ॥
इत्युवाच तदा युक्त सौमित्रिर्मित्रवत्सल ॥१६९॥

---

१ नभार्गा

अंगदः श्री मदाब्रमः पितुर्दाहं यथाविधि ॥
चकारानंतरं रामं हनूमान् वाक्यमब्रवीत् ॥१७०॥

राजाधि रा ज राम त्वं किष्किंधायां कुरु स्थितिम् ॥
अर्चयिष्यति रत्नैस्त्वामभिषिक्तः कपीश्वरः ॥१७१॥

धनश्या म स्तमाहाहं चतुर्दश समाः पुरम् ॥
ग्रामं वा न प्रवेक्ष्यामि पितुर्निर्देशकारकः ॥१७२॥

कपिरा ज स्स्वयं तस्यां गुहायामभिषिच्यताम् ॥
सुग्रीवमप्युवाच त्वं वालिनः पुत्रमंगदम् ॥ १७३ ॥

मम प्रि य ममुं योग्यं यौवराज्येऽभिषेचय ॥
प्रावृष्यस्यां प्रस्रवणे स्थास्यामि सहलक्ष्मणः ॥१७४॥

कार्तिके रा वणवधे यतस्व सचिवैस्सह ॥
एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ॥१७५॥

इत्युक्ते म र्कटाधीशे तस्मिन् राज्यपदे स्थिते ॥
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥१७६॥

उवास ज लमुक्काले गुहायां सानुजः प्रभुः ॥
अहर्निशं प्रियतमां स्मरंस्तद्विरहाकुलः ॥ १७७ ॥

स्मृत्वा प्रि य तमां रामो बभूवार्तमना यदा ॥
तदा पुनर्लब्धधृतिं तं चकार स लक्ष्मणः ॥ १७८ ॥

रामोऽनु ज मुवाचाहं स्थितोऽस्मि वचने तव ॥
सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ १७९ ॥

आंजने य स्तदोवाच सुग्रीवं रतिलंपटम् ॥
कार्यं चिंतय रामस्य स्मृत्वा तेन कृतं प्रियम् ॥१८०॥

स वान र स्तदोपांस्तांस्त्वमाज्ञाप्य सांगदः ॥
इत्युवाच स वध्यो मे यः पक्षं लंघयिष्यति ॥१८१॥

प्लवंग म पतेराज्ञां पुरस्कृत्याशु वानरान् ॥
दूतान् प्रस्थापयामास हनूमानंगदश्च सः ॥१८२॥

---

१ उगव. २ सुप्रसन्नता-पक्षी स्वच्छता.

शरद श्री रतीवार्तं यदा चक्रे मनस्तदा ॥
उवाच लक्ष्मण रामो वत्स मत्त कापि श्रिया ॥१८३॥

व्रज वी रा धुनैव त्व किष्किधा ब्रूहि त काप ॥
न स सकुचित पथा येन वाली हतो गत ॥१८४॥

वाली स म रएकेन शरेणैको हतो मया ॥
त्वा तु सत्यादतिक्रात हनिष्यामि सबाधव ॥१८५॥

सुमित्रा ज स्तदोवाच हन्मि सत्यच्युत कपि ॥
यदार्थ कार्यमस्माक वालीपुत्र कारेष्यते ॥१८६॥

कृपाल य स्त सौमित्रिमुवाच पुरुषोत्तम ॥
स्मर सख्य महाबाहो मैव त्व कुरु निश्चय ॥१८७॥

सामैव रा ज्ञि तस्मिस्त्व प्रथम कुरु लक्ष्मण ॥
कालोऽतिक्रातइत्येव ब्रूहीषदपि माऽप्रिय ॥१८८॥

रूक्षाणि म तिमन्मैव ब्रूहि प्रीति समीक्ष्य ता ॥
इत्यग्रजोक्त सौमित्रिर्जगाम भवन कपे ॥१८९॥

रामानु ज स्त्वतिक्रुद्ध स-भयकरकार्मुक ॥
किष्किंधायाश्चलन् मार्गे त्वरया परया युत ॥१९०॥

ते त भ य परीतागा क्षुब्ध दृष्ट्वा प्लवगमा ॥
कालमृत्युयुगाताभ शतशो विप्रदुद्रुवु ॥१९१॥

कीशरा ज गृह प्राप्य भयव्याकुलमानसा ॥
क्रोधमागमन चैव लक्ष्मणस्य न्यवेदयन् ॥१९२॥

सचिवा य त्नवतस्ते किष्किधाद्वाररक्षणे ॥
कपीनाज्ञापयामासु सालतालशिलायुधान् ॥१९३॥

द्विगुण रा धन क्रुद्ध कपीन् दृष्ट्वा रणोद्यतान् ॥
अगदस्त समासाद्य विषादमगमत् पर ॥१९४॥

त प्रणा म पर प्राह लक्ष्मणो वत्स मागत ॥
सुग्रीवाय स्थित द्वारि निवेदागच्छ सत्वर ॥१९५॥

स गतः श्री-मताज्ञप्तो नत्वा तारां हेमां गुरुम् ॥
कथयामास सौमित्रिः क्रुद्ध आगत इत्ययम् ॥१९६॥

स वान रा धिपः सुप्तस्तदुक्तं न विबुद्धवान् ॥
यदासीन्मदमत्तश्च मदनेन च मोहितः ॥१९७॥

प्लवंग म भटाश्चक्रुर्भीताः किलकिलां समम् ॥
महता तेन शब्देन प्रत्यबुध्यत वानरः ॥१९८॥

रामानु ज मतिक्रुद्धमागतं वानरेश्वर. ॥
श्रुत्वांगदादभूत्त्रस्तः सोऽपृच्छत् कोपकारणम् ॥१९९॥

आंजने य उवाच त्वं प्रमत्तः कपिनायक ॥
प्रवृत्तां शरदं राजन् न जानीषेऽत एव रुष्टः ॥२००॥

त्वं तिष्ठ रा जन् समये भर्तुर्भार्येव तद्वशे ॥
मूर्ध्ना प्रणम्य सौमित्रिं त्वं प्रसादय सत्वरम् ॥२०१॥

प्लवंग म पतिः पुत्रमंगदं कनकांगदम् ॥
प्रेषयामास सौमित्रिमंतरानेतुमाशु तम् ॥ २०२ ॥

अंगदो ज वतो गत्वा नत्वा सौमित्रिमादरात् ॥
प्रवेशयामास पुरीमयोध्याधिकसंपदम् ॥ २०३ ॥

कौशा भ य प्रांजलयो दूरे तस्थुर्निरायुधाः ॥
प्रविष्टे लक्ष्मणे वीरे नोचुः किंचिदधोमुखाः ॥२०४॥

सुग्रीवो ज नितत्रासोऽभवच्छ्रुत्वा धनुर्ध्वनिम् ॥
तारामुवाच गच्छ त्वं तं स्तुलाऽपैरुषं कुरु ॥२०५॥

ताराप्रि य समादिष्टा प्रत्युद्गम्य मदाकुला ॥
सांत्वयामास,सौमित्रि सा सुधासारसूक्तिभिः ॥२०६॥

दृष्ट्वा ता रा समानीतं सौमित्रिं कुपितं भृशम् ॥
रुमया सह सुग्रीव उत्तस्थौ कांचनासनात् ॥२०७॥

प्रांजलिं म हित्वावृंदान्निसृतं पुरतः स्थितम् ॥
लक्ष्मणः क्रोधरक्ताक्षो मदशोणाक्षमब्रवीत् ॥२०८॥

---

१ सुग्रीव पत्नी. २ जुळता (सुग्रीव). ३ गोगाट. ४ क्षोभ. ५ अप-रुप ; अ-परुष वा

कृतघ्न श्री-मद्याविप्र, स्त्रैण मद्यप टुमते ॥
मिथ्याप्रतिज्ञ सुग्रीव राम च विस्मृत" कथम् ॥२०९॥

गोघ्ने सु रा पे चौरे च तथा भग्नव्रते जने ॥
निष्कृतिर्विहिता सद्भि कृतघ्ने नास्ति निष्कृति ॥२१०॥

ननु ना म कृतार्थेन त्वया रामस्य वानर ॥
सीताया मागणे यत्न कार्य आनृण्यमिच्छता ॥२११॥

कोशरा च कृते तिष्ठ समये तमये स्मर ॥
नोचेत् सद्य शरैस्तस्य हतो द्रक्ष्यसि वालिनम् ॥२१२॥

तारा श्रे य क्रूर वाक्यमुवाच विनयान्विता ॥
कुमार नैव वक्तव्यो नाय परुषमर्हति ॥२१३॥

न शठो रा जपुत्रायमुपकार न विस्मृत ॥
राज्य रुमा मा कीर्तिंच प्राप्तो रामप्रसादत ॥२१४॥

सुदु त्व म नुभूयादौ प्राप्येद सुखमुत्तमम् ॥
प्राप्तकाल न जानीते विश्वामित्रो यथा मुनि ॥२१५॥

स गाधि ज स्तदाऽऽसक्तो घृताच्या वत्सरान् दश ॥
अहोऽमन्यत धर्मात्मा किं पुनर्य र्थक्जन ॥२१६॥

अविता य मनोऽस्य त्व सहसा रोपमुत्रणम् ॥
कर्तुं नार्हसि सौमित्रे मित्रेऽस्मिन् मित्रवत्सल ॥२१७॥

महारा ज प्रियार्थं मा रुमामगदमप्ययम् ॥
रा"य प्राणाश्च सुग्रीवस्त्यजेदिति मतिर्मम ॥२१८॥

राम मि य तमायुक्त हत्वा त राक्षसाधमम् ॥
करिष्यत्येन न चिरादल मे नास्ति सशय ॥२१९॥

"काया ग क्षसाना तु राजपुत्र श्रुतानि मे ॥
शतकोटिसहस्राणि तथा षडयुतानि च ॥२२०॥

नरोत्त म तथा त्रिंशत् सहस्राणि शतानि च ॥
एवमाख्यातवान् गी सम्यभिज्ञो हरीश्वर ॥२२१॥

---

१ "'"भन, २ "मगादप ३ दिवस ४(८) = उपवन

कपीनां श्री मतानेन तयर्क्षाणां च राघव ॥
कोटीरनेका आनेतुं दूताः संप्रेषिताः प्रभो ॥२२२॥
तान्वान रा न् महावीर्यानृक्षांश्चामितविक्रमान् ॥
प्रतीक्षमाणोऽयं वीर न निर्याति हरीश्वरः ॥२२३॥
अद्य त्वा म मिता ऋक्षा गोलांगूलाश्च सत्तम ॥
उपयास्यंति सिद्ध्यर्थं जहि कोपमरिंदम ॥२२४॥
मैत्र्या भ ज स्व सुग्रीवं भजमानं महाभुज ॥
इति तारावचः श्रुत्वा प्रसन्नो लक्ष्मणोऽभवत् ॥२२५॥
तं सखा य मुवाचाथो सुग्रीवो मधुरं वचः ॥
सीतां प्राप्स्यति रामस्तं रावणं च वधिष्यति ॥२२६॥
कः शक्तो रा ज सिंहस्य ख्यातस्य स्वेन कर्मणा ॥
तादृशं प्रतिकुर्वीत लेशेनापि नृपात्मज ॥२२७॥
येन प्र म थितो वाली बाणेनैकेन लीलया ॥
माहेश्वरं धनुर्भग्नं सहायैस्तस्य किं प्रभोः ॥२२८॥
राजरा ज स्य व्रजतो हंतुं तं रावणं रणे ॥
अनुयात्रां करिष्यामि दासोऽहं वानरैः सह ॥२२९॥
सौमित्रे प्र यातिक्रांतं किंचिद्विश्वासतः प्रभो ॥
प्रेष्यस्य मे तत् क्षंतव्यं न कश्चिन्नापराध्यति ॥२३०॥
कपिरा ज स्य वाक्येन प्रीतः सौमित्रिरब्रवीत् ॥
त्वया नाथेन मे भ्राता सनाथः सर्वथा सखे ॥२३१॥
योग्यः श्रि-प-र्मिमां भोक्तुं त्वं सुग्रीव कपीश्वर ॥
यत्कीर्त्तं रामतस्त्वत्तः कोऽन्यः सम्यतुले बले ॥२३२॥
सदृशो रा घवेण त्वं विक्रमेण बलेन च ॥
सहायो दैवतैर्दत्तश्चिराय कपिपुंगव ॥२३३॥
किंतु त्व म द्यैव सखे निष्क्रम्येतो मया सह ॥
सांत्वयस्व वयस्यं तं भार्याहरणदुःखितम् ॥२३४॥

---

१ वानर. २ सेवक.

शोचत श्री मत श्रुत्वा विलाप भृशदु सहम् ॥
यन्मया परुषाण्युक्तस्त क्षमस्व सखे मम ॥२३५॥
तच्छ्रुत्वा रा घववच सुग्रीवो हृष्टमानस ॥
उवाच मारुति दूतान् पुन प्रेरय शीघ्रगान् ॥२३६॥
स्थिता हि म गिरौ कीशा कैलासे मदरे तथा ॥
महेंद्रविंध्ययोर्येऽन्ये मेरुपार्श्वगता अपि ॥२३७॥
वसत्य ज नगोत्रे च येऽस्ताद्रावुदयाचले ॥
पृथिवीवर्तिन सर्वान् महाबलपराक्रमान् ॥२३८॥
इहान य स्व तान् प्राप्तानहोभिर्दशभिस्तु ये ॥
हतव्यास्ते दुरात्मानो राजशासनदूषका ॥२३९॥
स समी र त्मजो दूतान् कोटिश प्राहिणोद् द्रुतम् ॥
पूर्वं गते समाहूता आययु कपिकोटय ॥२४०॥
कीशा हि म वति प्राप्य माहेश्वर सवान्नजम् ॥
मूल फल च जगृहुर्मासतृप्तिप्रदायकम् ॥२४१॥
वानरा ज नास्तस्मिन् मुहूर्ते बहुकोटय ॥
आगता सर्वतो दृष्ट्वा सुग्रीव प्लवगेश्वरम् ॥२४२॥
यदुपा य नमानीत दिव्य मूल फल मुदा ॥
सुग्रीवायार्पयामासुर्नमश्चक्रु कृपार्थिन ॥२४३॥
रामानु ज स्ततोवाच प्लवगेंद्र मयासह ॥
निर्गच्छ राघव द्रष्टु यदि ते सौम्य रोचते ॥२४४॥
कपिना य क आहार्य स्थेय त्वच्छासने मया ॥
इत्युक्त्वा तेन ताराद्या प्रेयस्यस्ता विसर्जिता ॥२४५॥
आरोह्य रा घव पूर्वं शिबिकाया कपीश्वर
स्नेहहर्षौ सर्वैर्युक्त स्वयमारुह्य निर्ययौ ॥ २४६ ॥
नरोत्त म स्थितेर्देशं प्राप्य यानात्सलक्ष्मण ॥
अवतीर्य पपाताथ संमूर्च्छा पादयो प्रभो ॥ २४७ ॥

---

१ पर्वत

रामेण श्री-मता प्रेम्णा दृढमालिंगितः सखा ॥
सांत्वितश्च यथान्याय बोधितः संस्तुतो भृशम् ॥ २४८ ॥

आगता रा म आज्ञातः कपयो न पयोधराः ॥
यथा तथा रजोव्रातैः कुर्वतो दुर्दिनं तदा ॥ २४९ ॥

कपीनां म हतां सेना असंख्याः सिंधुसन्निभाः ॥
समागतास्ताः संप्रेक्ष्य हृष्टो रामः सलक्ष्मणः ॥ २५० ॥

सुग्रीवो ज गतां नाथमुवाचैतत्समागतम् ॥
त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥ २५१ ॥

तं सखा म मृतिमेण्णा परिष्वज्याब्रवीत्प्रभुः ॥
ज्ञायतां सौम्य वैदेही यदि जीवति वा न वा ॥ २५२ ॥

देशश्च रा वणस्यादौ ज्ञेयः कार्योऽत्र लक्ष्मणः ॥
नैव नैवाहमप्यत्र त्वमेवाज्ञाकरः प्रभुः ॥ २५३ ॥

प्लवंग— म-पतिः श्रुत्वा प्रभूक्तं मुदितस्ततः ॥
विनतं प्रेषयामास दिशं पूर्वां महाबलम् ॥ २५४ ॥

तनया ज नकस्येष्टा रावणश्च दुराशयः ॥
मार्गितव्यो वसन्मासादूर्ध्वं वध्यो भवेन्मम ॥ २५५ ॥

एवं ना य क आज्ञाप्य विनतं तं तथांगदं ॥
जांववंतं हनूमंतं मैंदं च द्विविदं कपिम् ॥ २५६ ॥

नीलं ग ज मयान्यांश्च दक्षिणां दिशमीश्वरः ॥
कृत्वाऽवधिं मासमाशु प्रेषयामास सिद्धये ॥ २५७ ॥

तारोद म करं कीशं सुषेणं वीर्यसागरम् ॥
यूथपं बुद्धिसंपन्नं प्रतीचीमादिशद्दिशम् ॥ २५८ ॥

स मान रा धिपः प्राह ततः शतबलिं कपिम् ॥
त्वमुदीचीं दिशं गत्वा तत्रान्वेषय जानकीम् ॥ २५९ ॥

सुग्रीवं म रुतः पुत्रे दृष्ट्वा विश्वस्तमानसम् ॥
अंगुलीयमभिज्ञानं रामस्तस्मै ददौ निजम् ॥ २६० ॥

सीतायाः श्री मता कीशाः प्रेरिताः परियार्गणे ॥
गताः स्वां स्वां दिशं सर्वे महोत्साहाः सहस्रशः ॥ २६१ ॥

सुग्रीवं रा घवोऽपृच्छत्सखे कथय तत्त्वतः ॥
कथं भवान् विजानीते सकलं मंडलं भुवः ॥ २६२ ॥

प्लवंग—म—पतिः प्राह वालिनाहमनुद्रुतः ॥
तदा ससचिवो धावन् दृष्टवान् मंडलं भुवः ॥ २६३ ॥

वाताल—ल—मुखा वीराः सांगदाः सर्वतो दिशम् ॥
अन्वेषमाणा ददृशु र्न ते तां जनकात्मजाम् ॥ २६४ ॥

महाका—य—मथारण्येऽसुरं वालिसुतोऽङ्गदः ॥
रावणोऽयमिति ज्ञात्वा व्यसुं चक्रे तलेर्न्नतम् ॥ २६५ ॥

ते वान—रा बिलं किंचिद्ददृशुः क्षुत्तृडर्दिताः ॥
तस्मान्निर्गच्छतो दृष्ट्वा पक्षिणो हंससारसान् ॥ २६६ ॥

तस्मिंस्त म स आवासे प्रविश्य कपयो बिले ॥
गत्वा योजनमेकं तेऽपश्यन् हेममयांस्तरून् ॥ २६७ ॥

वापीश्च ज लजैरम्या मणिसोपानभूषिताः ॥
प्रासादं कांचनं तत्र स्त्रियं वृद्धां महाप्रभाम् ॥ २६८ ॥

कस्याल य स्त्वं का मातारिति नत्वा हनूमता ॥
पृष्टा सोवाच वत्सेदं स्थानं मयविनिर्मितम् ॥ २६९ ॥

देवरा ज स्तमशानिमहोरणावधीद्रुषा ॥
हेमायां स्वर्गवेश्यायां सूक्तं नक्तं दिवं मयं ॥ २७० ॥

हिरण्म य मिदं गेहं वनमप्युत्तमं स्वयम् ॥
दत्तं स्वयंभुवा तस्यै हेमायै वानरोत्तम ॥ २७१ ॥

तन्मंदि—रा—वनं तस्याः सख्या कर्तुमिह स्थिता ॥
दुहिता मेरुसावर्णेरहं नाम्ना स्वयंप्रभा ॥ २७२ ॥

• एवं सा म धुरैरन्नैः फलैस्तोयैरतर्पयत् ॥
के यूयं ब्रूत किं कार्यमिति पप्रच्छ तान् कपीन् ॥ २७३ ॥

त आहुः श्री मति श्रीमान् रामो दशरथात्मजः ॥
रक्षसा रावणेनास्य सीता प्रियतमा हृता ॥ २७४ ॥
सखा न रा धिराजस्य सुग्रीवः कपिनायकः ॥
तेन मार्गयितुं सीतां मार्गितैवं प्रचोदिताः ॥ २७५ ॥
दिशं य म स्य संप्राप्ता द्रष्टुं तां तं च रावणम् ॥
विचित्य तु वनं सर्वं क्षुधितास्तृषिता वयम् ॥ २७६ ॥
बिलं तु ज लपानार्थं प्रविष्टा जलपक्षिणः ॥
बहिर्निर्गच्छतो मार्तर्दृष्ट्वा नो वृत्तमीदृशम् ॥ २७७ ॥
समयो य स्तु तेनार्ये सुग्रीवेण कृतो महान् ॥
सव्यतिक्रांत एवात्र बिलेऽस्माकं महासति ॥ २७८ ॥
त्वां तपो रा शिममलां प्रपन्नाः शरणं वयम् ॥
सा त्वमस्मान् बिलादस्मादुत्तारयितुमर्हसि ॥ २७९ ॥
सोवाच म न्य एतस्मात्प्रविष्टेन निवर्तितुम् ॥
जीवता दुष्करं कीशाः सत्यमेतद्ब्रवीमि वः ॥ २८० ॥
भयं त्य ज त चक्षूंषि निमीलयत वानराः ॥
तपसाऽहं बिलादस्मात्तारयिष्यामि पुत्रकाः ॥ २८१ ॥
ततस्ते य था प्रोक्तास्तथा सर्वे निमीलिताः ॥
निमिषांतरमात्रेण बिलादुत्तारितास्तया ॥ २८२ ॥
विंध्यस्य शै-[1]लप्रस्थ पादे पुष्पितपादपे ॥
उपविश्यार्णवं दृष्ट्वा चिंतां प्राप्ताः प्लवंगमाः ॥ २८३ ॥
अनुष्ठे य स्य कार्यस्य तेऽसिद्धौ भयशंकिताः ॥
व्यतीते समये श्रांता निपेतुर्वानराः क्षितौ ॥ २८४ ॥
तान्स ता रः सुतः प्राह युक्तं प्रायोपवेशनम् ॥
मासस्त्वृक्षबिले पूर्णो हरयः किन्न बुध्यते ॥ २८५ ॥
इदानी म कृतार्थानां मर्तव्यं नात्र संशयः ॥
तीक्ष्णदण्डो हि सुग्रीवो वयमस्यपराधिनः ॥ २८६ ॥

---

१ पर्वत.

येन स्त्री श्री श्च मत्तेन भ्रातुर्ज्येष्ठस्य भुज्यते ॥
अकार्यं तस्य किं घातं मत्पितुर्यो ह्यकारयत् ॥ २८७ ॥

कपिस्ता रा भिधस्तत्र तदोवाच वय बिले ॥
प्रविश्य निर्भयाः सर्वे वसाम यदि रोचते ॥ २८८ ॥

उवाच म रुतः पुत्रो यां धात्रीं मन्यसे गुहाम् ॥
अस्यास्त्वीपत्करं मन्ये लक्ष्मणेषोर्विदारणम् ॥ २८९ ॥

देवरा ज स्य बाणेन स्वल्पमेव कृतं तदा ॥
लक्ष्मणो निशितैर्बाणैर्भियात्पत्रपुटं यथा ॥ २९० ॥

धर्मात्म य श्च सुग्रीवः सत्यसंधो महाव्रतः ॥
तारायाः प्रियकामश्च स त्वां जातु न नाशयेत् ॥ २९१ ॥

प्राह ता-रा-त्मजो भ्रातुर्जीवतो महिषीं प्रियाम् ॥
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ २९२ ॥

भो हनु-म-न् पश्यसि त्वं क्व धर्मं तत्र वानरे ॥
आदिष्टा मार्गितुं सीतां लक्ष्मणस्य भयाद्रयम् ॥ २९३ ॥

न बंधु-ज-नितं श्रेयो मरणं वानरर्षभाः ॥
सद्गतेः कारणं मन्ये वरं प्रायोपवेशनम् ॥ २९४ ॥

विनिश्च-य-मिम कृत्वा रुदन् दर्भेषु दुर्मुखः ॥
वृद्धान्नत्वाऽङ्गदो भूमौ विवेशास्वस्थमानसः ॥ २९५ ॥

ते त रा ज सुतं दृष्ट्वा तथावस्थं सुदुःखिताः ॥
जांबवत्प्रमुखाः प्रायमुपविष्टा वनौकसः ॥ २९६ ॥

परमा य स्तचित्तास्ते चक्रुः प्रायोपवेशनम् ॥
सुग्रीवमभिनिंदंतः प्रशंसंतश्च वालिनं ॥ २९७ ॥

स गृध रा ज संपातिर्दैवात्तं देशमागतः ॥
भ्राता जटायुषः श्रीमान् निख्यातबलपौरुषः ॥ २९८ ॥

विहंग म स्तान् प्लवगान् दृष्ट्वोवाच स हृष्टधीः ॥
एषां प्रायोपविष्टानां भक्षयिष्ये मृतं मृतम् ॥ २९९ ॥

---

१ मरणाचा निश्चय करून बसले.

तच्छ्रुत्वा श्री मतः पुत्रो मरुतः सुतमब्रवीत् ॥
पश्य गृध्रमिषः कालः प्राप्तोऽस्माकं विपत्तये ॥ ३०० ॥

न कृतं रा मवस्येष्टं कार्यं राज्ञश्च शासनं ॥
अस्माकमियमज्ञाता विपत्तिः सहसागता ॥ ३०१ ॥

प्रियका म स्तया धन्यो जटायुर्गृध्रनायकः ॥
रावणान्मरण प्राप्तः स गतिं परमां गतः ॥ ३०२ ॥

प्राणान् प्र ज हता तेन गृध्रेंद्रेण जटायुषा ॥
प्रियं कृतं दाशरथेः सख्युः सूनोर्महात्मनः ॥ ३०३ ॥

तथा व य मपि प्राणान् रामस्यैव महाप्रभोः ॥
प्रियार्थं निश्चितास्त्यक्तुं स्नेहस्यानृणतार्थिनः ॥ ३०४ ॥

स गृध रा जस्तच्छ्रुत्वा तानुवाच प्लवंगमान् ॥
कोऽयं गिरा घोषयति भ्रातुर्मम जटायुषः ॥ ३०५ ॥

प्रियस्य म रणं कीशाः कथयन्मे भृशमनः ॥
सूर्यांशुदग्धपक्षत्वादहं विसप्तुमक्षमः ॥ ३०६ ॥

समीपं म गतीभूत्तोनीत्वा मां दयया द्रुतम् ॥
वृत्तं यवीयसः कीशाः कथयध्वं सविस्तरम् ॥ ३०७ ॥

ते तु मा य गताः कीशाः श्रद्दधुर्नैव तद्वचः ॥
वंचनं भक्षणार्थंनः करोतीत्येव मेनिरे ॥ ३०८ ॥

ताराम ज प्रभृतयश्चक्रुः क्रूरां मतिं तदा ॥
सर्वथाप्रायमासीनान्यदि नो भक्षयिष्यति ॥ ३०९ ॥

शटिस य त्नतः सर्वे वयमत्र वनौकसः ॥
कृतकृत्या भविष्यामः सिद्धिमिष्टामितो गताः ॥ ३१० ॥

ततस्ता रा त्मजः श्रृंगादवतीर्य गिरेः स्वयम् ॥
कथयामास गृध्राय तस्मै वृत्तांतमादितः ॥ ३११ ॥

स श्रुत्वा म रणं भ्रातुः सपाती रावणात्तथा ॥
रुरोदोवाच च कपीन् वाष्पसंदिग्धया गिरा ॥ ३१२ ॥

विपात श्री रघ वृद्ध शृण्वस्तदापि मर्षये ॥
अशक्तो दग्धपक्षत्वाद्दातुर्वैरविमोक्षणे ॥ ३१३ ॥

आवा पु रा, वृत्रवधे वृत्ते वधू जयैषिणो ॥
आदित्यमुपयातौ स्वो ज्वलन्त रश्मिमालिनम् ॥ ३१४ ॥

प्राप्तेऽर्के म ध्यमत्यार्तो जटायुरभवत्तदा ॥
आच्छादितः स पक्षाभ्या मया स्नेहेन वानराः ॥ ३१५ ॥

तदानु म भवन् जातो दग्धपक्षोऽर्कतेजसा ॥
तप्तोऽहं पतितो विंध्ये पर्वतेऽस्मिन् यदृच्छया ॥ ३१६ ॥

गुहाल य इह भातुस्ततः प्रभृति काचन ॥
प्रवृत्तिर्न मया लब्धा श्रुताऽद्यैवेयमीदृशी ॥ ३१७ ॥

गृध्र ता रा त्मज प्राह रावण रावणालयम् ॥
अतिके यदि वा दूरे यदि जानासि शस न ॥ ३१८ ॥

विहग म पति प्राह लोकान् वेदृप्योऽखिलानहम् ॥
क्षीरधेर्मथन देवासुरयुद्ध त्रिविक्रमम् ॥ ३१९ ॥

स्तत मे ज रया तेन प्राणाश्च शिथिला मम ॥
रामस्य यदिद कार्यं कर्तव्य प्रथम मया ॥ ३२० ॥

दृष्टा वि य ति रूपाढ्या सर्वाभरणभूषिता ॥
क्रोशती रामरामेति लक्ष्मणेति च भामिनी ॥ ३२१ ॥

तामह ज गतीभर्तुर्जनकस्य महात्मनः ॥
रावणेन हृता कन्या मन्ये रामस्य कीर्तिमान् ॥ ३२२ ॥

इतस्तो य निधिर्द्वीपे पूर्लंका शतयोजने ॥
तामध्यास्ते विश्रवसस्तनुजो रावणाभिधः ॥ ३२३ ॥

तस्यां सा रा जतनया रावणात.पुरे सती ॥
रुद्धा वसति रुकाया राक्षसीभि सुरक्षिता ॥ ३२४ ॥

शाखाविक म ध्य प्लवगा सीता द्रक्ष्यथ तत्र ताम् ॥
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ ३२५ ॥

---

१ वैरानर्यातन (सूड उगवण) २ द्वान। ३ किरणसमूहयुक्त ४ पोप.

इहस्थः श्री मतीं सीतां तं च पश्यामि रावणम् ॥
आयोजनशतात्साग्राद् गृध्राः पश्यंति निम्नगः ॥३२६॥

मां वान रा भवंतोऽब्धि नयंतु भृशदुर्बलम् ॥
प्रदास्याम्युदकं भ्रात्रे स्वर्गताय महात्मने ॥ ३२७ ॥

तथा से य र्कटाश्चक्रुः स्वदेशे स्थापितं पुनः ॥
उवाच जांबवान् दृष्टा त्वया वाऽन्येन जानकी ॥३२८॥

तमंङ्ग अ वरः प्राह सुपार्श्वो नाम मत्सुतः ॥
आहारार्थं गतः प्रातः प्राप्तः सायमनामिषः ॥ ३२९ ॥

पुनः प्रि य करोऽप्यंग क्षुधितेन मया भृशम् ॥
दुर्वाक्यैः पीडितः साधुर्मामवोचत्क्षमापयन् ॥ ३३० ॥

तताहा रा र्थमुद्युक्तो महेंद्रेऽहं नगे स्थितः ॥
व्योम्न्यपश्यं स्त्रियं गौरीं हरंतं कज्जलप्रभम् ॥ ३३१ ॥

ग्रहीतु म हमाहारमुत्प्लुतः पुरुषं स्त्रियम् ॥
स पुमान् प्रांजलिः प्राह मार्गं देहीति मां पितः ॥३३२॥

यक्तः स म मक प्रेम्णा मया तूर्णं ततो गतः ॥
न हि सामोपपन्नानां प्रहर्ता विद्यते भुवि ॥ ३३३ ॥

संभाज य द्भिर्मां सिद्धैः पश्चादिति निवेदितम् ॥
स रावणः सा च सीता रामस्य दयिता सती ॥ ३३४ ॥

नंदिनी अ नरूस्यार्या स्नुषां दशरथस्य ताम् ॥
पश्यन् स्थितोऽहं रामेति लक्ष्मणेति च वादिनीम् ॥३३५॥

फालास्म य स्य तातायं हेतुस्तेन निरामिषः ॥
आगतोऽहमिति प्राह सुपार्श्वस्तनयो मम ॥ ३३६ ॥

निशाक रा ख्यः सुतपा मुनिर्मामब्रवीत्पुरा ॥
तिष्ठेह विष्णो रामस्य त्वं साहाय्यं करिष्यसि ॥ ३३७ ॥

नायेन म नुवंशस्य जानक्याः परिमार्गणे ॥
प्रेषिताः कपयो दूता एष्यंतीह महाबलाः ॥ ३३८ ॥

---

१ नम्र. २ पूज्यपितृ.

आश्लेषा श्री मतस्तेभ्यः संपाते महिषी त्वया ॥
सर्वथा न तु गंतव्यमीदृशः क्व गमिष्यसि ॥ ३३९ ॥

कार्येसु रर णां विप्राणां रामस्येदस्य चाऽऽत्मनः ॥
इह स्थित्वा कृते वत्स त्वं सपक्षो भविष्यसि ॥ ३४० ॥

मुनिर्मा म ब्रवीदेवं पश्चात्स्वर्गं जगाम सः ॥
साग्राण्यष्टौ सहस्राणि वर्षाण्यत्राभवन्मम ॥ ३४१ ॥

मयाऽऽत्म ज स्तदात्यर्थं वाग्भिः संतर्जितो रुषा ॥
तेन सत्यपि सामर्थ्ये न त्राता जानकी यतः ॥ ३४२ ॥

समत्य प मिदं तस्य निशाकरमुनेर्वचः ॥
तत्प्रसादान्नवौ पक्षावुत्पन्नौ मम पश्यत ॥ ३४३ ॥

तान्वान रा नुवाचाथ संपातिर्गृध्रभूपतिः ॥
पक्षलाभो ममाय वः सिद्धिप्रत्ययकारकः ॥ ३४४ ॥

विहगे म स्तदेत्युक्त्वा जिज्ञासुः स्वां गतिं ततः ॥
उत्पपात गिरेः शृंगात्पुनस्तरुणवन्मुदा ॥ ३४५ ॥

श्रुत्वाऽ ऽ स्य वचनं ते लब्धप्रत्ययास्तदा ॥
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ ३४६ ॥

प्रेक्ष्य तो य निधिं कीशा आकाशमिव दुस्तरम् ॥
निषेदुः सहिताः कार्यं कथमित्यब्रुवंस्तदा ॥ ३४७ ॥

यान्स्तान्म ज स्तानुवाच किं विषण्णाः प्लवंगमाः ॥
विषादो हंति पुरुषं बालं क्रुद्ध इवोरगः ॥ ३४८ ॥

कोऽद्य तो य निधिं वीरोलंघयिष्यति तेजसा ॥
कः करिष्यति सुग्रीवं सत्यसंधमरिंदमम् ॥ ३४९ ॥

सुतान्दा रा न् प्रसादेन कस्य पश्येम संगताः ॥
यदि कश्चि समर्थो नो दद्यादभयदक्षिणाम् ॥ ३५० ॥

प्रूय स म र्थाः सोंऽशे प्रतिवचो नैषो गतौ ॥
प्रकृत्य परं या शक्तिः प्लवने प्लवगर्षभाः ॥ ३५१ ॥

तत्तस्य श्री मनः श्रुत्वा वालिसूनोर्वचस्तदा ॥
आबभाषे गजस्तत्र प्लवेय दशयोजनम् ॥ ३५२ ॥

तथाप — रा — क्रमी प्राह गवाक्षोऽहं तु विंशतिम् ॥
शरभस्त्रिंशदृषभश्चत्वारिंशन्महामनाः ॥ ३५३ ॥

प्लवग म स्तु पंचाशद् गंधमादननामकः ॥
मैंदः कोशोत्तमः षष्टिं सप्तति द्विविदः कपिः ॥३५४ ॥

तथा ते ज स्वि तिलकः सुषेणोऽशीति मित्यथ ॥
ततो वृद्धतमस्तेषां जांबवान् प्रत्यभाषत ॥ ३५५ ॥

अंत्ये व य सि क्ता शक्तिर्मेरोर्वाने-मत्ते मया ॥
प्रदक्षिणीकृतः पूर्व क्रममाणस्त्रिविक्रमः ॥ ३५६ ॥

र मे प रा क्रमो नष्ट इदानीमहमंगद ॥
नवतिं योजनानां तु गमिष्यामि न संशयः ॥ ३५७ ॥

न मे ग म नसामर्थ्यं सप्रसंगद तादृशम् ॥
नैतावताच संसिद्धिः कार्यस्यास्य भविष्यति ॥ ३५८ ॥

तं वालि ज उवाचाह गमिष्यामि शतं पुनः ॥
निवर्तने तु मे शक्तिः स्यान्नवेति न निश्चितम् ॥३५९॥

अमे का य ज आह त्वं योजनानामपिक्षमः ॥
कामं शतं सहस्रं वा गंतुं मतिनिवर्तितुम् ॥ ३६० ॥

युवरा ज न हि प्रेष्यः प्रेष्यैः प्रेषयिता क्वचित् ॥
स्वामी कर्लत्रं सैन्यस्य तस्मात्पाल्यः सदा भवान् ॥३६१

वालिका य ज आहाहं गमिष्यामि नचापरः ॥
यद्यस्माभिः खलु पुनः कार्यं प्रायोपवेशनम् ॥ ३६२ ।

तमाह रा जा ऋक्षाणां चिंतामंगद मा कुरु ॥
एष संचोदयाम्येतं यः कार्यं साधयिष्यति ॥ ३६३ ॥

ततः स म रुतः पुत्रं प्लवतिं रहसि स्थितम् ॥
उपेत्य तत्प्रधानज्ञस्तमुवाच प्रहर्षयन् ॥ ३६४ ॥

---

१ गजोऽवदीयोजनानि प्रेनयाह दर्शन तु इति वा पाठ.. २ बजी ३ जाबवान्.
४ विश्वासपात्र

हनूमान्　श्री मताऽसि त्वं सुग्रीवेण सम स्वयम् ॥
तेजसा लक्ष्मणेनापि रामेण प्रभुणाऽपि च ॥३६५॥

विहग　रा जपवनतनयेनै समवेगवान् ॥
हनूमन्नासि शक्तस्त्वमेक सागरलंघने ॥ ३६६ ॥

सर्वेश्या　म हिता तात विख्याता पुंजिकस्थला ॥
शापेनसा केसरिणो भार्या जाताऽञ्जनाभिधा ॥३६७॥

ता प्रभ　ञ्ज न आलोक्य सुदरीं काममोहित ॥
परिरेभेबलात्तस्या त्व जातोऽसि महाबल ॥३६८॥

गुणाल　य स्तव सुतो महाबुद्धिपराक्रम ॥
लघने प्लवने चैव भविष्यति मया सम ॥३६९॥

इति वी　रा धिवीराग त्व मातरमुवाच यत् ॥
भगवान् मारुत स य तत् सर्वं त्वयि दृश्यते ॥३७०॥

दृष्ट्वा त्व　म कैमुदित फल मत्वा तदाशया ॥
सद्यो जातो योजनाना शतानि त्रीणि त्व गत ॥३७१॥

देवरा　ज स्त्वय्यशनि मुमोच शिखरे गिरे ॥
पततस्तव बालस्य वामो हनुरभज्यत ॥ ३७२ ॥

नामधे　य मतस्तेऽभूद्धनूमानिति मारुते ॥
दृष्ट्वात्वा निहत क्रुद्धस्त्रैलोक्य नानिलो ववौ ॥३७३॥

संभ्राते　ज गति ब्रह्मा प्रीत्या तुभ्य वर ददौ ॥
अशास्त्रवध्यता युद्धे स्वच्छदमरण हरि ॥ ३७४ ॥

कृते श्रे　य सि ते देवै प्रसन्नोऽभूत्पिता तव ॥
त्व हि वायुसुतो वत्स प्लवने चापि तत्सम ॥३७५॥

मया पु　रा यज्ञेयंज्ञे प्रादुर्भूते त्रिविक्रमे ॥
त्रि सप्तकृत्व पृथ्वीपरिक्रान्ता प्रदक्षिणा ॥३७६॥

निर्मथ्य　य मृत याभि मक्षिनाभिः पयोनिधौ ॥
ता भयोषधय समा॰ संचिता देवशासनात् ॥३७७॥

---

१ सूर्य २ उजवी करून

सोऽहं तु श्री मतः कार्यं कर्तुं रामस्य न क्षमः ॥
समर्थस्य मिदानीं ते न सिंधोर्लंघने श्रमः ॥ ३७८ ।

अद्य त्व रा हितोत्तिष्ठ स्वजनान्किमुपेक्षसे ॥
विक्रमस्व महा वेगं विष्णुस्त्रीन् विक्रमानिव ॥ ३७९

इत्येनं म करावासं क्रमितुं शतयोजनं ॥
संस्तूयमानो हनुमान् व्यवर्धत महाबलः ॥ ३८० ॥

तं प्रभं ज नजं कीशा विस्मिता ददृशुस्तदा ॥
त्रिविक्रमं कृतोत्साहं नारायणमिव प्रजाः ॥ ३८१ ॥

आंजने य स्य वदनं भ्रममाणस्य तद्बभौ ॥
अंबरोपोपमं दीप्तं स च वन्हिरिव स्वयम् ॥ ३८२ ।

स समी रा त्मजो मध्याद्वानराणां समुत्थितः ॥
अभिवाद्य हरीन् वृद्धान् प्रहृष्ट इदमब्रवीत् ॥ ३८३ ॥

औरसो म रुतः पुत्रः प्लवने नास्ति तत्समः ॥
सहस्रवारं शक्तोमि मेरुं कर्तुं प्रदक्षिणम् ॥ ३८४ ॥

अहं भु—ज—द्वयस्यास्य वेगनुन्नांबुराशिना ॥
समाप्लावयितुं लोकमुत्सहे सचराचरम् ॥ ३८५ ॥

अहं तो य निधीन् सर्वांच्छोषयिष्यामि तेजसा ॥
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवंगमाः ॥ ३८६ ॥

लंकां भु त बलेनाहं समुत्पाट्यागवानराः ॥
गच्छेयमिति मे बुद्धिरित्युवाचानिलात्मजः ॥ ३८७ ॥

प्रहर्ष य न् हरीन् सर्वान् महेंद्रस्य महागिरेः ॥
आरुरोहोच्चशिखरं स्तुतो जांबवता पुनः ॥ ३८८ ॥

मरुंध रा धरस्तेन बाहुभ्यां पीडितो यदा ॥
कंपितो [१] निःसृताखुंबुशिलस्त्रस्तो मृगव्रजः ॥ ३८९ ॥

समीक्ष्य म रुतः पुत्रं महेंद्रशिखरस्थितम् ॥
प्रहृष्टा मुदिरं दृष्ट्वा मयूरा इव वानराः ॥ ३९० ॥

इति श्री मंत्ररामायणे श्रीरामनंदन मयूर विरचिते किष्किंधाकांडे त्रिंशत्तमोमंत्रः

---

१ सूर्य. २ निघाले आहेत सर्प, पाणी, व धोंडे ज्या पासून.

# सुंदर–कांडं.

---

उत्प्लुत्य स श्री कंठस्य मार्गणस्त्रिपुरं यथा ॥
लंकां जगाम जवन. पवनस्यौरसः सुतः ॥ १ ॥

तद्वेगधा— रा–पातिता द्रुमास्तं क्षणमन्वयुः ॥
प्रस्थितं दीर्घमध्वानं स्वबंधुमिव बांधवाः ॥ २ ॥

अन्वयुस्तं म रुत्पुत्रमूरुवेगोत्थिता द्रुमाः ॥
दानमानादिभिस्तुष्टाः सैन्या इव महीपति ॥ ३ ॥

व्योम्नि तद्भु ज दंडौ तौ ददृशाते प्रसारितौ ॥
पर्वताग्राद्विनिष्क्रांतौ पंचास्याविव पन्नगौ ॥ ४ ॥

छायाऽब्धेः प य सि व्यक्ता तदा माध्याह्निकी कपेः ॥
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ ५ ॥

वस्त्रापहा रा त्सहसा देहा इव शरीरिणाम् ॥
वेगाज्जलोत्सारणतो निर्वृता जलजंतवः ॥ ६ ॥

याति येन म हाकायो वेगेन महता कपिः ॥
तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ७ ॥

दृष्ट्वा तमं ज नापुत्र प्लवमानं द्रुतं तदा ॥
ववृषुः पुष्पवर्षाणि देवगंधर्वदानवाः ॥ ८ ॥

मैनाक तो—य–रास्युक्तेर्विश्रामार्थं समुत्थित ॥
विनं मत्वोरसाऽधस्तं पातयामास मारुतिः ॥ ९ ॥

भ्रातः प्रभं–ज–नेनाहं पूज्यस्त्वं मे तदात्मजः ॥
मयि विश्रम्य गच्छेति मैनाकाद्रिरुवाच तं ॥ १० ॥

स्पृष्ट्वांजने य स्तं प्राह कार्यकालो गिरेऽ द्य मे ॥
प्रतिज्ञा च कृता सौम्य न स्यातव्यमिहांतरा ॥ ११ ॥

उक्त्वैवमा–रा–त्त्वरया जगाम स महाबलः ॥
मैनाकायाभयंमादात्तेन तुष्टः शचीपतिः ॥ १२ ॥

ततः सुरा म रुत्सूनोः परीक्षार्थं महौजसः ॥
विघ्नं कुरु त्वमित्यूचुः सुरसां नागमातरं ॥ १३ ॥

---

१ सैनिक (शिपाई). २ हिमालय-पुत्र (इंद्राच्या भयास्तव समुद्रात लपलेला.)

रुद्धाऽध्वानं श्री मतः सा बिभ्रती राक्षसं वपुः ॥
उवाच मे प्रदिष्टस्त्वं सुरैर्भक्ष्यः प्लवंगम ॥ १४ ॥

धात्रा पुराऽ रा धनतः प्रसन्नेनैष मे वरः ॥
दत्तस्त्वां भक्षयिष्यामि प्रविशेदं ममाननं ॥ १५ ॥

इत्युक्त्वा सा म हद्वक्त्रं व्यादाय पुरतः स्थिता ॥
एवमुक्तः सुरसया प्रहृष्टवदनोऽब्रवीत् ॥ १६ ॥

भद्रे रामो ना गच्छायः प्रविष्टो दंडकावनं ॥
रावणेन हृता तस्य प्रिया जनकनंदिनी ॥ १७ ॥

तद्दर्शना य गच्छामि दूतोऽहं रामशासनात् ॥
कर्तुमर्हसि रामस्य साह्यं[1] विषयवासिनि ॥ १८ ॥

अथवा तां रा जपुत्रीं दृष्ट्वा रामं च तं प्रभुं ॥
त्वद्वक्त्रमागमिष्यामि सत्यं प्रतिशृणोमि ते ॥ १९ ॥

इत्युक्ते का म रूपा सा मया दृष्टो विधेर्वरात् ॥
न कश्चिन्मुच्यते मत्त इत्युवाचाप्रदर्शना ॥ २० ॥

स उवाचा—त-नेयस्तां क्रुद्धो दिग्योजनाननां ॥
कुरु त्वं तादृशं वक्त्रं येन मां विषहिष्यसि ॥ २१ ॥

इति व्यादा—य, वदनं स्थितामुक्त्वा स्वयं प्रभुः ॥
दशयोजनविस्तारो हनूमानभवत्तदा ॥ २२ ॥

प्रचकार अ-वेनास्यं सा च विंशतियोजनं ॥
त्रिंशद्योजनविस्तारो हनूमान् बुद्धिमानभूत् ॥ २३ ॥

ततः साऽप्या—य-तं चक्रे द्विगुणं वक्त्रमात्मनः ॥
बभूव हनुमान् वीरः पंचाशद्योजनोच्छ्रितः ॥ २४ ॥

पुनश्चका—रा-स्यमसौ षष्टियोजनविस्तृतं ॥
चक्रे स्वदेहं संख्यातः कपिः सप्ततियोजनं ॥ २५ ॥

चकार सा म-हद्वक्त्रमशीत्या योजनैर्मितं ॥
बभूव सोऽनलप्रख्यो हरिर्नवतियोजनः ॥ २६ ॥

१ 'साह्यम् देशवासिनी' इति वा पाठः.

सद्धर्मेण श्री रिव सा ववृधे सुरसा सुख ॥
शतयोजनविस्तार चकारातिभयकरम् ॥ २७ ॥

तदा समो-रा-त्मजनिर्वभुवांगुष्ठमात्रक ॥
वक्त्रे प्रविश्य निर्गत्य गगनस्थ उवाच ताम् ॥ २८ ॥

दाक्षायणि म-यि क्रोधो माऽस्तु देवि नमोऽस्तु ते ॥
यास्यामीह प्रविष्टोऽस्मि मुख सत्यो वरस्तव ॥ २९ ॥

साऽब्रवीद ज-नासूनो गच्छ सौम्य यथासुख ॥
समानय च वैदेहा राघवेण महात्मना ॥ ३० ॥

वायेस्तन-य,उद्युक्तो जगामाथ पुनर्द्रुतम् ॥
ब्रम्हदत्तवरात्तस्य छाया जग्राह सिंहिका ॥ ३१ ॥

सुग्रीवोक्ता रा क्षसीं ता बुद्ध्वा स ववृधे कपि ॥
वक्त्र प्रसारयामास सा पातालावरोपम ॥ ३२ ॥

तस्या मुखे म हयाशु संक्षिप्यात्मानमा मवान् ॥
निपपात सुरैर्दृष्टो राहोरास्ये शशीव स ॥ ३३ ॥

छित्वा हृद-ज-नात्तूनुस्तस्यास्त क्षणमवरम् ॥ -
जगाम रामकार्यार्थी मने सपातविक्रम ॥ ३४ ॥

संक्षिप्य का-य-वृद्धिं च प्रवेग च महामति ॥
समासाद्याम्बुधेस्तीर लवाद्रौ निपपात स ॥ ३५ ॥

लकाद्रा-ज-नाया स रिठ्न सुहुरनिश्वसन् ॥
ददर्श गिरिवर्यस्य मूर्ध्नि लका वनैर्वृताम् ॥ ३६ ॥

जगाम तां य शार्सादो विश्वकर्मविनिर्मिता ॥ -
रम्या वृतां कांचनेन प्राकारेण महापुरीम् ॥ ३७ ॥

ऊ.तुमात्रो रा-त्रिमुखे बभूवाद्भुतदर्शन ॥ _
ददर्श प्रविशत तमय लकाधिदेवना ॥ ३८ ॥

पुरस्तात्सा म हानादा मारुतनोरोविहत ॥ _
पमुद्र कस्त्व कनासि कार्येणेह समागत ॥ ३९ ॥

---

१ 'सदान्द' शन वा २ मनावग ३ माजराएवरा ४ शायकाह ५ रिधगा तन 'शन वा ६ 'हनुाद' शर्न वा

तामुवाच श्री हनुमान् का त्वं द्वारेऽवतिष्ठसे ॥
किमर्थं चापि मां क्रोधान्निर्भर्त्सयसि दारुणे ॥ ४० ॥

पुनरुक्ता रा प्रतिमा साऽब्रवीत्त्वमहं कपे ॥
लंकाऽस्मि दशवक्त्रस्य नियोगपरिपालिका ॥ ४१ ॥

हनूमांस्ता म थोवाच लंकां द्रक्ष्यामि निस्तुलां ॥
इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ४२ ॥

पुनर्वात न माहेयं पुरी रावणपालिता ॥
मामनिर्जित्य न द्रष्टुं शक्यते वानर त्वया ॥ ४३ ॥

तामानने य स्तत्वाऽऽह मैवं मार्गं प्रयच्छ मे ॥
दृष्ट्वा पुरीमिमां भद्रेऽहं गतास्मि यथागतम् ॥ ४४ ॥

सैवमुक्ता रा वणस्य पुरी नादं भयकरं ॥
कृत्वा तलेनानिलजं ताडयामास वेगिता ॥ ४५ ॥

स प्लवंग म थर्योऽपि वामहस्तस्य मुष्टिना ॥
ताडयामास तां स्त्रीति नातिक्रुद्धो विवेकवान् ॥ ४६ ॥

पपात ग न राजेन्द्र रष्टा रमेव सा पुरी ॥
कृपांचकार तेजस्वी मन्यमानः स्त्रियं च ताम् ॥ ४७ ॥

भृशोद्विग्ना य शोराशिकपिं सा गद्गदाक्षरं ॥
उवाचागर्वितं वाक्यं परिभूता बलीयसा ॥ ४८ ॥

प्रसीद वि न यस्तेऽस्तु मां त्रायस्व महाभुज ॥
मह्यं स्वयंभुवा दत्तो वरः पूर्वं महाभुज ॥ ४९ ॥

वानरस्त्वां य दा कश्चिद्विक्रमाद्वशमानयेत् ॥
तदा त्वया हि विज्ञेय रक्षसां भयमागतं ॥ ५० ॥

स कीशवी रा द्य प्राप्तः समयस्तव दर्शनात् ॥
स्वयंभुविहितः सत्यो न तस्यास्ति व्यतिक्रमः ॥ ५१ ॥

राक्षसाना म य सौम्य विनाशः समुपागतः ॥
सीतानिमित्तं राज्ञश्च रावणस्य दुरात्मनः ॥ ५२

सद्धर्मेण श्री रिव सा ववृधे सुरसा सुखं ।
शतयोजनविस्तारं चकारातिभयंकरम् ॥ २७ ॥

तदा समी-रा-त्मजनिर्बभूवांगुष्ठमात्रकः ॥
वक्त्रे प्रविश्य निर्गत्य गगनस्थ उवाच ताम् ॥ २८ ॥

दाक्षायणि म-यि क्रोधो माऽस्तु देवि नमोऽस्तु ते ॥
यास्यामीह प्रविष्टोऽस्मि मुख सत्यो वरस्तव ॥ २९ ॥

साऽब्रवीदं ब-नासूनो गच्छ सौम्य यथासुखं ॥
समानय च वैदेहीं राघवेण महात्मना ॥ ३० ॥

वायसेत्तन-प,उद्युक्तो जगामाथ पुनर्द्रुतम् ॥
ब्रम्हदत्तवरात्तस्य छायां जग्राह सिंहिका ॥ ३१ ॥

सुग्रीवोक्तां रा क्षसीं तां बुद्ध्वा स ववृधे कपिः ॥
वक्त्रं प्रसारयामास सा पातालवरोपमं ॥ ३२ ॥

तस्या मुखे प्र हत्याशु संक्षिप्यात्मानमात्मवान् ॥
निपपात सुरैर्दृष्टो राहोरास्ये शशीव सः ॥ ३३ ॥

छित्वा हृदं-स-नासूनुस्तस्यास्तत्क्षणमंबरम् ॥
जगाम रामकार्यार्थी मनःसंपातविक्रमः ॥ ३४ ॥

संक्षिप्य का-य-वृद्धिं च प्रवेग च महामतिः ॥
समासाद्याम्बुधेस्तीरं लंबाद्रौ निपपात सः ॥ ३५ ॥

लम्बाद्रय—श-नायाः स स्थितः सुनुरनिश्वसन् ॥
ददर्श गिरिवर्यस्य मूर्ध्नि लंकां वनैर्वृताम् ॥ ३६ ॥

जगाम तां म शार्दूलो विश्वकर्मविनिर्मितां ॥
रम्यां वृतां कांचनेन प्राकारेण महापुरीम् ॥ ३७ ॥

अंगुमात्रो रो-त्रिमुखे बभूवाद्भुतदर्शनः ॥
ददर्श प्रविशंत तमथ लंकाधिदेवता ॥ ३८ ॥

पुरस्तात्ता म हानादा वायुसूनोरतिष्ठत ॥
पप्रच्छ कस्त्वं केनासि कार्येणेह समागतः ॥ ३९ ॥

१ 'संदंशक' इति पा. २ सर्वांग ३ माम्यादृवदा. ४ लायकाव. ५ '. तत.' इति पा. ६ 'हनुमेद' इति पा.

मत्वा प्रिया श्री रामस्य ता स्त्रिय रूपसंपदा ॥
हर्षेण महता युक्तो ननद हरियूथप. ॥ ६६ ॥

स तामसा रा मार्श्वेव सक्त्वा वुद्धि समन्विता ॥
चकार चिंतामपरा हनूमानतिबुद्धिमान् ॥ ६७ ॥

राघवस्य म द्विप्येनमुपस्थातु पर जनम् ॥
स्प्रष्टुं भोक्तुमलंकर्तुं नार्हत्येव कथचन ॥ ६८ ॥

न त्रिप्वपि ज गत्स्वन्य कश्चिद्रामसम पुमान् ॥
अन्येयमिति निश्चित्य चचारान्यत्र मारुति ॥ ६९ ॥

योपितामा य तासौणा सहस्राणि ददर्श स ॥
न ता नताङ्गीं लावण्यशीलभारेण जानकीं ॥ ७० ॥

खिन्नचित्तो रा वणस्य तस्मादत पुराद्बहि ॥
निर्गम्य चिंतामकरोद्दीनो जानक्यदर्शनात् ॥ ७१ ॥

इद खलु म मात्यर्थं धर्मलोप करिष्यति ॥
यत्प्रसुप्तपरस्त्रीणामसज्जनात विलोकन ॥ ७२ ॥

इत्येवम न्ना सनुर्धर्मसाध्वसशंकित ॥
निवृत्य पानभूमे स चिंतयामास मारुति ॥ ७३ ॥

सीता न म्रि य ते नूनं यन्न दृष्टा विचिन्वता ॥
रावणेन हता वाला शीलरक्षणतत्परा ॥ ७४ ॥

अदृष्ट्वा ता ज नकजा क प्रवक्ष्यामि तान्कपीन् ॥
किं वा वक्ष्यति मा वृद्धो जाम्बवानङ्गदश्च स ॥७५॥

कृत्वा निश्च य मद्याह योग्य प्रायोपवेशने ॥
भूयोऽथवा विचेष्यामि न यत्र विचय कृत ॥ ७६ ॥

नास्ति सीता रा जकन्या लंकायामिति सर्वथा ॥
रामस्य प्रियभार्यस्य न निवेदयितु क्षम ॥ ७७ ॥

निवेदने म हान् दोष स्तथा स्यादनिवेदने ॥
कथ नु खलु कर्तव्य विषम प्रतिभाति मे ॥ ७८ ॥

तत्त्वं पुरीं श्री संपन्नां प्रविश्य कपि-सत्तम ॥
विधत्स्व सर्व कार्याणि यानि यानीह वांछसि ॥ ५३ ॥

रामस्य दा रा न्पुर्यां त्वमन्वेषय यथासुखं ॥
इत्युक्तो द्वारतः कीशः प्राकारमवपुप्लुवे ॥ ५४ ॥

द्विषतां वा म मंध्रि स मुर्ध्नि चक्रे महामतिः ॥
प्रविश्य रात्रौ तां लंकां ददर्श भवनान्यथ ॥ ५५ ॥

द्रष्टुं देवीं ज नकजां रामस्य दयितां पुरि ॥
भवनाद्भवनं गच्छन् ददर्शाच मरुत्सुतः ॥ ५६ ॥

स आंजने-य स्तस्यां तान् विवेश महतो गृहान् ॥
रावणभ्रातृतनयप्रधानानां महाजवः ॥ ५७ ॥

तत्साचिव्यं रा विनायश्चक्रे लंकां प्रकाशयन् ॥
पुष्पकं रावणस्यांतःपुरं सर्वं ददर्श सः ॥ ५८ ॥

सुखसुप्तेऽ म रारातो ताः स्त्रियो विविधप्रभाः ॥
ज्वलंतः कांचना दीपाः पश्यंतोऽनिमिषा इव ॥ ५९ ॥

ता विप्ररा ज पितुता दैत्यगंधर्वयोषितः ॥
रक्षसां चाभवन् कन्यास्तस्य कामवशंगताः ॥ ६० ॥

प्रियास्ताःप्रि य मासा नो तत्र काश्चिद्बलादृताः ॥
नान्यकामा नान्यपूर्वा वरार्हां जानकीं विना ॥ ६१ ॥

पन्नाशरा ब स्य यथा संति भार्या इमा इह ॥
सीता यदीदृशी भद्रमेवास्येत्यब्रवीत्कपिः ॥ ६२ ॥

भूयोऽचिन य देवं ता विशिष्टा गुणतो ध्रुवं ॥
अतोऽपहरणं कृतवान् कष्ट दुष्टो निशाचरः ॥ ६३ ॥

प्राप्य सुप्तं रा क्षसेंद्रं परमोद्विग्नमानसः ॥
तस्मादातिलस्ते इव सोऽपसर्पन्मरुत्सुत. ॥ ६४ ॥

स्थानांतर म पाश्रित्य रावणं प्रेक्षते स्म सः ॥
ददर्श रूपसंपन्नामथ मंदोदरीं कपिः ॥ ६५ ॥

मत्वा प्रिया श्री रामस्य ता स्त्रिय रूपसंपदा ॥
हर्षेण महता युक्तो ननंद हरियूथपः ॥ ६६ ॥

स तामसा रा माश्वेव त्यक्त्वा बुद्धि समुत्थिता ॥
चकार चिंतामपरा हनूमानतिबुद्धिमान् ॥ ६७ ॥

राघवस्य म हिष्येवमुपस्यातु पर जनम् ॥
स्वप्तुं भोक्तुमलंकर्तुं नार्हत्येव कथचन ॥ ६८ ॥

न त्रिष्वपि ज गत्स्वन्य कश्चिद्रामसम पुमान् ॥
अन्येयमिति निश्चित्य चचारान्यत्र मारुति ॥ ६९ ॥

योषिताम य ताक्षीणा सहस्राणि ददर्श सः ॥
न ता नतागीं लावण्यशीलभारेण जानकीं ॥ ७० ॥

खिन्नचित्तो रा वणस्य तस्मादत पुराद्बहि ॥
निर्गत्य चिंतामकरोदीनो जानक्यदर्शनात् ॥ ७१ ॥

इद खलु म मात्यर्थं धर्मलोप करिष्यति ॥
यत्प्रसुप्तपरस्त्रीणामद्यजात विलोकन ॥ ७२ ॥

इत्येवम न नासूनुर्धर्मसाध्वसशाकितः ॥
निसृत्य पानभूमे स चिंतयामास मारुति ॥ ७३ ॥

सीता न धि य ते नूनं यन्न दृष्टा विचिन्वता ॥
रावणेन हता बाला शीलरक्षणतत्परा ॥ ७४ ॥

अदृष्ट्वा ता ज नकजा किं प्रवक्ष्यामि तान्कपीन् ॥
किं वा वक्ष्यति मा वृद्धो जाम्बवानगदश्च स ॥७५॥

कृत्वा निश्च ■ मद्याह योग्य प्रायोपवेशने ॥
भूयोऽथवा निचेष्यामि न यत्र विचय. कृत ॥ ७६ ॥

नास्ति सीता रा जकन्या लंकायामिति सर्वथा ॥
रामस्य प्रियभार्यस्य न निवेदयितु क्षम ॥ ७७ ॥

निवेदने म हान् दोष स्तथा स्यादनिवेदने ॥
कथ नु खलु कर्तव्य विषम प्रतिभाति मे ॥ ७८ ॥

गत्वा यदि श्री·काकुत्स्थं वक्ष्यामि परुष वचः ॥
सीता मया न दृष्टेति ततस्त्यक्ष्यति जीवितम् ॥७९॥

लोकानसा रा नखिलान् विना रामेण मन्यते ॥
भ्रात्रानुरक्तः सौमित्रिस्तत्क्षणान्न भविष्यति ॥ ८० ॥

स प्लवंग म राजोऽपि प्राणांस्त्यक्ष्यत्यसंशय ॥
रुमांगदश्च तारा च ताश्च रामस्य मातरः ॥ ८१ ॥

रामं सानु ज मात्मेष्टं परं श्रुत्वा तथागतम् ॥
भरतस्तमनुभ्राता शत्रुघ्नो न भविष्यति ॥ ८२ ॥

वानराः क्ष य मेष्यंति सुग्रीवे राज्ञि संस्थिते ॥
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसां ॥ ८३ ॥

मयीहस्थे रा घवौ तावाशया खलु सर्वथा ॥
प्राणान् ध्रुवं धरिष्येते वानराश्च तरस्विनः ॥ ८४ ॥

चितिं कृत्वा म हांतं वा प्रवेक्ष्याम्यरणीसुत ॥
नेतः प्रतिगमिष्यामि तामदृष्ट्वाऽसितेक्षणां ॥ ८५ ॥

स कीशकुं ज रो भूयश्चिंतयामास बुद्धिमान् ॥
विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रक ॥ ८६ ॥

यावत्तामा य ताक्षीं नो पश्यामि प्रभुकामिनीं ॥
तावदेतां पुरीं लंकां विचिनोमि पुनः पुनः ॥ ८७ ॥

इमामद्य ज वेनाहमशोकवनिकामपि ॥
गुर्वीमधिगमिष्यामि नहीयं विचिता मया ॥ ८८ ॥

कृत्वा निश्च य मेव स श्रीरामाय महात्मने ॥
लक्ष्मणायाथ सीतायै सुग्रीवायोग्रतेजसे ॥ ८९ ॥

नत्वा समी र स्तभवो रुद्रादिभ्यः कृतांजलिः ॥
उदतिष्ठज्जगामायमशोकवनिकां प्रति ॥ ९० ॥

अनेकद्रु म सपन्नामशोकवनिकां गतः ॥
कांचनीं शिंशुपां रम्यां महतीमारुरोह सः ॥ ९१ ॥

---

१ दृष्टे. २ कांत

समारुह्य श्री मतीं तां शिंशपां पर्णसंवृताम् ॥
अशोकवनिकाशोभामपश्यत्परमा कपिः ॥ ९२ ॥

तत्राविदूरे रा प्रासाद सहस्रस्तम्भमद्भुतम् ॥
ददर्श तस्य निकटे वृक्षमूले प्रभोः प्रियाम् ॥ ९३ ॥

तां यातस्ता म ल्नता सत्रीनां राक्षसीवृताम् ॥
उपवासकृशां दीना श्वसतीं च पुन. पुनः ॥ ९४ ॥

निरीक्ष्य रा ज महिषी सीतेयमिति बुद्धिमान् ॥
तर्कयामास रामेण कथितैर्भव्यलक्षणैः ॥ ९५ ॥

यूथभ्रष्टा य थारण्ये श्वभि. परिवृता मृगी ॥
तथा तां राक्षसीरुद्धां दृष्ट्वाऽभूद्दुःखितः कपिः ॥९६॥

इय सीता रा घवस्य महिषी परमप्रिया ॥
प्रनष्टाऽपि सती यस्य मनसो न प्रणश्यति ॥ ९७ ॥

अस्या देव्या य नस्तस्मिन् तस्य चास्या प्रतिष्ठितम् ॥
तेनेय स च धर्मात्मा मुहूर्तमपि जीवति ॥ ९८ ॥

इत्याह सौऽ ज नासूनुर्हृष्टः सीतां विलोक्य ताम् ॥
जगाम मनसा राम प्रशशस च त प्रभुम् ॥ ९९ ॥

घोरा काला य समहाशूलमुद्गरधारिणी ॥
ददर्श राक्षसीस्तत्र सदा मांससुराप्रियाः ॥ १०० ॥

दशास्यो र ज नीशेषे कामार्तः स्त्रीशतावृतः ॥
तत्राजगाम सहसा वैदेहीगतमानसः ॥ १०१ ॥

उग्रतेजा य चापि स प्रभञ्जनसुतस्तदा ॥
शाखान्तरेऽभवद्दृष्टो निर्वृतस्तस्य तेजसा ॥ १०२ ॥

समागते रा क्षसेंद्रे दीपिकाभिः प्रकाशिते ॥
प्रावेपत वरारोहा प्रवाते कदलीव सा ॥ १०३ ॥

ऊरुभ्यां क्षा म मुदरं बाहुभ्यां च पयोधरौ ॥
संपच्छाद्योपविष्टा सा रुदती लोलसादरा ॥ १०४ ॥

संदिदृक्षुः श्री मतीं तामुपासर्पत्सरावणः ॥
ददर्श दीनामासीनां धरण्यां संशितव्रताम् ॥ १०५ ॥

शुद्ध प्रचा रा भयार्तामुवाच दशकंधरः ॥
मां दृष्ट्वा देवि कस्मात्त्वमप्रसन्ना भयाकुला ॥ १०६ ॥

त्वां देवीं का म ये सीते बहु मन्यस्व मां प्रिये ॥
रक्षोधर्मः परस्त्रीणां हरणं गमनं खलु ॥ १०७ ॥

तथाप्यं तु ज पत्राक्षि त्वां न स्प्रक्ष्याम्यहं बलात् ॥
मयि विश्वसिहि प्राज्ञे मैव भूः शोकलालसा ॥ १०८ ॥

पानानि श य नानि त्वं दिव्यान्याभरणानि च ॥
अंबराणि महार्हाणि लभस्व मदिरेक्षणे ॥ १०९ ॥

स्त्रीरत्नं त्वं रा वणं मां मैवं भूः प्राप्य मैथिलि ॥
यौवन माऽस्तु तेऽमोघ कुरु गात्रेषु भूषणम् ॥ ११० ॥

यदातव म नोज्ञांगि गात्रं पश्यामि शोभने ॥
तस्मिंस्तस्मिन्पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १११ ॥

भव मे कं ज नेत्रे त्वं भार्या मोह विसर्जय ॥
बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव ॥ ११२ ॥

त्रिलोकेभ्यो म सृता यानि रत्नानि भामिनि ॥
हतानि तानि सर्वाणि राज्यं चेदं ददामि ते ॥ ११३ ॥

तव पित्रे ज नकजे तव हेतोर्विलासिनी ॥
प्रदास्यामि विजित्याहं सर्वामपि वसुंधराम् ॥ ११४ ॥

असकृत्त य ति मया भग्ना भग्ना मयार्णवे ॥
अशक्ताः पुरतः स्थातुं मम सर्वे सुरासुराः ॥ ११५ ॥

गतश्रिया रा जपुत्रे तेन त्व किं करिष्यसि ॥
द्रष्टुमप्यसमर्थस्त्वां शंके जीवति वा न वा ॥ ११६ ॥

सीते त्व म यि त्वं ते रज्यंतु त्वयि बांधवाः ॥
न स रामो मया तुल्यस्तेजसा तपसाऽपि वा ॥ ११७ ॥

वाक्य तस्य श्री मती सा श्रुत्वा रौद्रस्य रक्षसः ॥
तृणमन्तरतः कृत्वा प्रत्युवाच महासती ॥

मत्तः प्रवी रा धिपतेः कलत्रात्सत्कुलोद्भवात् ॥
निवर्तयस्व दारेषु प्रीयतां ते मनः सदा ॥११९॥

अकार्यं न म या कार्यमेकपत्न्या विगर्हितम् ॥
न मां प्रार्थयितुं योग्यस्त्वं सिद्धिमिव पापकृत् ॥१२०॥

इत्युक्त्वा सा ज नकजा राक्षसं रावणं खलम् ॥
स्मृत्वा रामं परावृत्य स्थित्वा भूय उवाच तम् ॥१२१॥

निशाचर य था भार्यास्स्वान्येषां तथा ध्रुवम् ॥
श्रेयस्कामेन तु सदा परिहार्याः परस्त्रियः ॥ १२२ ॥

नात्र सतो रा त्रिचर सतो वा नानुवर्तसे ॥
रक्षसां त्वमभावाय न गृण्हासि सतां वचः ॥ १२३ ॥

क्षपाचर म नुर्ध्यैश्वर्यप्रिया लोभयितुं त्वया ॥
नाहं शक्या न खद्योतप्राप्या जातु रवेः प्रभा ॥१२४॥

उपधाय ज नेंद्रस्य तस्य तं सत्कृतं भुजम् ॥
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥१२५॥

मां समान–य रामेण साधु रावण दुःखिताम् ॥
रामः सखा त्वया कार्यो वधं घोरमनिच्छता ॥ १२६ ॥

धर्मज्ञोऽसौ अ गत्ख्यातः शरणागतवत्सलः ॥
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ १२७ ॥

मां चास्मै प्र-य-तो भूत्वा निर्यातयितुमर्हसि ॥
अन्यथा त्वं हि कुर्वाण. परां प्राप्स्यसि चापदम् ॥१२८॥

शराः सुघो रा नामांका रामलक्ष्मणयोः क्षणात् ॥
लंकां शून्यां करिष्यन्ति ज्वलितास्या इवोरगाः ॥१२९॥

राक्षसाध म चौर्येण शून्यस्याऽह त्वया हृता ॥
तयोस्त्यक्त्वाऽऽश्रमं दूरं गतयोर्नरसिंहयोः ॥ १३० ॥

उपाघ्राय श्री मतोर्न त्वया गंधत्वं तयोः ॥
शक्य संदर्शने स्यातु शुना शार्दूलयोरिव ॥ १३१ ॥

असह्यं रीं जराजगिरि वांऽत्तुंपतेः सभां ॥
गतोऽपि त्वं दाशरथेरागस्कृन्नै मविष्यसि ॥ १३२ ॥

तत्सीताया म हच्छ्रुत्वा परुष वाक्यमीदृशम् ॥
उवाच भूयस्तां राजा रक्षसां दशकंधरः ॥ १३३ ॥

लोके स्त्रीणां ज नःसर्व इष्टः सांत्वयिता खलु ॥
त्वया तु परिभूतोऽहमसकृत्सांत्वयन्नपि ॥ १३४ ॥

त्वयि तु न्या य तः प्राप्त मम क्रोध सुदारुणम् ॥
सीते त्वद्विषयः कामो निरुणाद्धि हृदुत्थितः ॥ १३५ ॥

वाम. कामो रा जकन्ये यस्मिन्नेव निबध्यते ॥
जने तस्मिन्ननुक्रोशः स्नेहश्च खलु जायते ॥ १३६ ॥

रक्षितव्यौ म या मासौ द्वौ पुरा योऽवधिः कृतः ॥
ततः शयनमारोह मम त्वं वरवर्णिनि ॥ १३७ ॥

आभ्यामूर्ध्वं ज नकजे भर्तारं मामनिच्छतीम् ॥
त्वां मम प्रातराशाय सूदाश्छेत्स्यंति खंडशः ॥१३८॥

तां सीता द य या देवगधर्वतनयास्तदा ॥
नेत्रैराश्वासयामासुस्तर्जितां तेन रक्षसा ॥ १३९ ॥

आश्वासिता ज नकजा देवीभिरथ तं पुनः ॥
उवाच क गतो रामाद्भीरधम मोक्ष्यसे ॥ १४० ॥

वने दत्तो य था सिंहस्तथा रामो महामहाः ॥
तं नीच शशवच्छ्रेष्ठ क्षिपन्निह न लज्जसे ॥ १४१ ॥

पापीयसा र धर्मेन न नेत्रे गलिते कथम् ॥
एव व्याहरतः साध्वीं कथं जिव्हा न शीर्यति ॥१४२

भस्म त्वां पा म राद्यहं रामासंदेशतस्तथा ॥
तपसः पाल्नाद्यापि नकरोम्याप्ततेजसा ॥ १४३ ॥

---

१ कैलास. २ मरिष्यसि (न भविष्यसि) ३ दया. ४ पावक. ५ महातेजा.

शूरो भ्राता श्री-दनाम्नो व्रतैः समुदितो वरैः ॥ —
तया रामभेपोहीवं दारचौर्यं कृतः कृतम् ॥ १४४ ॥

एवमुक्तो रा दर्सेद्रो भृशं क्रुद्धोऽतिदुर्मतिः ॥
उत्फाल्य नयने क्रूरे जानकीमन्ववैक्षत ॥ १४५ ॥

एव पर म धृष्टे त्वामर्थहीनमनुव्रते ॥
नाशयाम्यद्य वैदेहि भृशं परुषभाषिणीम् ॥ १४६ ॥

त्वं भद्रभा ज नं नास्ति दुर्व्रतं बहु मन्यसे ॥
श्रीमंतं मामनादृत्य गतश्रीकमनुव्रता ॥ १४७ ॥

यदस्यामि य मन्यर्थं प्रियवक्तारमीश्वरम् ॥
वध्याऽसि मम निःशंक कैवं वक्तुमिहार्हति ॥ १४८ ॥

प्रोवाच घो रा बहुशो राक्षसीर्मांसभोजनाः ॥
मया मद्वशगा सीता क्षिप्रं भवति सर्वथा ॥ १४९ ॥

तयाऽद्य सा म प्रभृतैरुपायैः क्रियतामिलाः ॥
इत्याज्ञसा दशास्येन लोमहर्षणदर्शनाः ॥ १५० ॥

तयाऽति र—ज—सा व्यात्तं तर्जयंतं नृपात्मजाम् ॥
तं धान्यमालिनीकान्तं परिष्वज्येदमब्रवीत् ॥ १५१ ॥

मया क्रीड म याकामं सीतया किं तवानया ॥
विवर्णया कृपणया मानुष्या राक्षसेश्वर ॥ १५२ ॥

नूनमेषा ज नकजा न महाभोगभाजनम् ॥
अकामां कामयानस्य शरीरमुपतप्यते ॥ १५३ ॥

एव मुक्त्वा य शास्त्रिन्या तयाऽन्यत्रापसारितः ॥
प्रहसन् प्रस्थितो राजा प्रविवेश निवेशनम् ॥ १५४ ॥

तां राक्षस्यो रा जकन्यां रावणाज्ञावशानुगाः ॥
परं परुषया वाचा तर्जयन्त्योऽब्रुवन् बहु ॥ १५५ ॥

पुलस्त्यस्य म हर्षेत्वं सूनोर्विश्रवसः स्नुषा ॥
भर्त्स्येकजटोवाच तथा हरिजटाऽपरा ॥ १५६ ॥

१ अपनीता. २ पृष्ठीपार्त.

अप्रद्भुत—श्री, त्रि-जगद्रत्न-मोक्ता सुवंशजः-॥
कुतो न रोचते भर्ता किं त्वं प्रव्राजिते रता ॥ १५७॥

भव भार्या रा जराजभ्रातुः प्रव्राजितं त्यज ॥
अभिलाषो वरं दुग्धे मुग्धे कः कांजिके रसः ॥१५८॥

असकृद्वी म वीर्येण सुरगंधर्वदानवाः ॥
निर्जिताः समरे येन स ते पार्श्वमुपागत. ॥ १५९ ॥

तस्य त्व भ ज तः सर्वां समृद्धि जयतो जगत् ॥
भार्यात्वं राक्षसेंद्रस्य किं न कामयसेऽगने ॥ १६० ॥

दिवाकरो य स्य भयान्न तपत्यद्रयो, जलम् ॥
मुंचंति तरवः पुष्पं फलं वातो न वातिच ॥ १६१ ॥

त स्य कथं रा क्षसेंद्रं दशास्यमवमन्यसे ॥
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥१६२॥

शक्र पुलो म जादेवी श्रीवसिष्ठमरुंधती ॥
तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ॥ १६३ ॥

सोऽस्तु भर्ता ज न्मजन्मन्यन्यं कांतं न कामये ॥
पामे-नाप्यभिणा स्प्रष्टुं नाहमिच्छामि रावणम् ॥१६४॥

एव श्रुत य दा, वाक्य राक्षस्यः क्रोधमूर्च्छिताः ॥
भर्त्सयति स्म परुषैर्वचनैस्तामनिंदिताम् ॥ १६५ ॥

भर्त्स्यमाना स नकजा राक्षसीभिः समततः ॥
रुदती शिंशपामूलं गत्वा तस्थौ तपस्विनी ॥ १६६ ॥

विनताख्या य दि त्वं नो वचनं न करिष्यसि ॥
भक्षयिष्यामहेऽद्य त्वामित्युवाचातिनिर्दया ॥ १६७ ॥

ता राक्षस्यो रा जपुत्रीं भर्तुर्विप्रियकारिणीम् ॥
त्वां मारयाम इत्यूचुर्लोमहर्षणदर्शनाः ॥ १६८ ॥

विकटा ना म तामाह भर्तारं रावणं भज ॥
नोचेदुत्पाट्य हृदय भक्षयिष्याम्यहं तव ॥ १६९ ॥

---

स्टाभारा.

एवं क्रूराः श्री  मती तामन्याश्चोचुः सुदारुणम् ॥
हंतव्या राक्षसेंद्रस्य यदाज्ञाभंगकारिणी ॥ १७० ॥

कुंडोदरी  रा क्षसस्त्री प्राह मे दोहदो महान् ॥
खादेयमस्या हृदय कोमलायाः प्रबंधनम् ॥ १७१ ॥

विघसा ना म दुर्वृत्ता तदोवाच भयंकरम् ॥
कठमस्या नृशसायाः पीडयामः किमास्यते ॥ १७२ ॥

मृतेति र  ज नीचर्यो रावणाय निवेद्यताम् ॥
ततोऽसहायमेवास्मान् खादतेति स वक्ष्यति ॥ १७३ ॥

ततो निर्द  य मप्राप्यमत्यंतं लोमहर्षणम् ॥
उवाचाजामुखी पिंडान् कुरुतेमां विशस्य तान् ॥ १७४ ॥

यथायथ  रा क्षसीभ्यः सर्वाभ्योऽपि विभागशः ॥
विभजामानया मोघो विवादो मे न रोचते ॥ १७५ ॥

आनीयता  म द्य मद्यमिति शूर्पणखाऽब्रवीत् ॥
भुक्त्वा पीत्वा च नृत्यामःस्तुत्वा देवीं निकुंभिलाम् ॥ १७६ ॥

निर्भीर्सिता  ज गत्पूज्या ताभिरेवं तदा भृशम् ॥
सा बालाऽरुददत्यार्ता प्रत्युवाच च ताः पुनः ॥ १७७ ॥

नारी न न्या य तो रक्षोभार्या भवितुमर्हति ॥
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ १७८ ॥

उष्णैर्नेत्र  ज लैः सीता प्लापयंती पयोधरौ ॥
अशोक शाखामालंब्य वेपमानाऽरुदद्भृशम् ॥ १७९ ॥

हा राम प्रि य हा सौम्य सौमित्रे गुरुवत्सल ॥
हा कौसल्ये हा सुमित्रे इति सीता रुरोद सा ॥ १८० ॥

पीडिताया  रा क्षसीभिर्वियुक्तायाः प्रियेण मे ॥
न ह्यस्ति जीवितेनार्थो मर्तुमप्यत्र दुर्घटम् ॥ १८१ ॥

हृदयं म  म येनेद न दु खेन विशीर्यते ॥
अश्मसारमय नूनमथवाप्यजरामरम् ॥ १८२ ॥

दयातः पूज्यः श्री मदीड्यः सानुक्रोशश्च राघवः ॥
कृतघ्नोऽप्यदयो जातः शंके मद्भाग्यसंक्षयात् ॥१८३॥

निरुद्धाऽहं रा वणेन स्वल्पवीर्येण पापिना ॥
समर्थः खलु मे भर्ता नेदृशीं मां स बुध्यते ॥१८४॥

कामं लंका म हादुर्गं वारिधौ दुष्प्रधर्षणम् ॥
न तु राघवबाणानां गतिरोधो भविष्यति ॥१८५॥

राक्षसानां ज नस्थाने सहस्राणि चतुर्दश ॥
एकेनैव निरस्तानि स मां किं नाभिपद्यते ॥१८६॥

इहस्थां मां य शस्वींद्रो न जानीते रघूत्तमः ॥
जानन् खलु तेजस्वी धर्षणां मर्षयिष्यति ॥१८७॥

वृत्ते यस्मा रा घवाय यो गृध्रः श्वशुरो मम ॥
पापेन रक्षसा सोऽपि मत्समक्षं रणे हतः ॥१८८॥

वर्तमाना म त्रचेन्मां जानीयाद्रघुनंदनः ॥
लंकां महोदधिं चापि निर्दहेदस्त्रतेजसा ॥१८९॥

करोमि नि ज नाथेन रहिता रोदनं यथा ॥
मत्तोऽधिकं करिष्यन्ति राक्षस्योऽत्र गृहे गृहे ॥१९०॥

सीतां ता भू य एवोचुरनार्ये पापनिश्चये ॥
राक्षस्यो भक्षयिष्यन्ति तव मांसमशयम् ॥१९१॥

राक्षसी त्रि ज टा वृद्धा प्रबुद्धा वाक्यमब्रवीत् ॥
सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ॥ १९२ ॥

अनार्याः पू य मात्मानं खादताद्य न जानकीम् ॥
अशोभिष्यश्च दृष्टो हि मया स्वप्नोऽद्य दारुणः ॥१९३॥

स्वप्नं दृष्टा रा क्षसीभिः कथयामास साऽथ तम् ॥
राक्षसानामभावाय सीताभर्तुर्भवाय यः ॥ १९४ ॥

अद्य स्वप्ने म या दृष्टः शुक्लमाल्यानुलेपनः ॥
रामः श्वेतगजारूढः शुभ्रवासाः सलक्ष्मणः ॥१९५॥

सीता च सु श्री रारूढा श्वेताद्रिं सिंधुवेष्टितं ॥
मुक्ता-शुक्लांबरधरा शुक्लमाल्यानुलेपना ॥ १९६ ॥

ततश्चेयं रा जपुत्री रामेण सह संगता ॥
आरूढा पुष्पकं यानं प्रस्थिता चोत्तरां दिश ॥१९७॥

रावणश्च म या स्वप्ने दृष्टो रक्तस्रगंबरः
प्रस्थितः खरयानेन राक्षसैर्दक्षिणां दिशं ॥ १९८ ॥

दशास्यात्म ज वर्गश्च कुंभकर्णश्च तद्विधः ॥
उष्ट्रारूढा गताः सर्वे सचिवा दक्षिणां दिशं ॥१९९॥

एक एव य था रामः श्वेतछत्रो विभीषणः ॥
चतुर्भिः सचिवैर्दृष्टो मया स्वप्ने वियद्गतः ॥२००॥

लंका सार्धं रा त्रिचरैर्मुंडे रक्तस्रगांबरैः ॥
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ २०१ ॥

आगसाऽल म ल प्रोक्ता मयोपरमत द्रुतम् ॥
ईदृशं न चिरादेनां सीतां प्राप्नोति राघवः ॥ २०२

रामस्तीर्त्वा ज लनिधिं दयितादुःखदायिनीः ॥
घातयेत्परमामर्षी युष्मान्सह निशाचरैः ॥२०३॥

मद्द्रो भ ग मागाभि तदलं परुषोक्तिभिः ॥
अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ २०४ ॥

सेवा यूयं ज नकजां भर्त्सितामप्यसांप्रतं ॥
प्राचर्ष रक्षतां घोरं भयं रामादुपस्थितं ॥ २०५ ॥

कुब्जा द य या पूर्णा प्रसन्ना प्रणिपाततः ॥
अलमेषा परित्रातुं राक्षस्यो महतोभयात् ॥२०६॥

वामर्मस्या रा जपुत्र्याः स्फुरत्यक्षु प्रदृश्यते ॥
कंपते ह्याहुरुरुश्च दक्षिणाया ह्यदक्षिणः ॥२०७॥

पक्षी चौत्त म सामोक्तिर्ब्रूते मुहुरिमां सती ॥
आगतं शोभनं प्रत्युद्गच्छेति प्रेरयन्निव ॥ २०८ ॥

---

१ क्रोधयुक्.

तां र्‍हीमती श्री मती सा भर्तुर्विजयहर्षिता ॥
उवाच यदि तत्तथ्य भवेयं-शरणं हि नः ॥२०९॥

पुनश्च सा रा अकल्या विलप्य बहुदुःखिता ॥
जग्राह वेण्युद्ग्रथनं शाखां तस्य द्रुमस्य च ॥२१०॥

विषं शस्त्र म लभ्यं मे कंठमुद्वध्य जीवितम् ॥
त्याज्यमित्यकरोद्बुद्धिं यावच्छोकाकुला सती ॥२११॥

तावत्पंक स्व पत्राभमस्फुरद्वाममीक्षणम् ॥
भुजश्चोरुश्च तेनाशु पुनर्धैर्यमवाप सा ॥२१२॥

स आंजने य स्तत्सर्वं दृष्ट्वा श्रुत्वा महामतिः ॥
चिंतां चकार बहुधा सीतां दृष्ट्वा प्रहर्षितः ॥२१३॥

यदिह्यहं रा मरामां शोकोपहतचेतनाम् ॥
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥२१४॥

इतो गते म यि स्पष्टं शोकार्तेयं नृपात्मजा ॥
परित्राणमपश्यंती सर्वथा जीवितं त्यजेत् ॥२१५॥

अत्रैव र अ नीशेषे कार्यमाश्वासनं मया ॥
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषितुं ॥२१६॥

पृच्छेद्रामो य दि स मां किं मां सीताऽब्रवीदिति ॥
किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमां ॥२१७॥

रक्षणीया ज नकजा रामस्य कुशलोक्तिभिः ॥
कथं नु खलु कर्तव्यं महत्कृच्छ्रं गतो ह्यहं ॥२१८॥

करोमि कं म त्यमहं किं कृत्वा सुकृतं भवेत् ॥
रामलक्ष्मणसुग्रीवप्रसादः प्राप्यते कथं ॥२१९॥

भाषायाहं रा-क्षसीनामंतरं मानुषीं गिरम् ॥
उदाहरिष्याम्येवं समतितूक्ष्मतनुः कपिः ॥२२०॥

मां रावणं म न्यमाना सीता भीता भविष्यति ॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृतां ॥२२१॥

अथवा तं श्री-मदाख्यं श्रीराममनुकीर्तयन् ॥ –
नैनामुद्वेजयिष्यामि सीतां तद्गतमानसां ॥ २२२ ॥

इतिकृत्वा रा-जदूतो मार्तिं मतिमतांवरः ॥ –
समीपदेशे मधुरं वचनं व्याजहार सः ॥ २२३ ॥

गुणानुत्त म-शीलस्य सख्युर्वनभुवोऽतुलान् ॥-
राज्ञो दशरथस्यादौ वर्णयामास मारुतिः ॥ २२४ ॥

तस्यचात्म ज मुख्यस्य श्रीरामस्य जगत्पतेः ॥–
लक्ष्मणस्य महाबुद्धेर्जनकस्य च धीमतः ॥ २२५ ॥

पत्तंप्राप्तं य शश्वाभ्रयं त्यक्ते राज्ये गुरोर्गिरा ॥ –
जगौ जनस्थानवासिरक्ष कदनमद्भुतं ॥ २२६ ॥

तस्या देव्या रा वणेन हरण सोऽन्वकीर्तयत् ॥ –
सुग्रीवेण ततः सख्यं बलिनो वालिनो वधं ॥ २२७ ॥

तदमति म सत्त्वौजाः सीतायाः परिमार्गणं ॥
आत्मना लंघन सिंधोः सुग्रीवस्य निदेशतः ॥ २२८॥

कीर्तयित्वा ज गादाय शनैर्हृष्टप्लवगेश्वरो ॥
धन्योऽहं कृतकृत्योऽस्मि रामस्यैव प्रसादतः ॥२२९॥

तच्छ्रुत्वा मि य मत्यंतं प्रथमं मुदिताऽभवत् ॥
दृष्ट्वा कपिं ततः सीता भीता रावणशंकया ॥ २३०॥

सोऽवतीर्या ञ्ज नासुनुर्विद्रुमाभाननो द्रुमात् ॥
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ २३१ ॥

उवाचादा य स शिरस्यंजलिं मधुरां गिरं ॥
का त्वं पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ॥ २३२ ॥

तिष्ठसुदा रा वृक्षस्य शाखामालंब्य भामिनि ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजं ॥ २३३ ॥

किन्तु चंद्र—म-सा हीना पतिता विबुधालयात् ॥
रोहिणी वाऽरुंधती त्वं वसिष्ठांकपरिच्युता ॥ २३४ ॥

---

१ पंक्ति. २ आकाशात्.

जनकस्य श्री–मती त्व सुतेति प्रतिभासि मे ॥
त्वां रामदयिता मन्ये तन्नामग्रहणादहम् ॥ २३५ ॥
पंचवट्यां रा–वणेन त्वमथिता यदि ॥
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ २३६ ॥
सीतोवाच म–नुष्येंद्रो राजा दशरथः प्रभुः ॥
तस्य स्नुषाऽहं रामस्य भार्या जनकनंदिनी ॥ २३७ ॥
रावणेन ज–नस्थानाद्धृताऽहं वस मायया ॥
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ॥ २३८ ॥
तस्मात्सद्–य–तः,पश्चादहं त्यक्ष्यामि जीवितं ॥
तच्छ्रुत्वा तां महाबुद्धिः सांत्वमुत्तरमब्रवीत् ॥ २३९ ॥
आज्ञयाऽहं रा–घवस्य देवि दूत इहागतः ॥
वैदेहि कुशली रामः स त्वां कौशल्यमब्रवीत् ॥ २४० ॥
लक्ष्मणश्च म हातेजा भर्तुस्तेऽनुचरः प्रियः ॥
कृतवांछोकसंतप्तः शिरसा तेऽभिवादनम् ॥ २४१ ॥
तच्छ्रुत्वा सा ज नकजा संप्रहृष्टेदमब्रवीत् ॥
एति जीवंतमानंदो नरं वर्षशतादपि ॥ २४२ ॥
सत्या गाथे य मद्गोंगे लौकिकी प्रतिभाति मे ॥
स्मरंतां पश्यामि कुशलं कथयतं प्लवगम ॥ २४३ ॥
इत्युक्त्वा सा ज नकजा पुनः शंकान्विताऽभवत् ॥
समीपमागतं दृष्ट्वा तममन्यत रावणम् ॥ २४४ ॥
वंदमानं प तात्मानं दीर्घमुच्छ्रस्य साऽब्रवीत् ॥
रावणस्त्वमसि त्राऽनुतापयसि मे पुनः ॥ २४५ ॥
अथवा त्वं रा घवस्य दूत एवासि वानर ॥
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ २४६ ॥
यदि श्रीरा म दूतस्त्वमागतो भद्रमस्तु ते ॥
ब्रूहि मे प्रियस्य रामस्य गुणान् कथय वानर ॥ २४७ ॥

गुणान्कपिः श्री-रामस्याऽस्य च सुमनोहरम् ॥
सौमित्रेरपि सद्बुद्धिर्वर्णयामास तत्वतः ॥२४८॥

गुणान्श्रुत्वा रा-घवयोर्लक्षणानि त्वं सो पुनः ॥
पप्रच्छ सख्यं क कथं रामेण भवतामिति ॥२४९॥

स प्लवंग — म-नाथेन सुग्रीवेण समागमम् ॥
विस्तरात्कथयामास मतिमान्मारुतात्मजः ॥२५०॥

स्वं च प्रभं-ज-नसुत सुग्रीवसचिवं प्रियं ॥
कथयित्वा कपिन्द्र्यौका तस्याश्चितामपानुदत् ॥२५१॥

त्वद्भर्तुः प्रि य कृद्देवि सखा सर्वकपीश्वरः ॥
महाप्रतापः सुग्रीवः स ते कौशल्यमब्रवीत् ॥२५२॥

सर्वान् रणे रा त्रिचरान् हत्वा सदशकंधरान् ॥
अचिरात्त्वामितो देवि नेता जेता द्विपां प्रभुः ॥२५३॥

प्रबलाः स म रं कर्तुं वानरा मानराक्षय ॥
अत्रागमिष्यन्त्यचिरात्सुग्रीवेण सहामिताः ॥२५४॥

संपातिना ज टायोस्त्वमग्रजेन निवेदिता ॥
शतयोजनमंभोधिं तीर्त्वा कोऽहमिहागतः ॥२५५॥

रामांगुली य मेतं त्वं गृहाणार्ये तदर्पितम् ॥
इत्युक्त्वा स ददौ मुद्रामंजलौ धरणीभुवः ॥२५६॥

तद्गृहीत्वा ज नकजा प्रेक्षमाणांऽगुलीयकं ॥
भर्तारमिव संप्राप्ता मुदिताऽभूदमब्रवीत् ॥२५७॥

कुशली स य दि श्रीमान् सानुजो रघुसत्तमः ॥
किं नु क्षितिं न दहति प्रलयाग्निरिवोत्थितः ॥२५८॥

शक्तिमती रा घवौ हि सुराणामपि निग्रहे ॥
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥२५९॥

कच्चिन्न प्रे म रहितो विवासान्मयि राघवः ॥
कच्चिन्मां व्यसनादस्मात्काकुत्स्थो मोचयिष्यति ॥२६०॥

---

१ मानी २ सीतेच्या.

उवाच तां श्री हनुमान् इहस्थां त्वां न वेत्ति सः ॥
· तेन त्वां नानयत्याशु शचीमिव पुरंदरः ॥ २६१ ॥

श्रुत्वोक्तं मे रा घवस्त्वां क्षिप्रमेष्यति सानुजः ॥
चमूं प्रकर्षन्महतीं हर्यृक्षगणसंयुतां ॥ २६२ ॥

करिष्यति म नुष्येंद्रो लंकां निहतराक्षसां ॥
विष्टंभयित्वा बाणौघैरक्षोभ्यं वरुणालयं ॥ २६३ ॥

अदर्शन ज शोकेन राघवः परिपूरितः ॥
न शर्म लभते सीते सिंहार्दित इव द्विपः ॥ २६४ ॥

यथा सुन य नं वक्त्रं पत्युर्द्रक्ष्यसि सत्वरं ॥
तथा शपे मंदरेण विंध्येन मलयेन च ॥ २६५ ॥

नैव मांसं रा मभद्रो भुंक्ते मद्यं न सेवते ॥
वन्यं विहितमश्नाति भैक्ष्यं काले स पंचमे ॥ २६६ ॥

न दंशान् म शकजं स्पर्शं जानाति राघवः ॥
अहोऽपनयसंगात्त्वद्गतेनांतरात्मना ॥ २६७ ॥

रामोऽनिद्रोऽ ज स्त्रमेव सुप्तोऽपि च कदाचन ॥
सीतेति मधुरां वाणीं व्याहरन्प्रतिबुध्यते ॥ २६८ ॥

तमुवाचा य ताक्षी सा यावदेव न पूर्यते ॥
अयं संवत्सरः कालस्तावद्धि मम जीवितं ॥ २६९ ॥

मासोऽयम ज नासूनो वर्तते दशमः खलु ॥
रावणेन नृशंसेन ममैष समयः कृतः ॥ २७० ॥

बिभीषणो य त्नपरो मम प्रत्यर्पणं प्रति ॥
तेनानुनीतो दिक्तुंडो न च तन्मन्यते खलः ॥ २७१ ॥

न रोचते रा वणस्य मम प्रत्यर्पणं कपे ॥
अविंध्यस्यापि सद्बुद्धेर्वचो न कुरुते हृदि ॥ २७२ ॥

या कन्या ना म सुमतिर्बिभीषणसुता कपे ॥
तया ममेतदाख्यातं मात्रा प्रहितया स्वयं ॥ २७३ ॥

---

१ (हरि-कस) वानर आणि अस्वल. २ समुद्र. ३ मास. ४ पांचवा काळविभाग (तिसरे प्रहराचा). ५ रावण. ६ रावण-मंत्री.

अथोवाच श्री मतीं तां वायुसूनुर्विचक्षणः ॥
सीते श्रुत्वैव मद्वाक्यं क्षिप्रमेष्यति राघवः ॥ २७४ ॥

अथवा त्वां रा जकन्ये मोचयिष्यामि दारुणात् ॥
अस्माद्दुःखादुपारोह मम पृष्ठमनिंदिते ॥ २७५ ॥

सरावणा म पि पुरीं वोढुं शक्तिर्ममास्ति हि ॥
प्रापयिष्यामि रामाय त्वामद्यैव नृपात्मजे ॥ २७६ ॥

सीतोवाचा ज नासूनो कपित्वमुचितं तव ॥
कथमल्पशरीरस्त्वं मामितो नेतुमिच्छसि ॥ २७७ ॥

तस्याः प्रत्य य हेतोः स मेरुमंदरसन्निभम् ॥
स्वाकारं दर्शयामास तं दृष्ट्वोवाच जानकी ॥२७८॥

वत्स वायो रा त्वजस्त्वं गतिर्दीप्तिश्चतेऽद्भुता ॥
प्राकृतोऽन्यः कथमेमां भूमिमागन्तुमर्हति ॥ २७९ ॥

अयुक्तं तु म या गंतुं कपिश्रेष्ठ त्वया सह ॥
भवतो वायुवेगस्य वेगो मां मोहयिष्यति ॥ २८० ॥

प्रपतेयं ज लनिधौ पृष्ठाद्वेगवतस्तव ॥
भवेयमाशु विवशा यादसामन्नमुत्तम ॥ २८१ ॥

नाहमिच्छे य मन्यस्य गात्रं स्प्रष्टुं स्वतः कपे ॥
अनीशा चाप्यनाथा च रक्षःस्पर्शं तदा गता ॥२८२॥

यदि रामो ज गन्नाथो हत्वेह दशकंधरम् ॥
गृहीत्वा मामितो गच्छेत् तत्तस्य सदृशं भवेत् ॥२८३॥

स आंजने य स्तामाह त्वयोक्तं शुभदर्शने ॥
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २८४ ॥

अभिज्ञानं रा जपुत्रि प्रयच्छ त्वमपि प्रभोः ॥
येन प्राप्तप्रहर्षं सत्प्रसन्नं भविता मनः ॥ २८५ ॥

देव्युवाच म हेंद्रस्य पुत्रः काकः स मां पुरा ॥
चित्रकूटेऽसकृत्तात व्यदारयत दुर्मतिः ॥ २८६ ॥

---

१ जलचर.

ब्रम्हास्त्रेण श्री मताऽऽशु दर्भे संयोज्य मारुते ॥
प्रक्षिप्ते वायसस्त्रस्तोस्त्रिजगत्त्रीं परिभ्रमन् ॥ २८७ ॥

स त्राणमा रा ज्जनकादीश्वरात्परमेष्ठिनः ॥
अप्राप्य शरणं राम प्राप्तो मुक्तोऽक्षिदानतः ॥२८८॥

एतदेक म भिज्ञानमिमं चूडामणिं च मे ॥
नय दर्शय रामाय सत्यप्रत्ययकारकम् ॥ २८९ ॥

एवमुक्तोऽ ज नात्सूनुर्नत्वा तां विश्वमातरम् ॥
मणिमाशिषमादाय गमनायोपचक्रमे ॥ २९० ॥

तमुवाचाऽऽ य ताक्षी सा बाष्पगद्गदया गिरा ॥
हनूमन्कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ ॥२९१॥

प्लवंगनो रा धिपतिं सुग्रीवं सचिवैर्युतं ॥
वृद्धान् सर्वान् कपींश्चापि ब्रूयास्त्वं कुशलं कपे ॥२९२॥

यथाच स म हाबाहुर्मां तारयति राघवः ॥
अस्माद्दुःखांबुधेः शीघ्रं त्वं तथा कर्तुमर्हसि ॥ २९३ ॥

प्लवंगमा ज लनिधिं तरिष्यंति कथ नु ते ॥
तरिष्यतः कथं तौ च दुस्तरं रामलक्ष्मणौ ॥ २९४ ॥

तदांजने य स्तामाह सुग्रीवो वानरेश्वरः ॥
सखा रामस्य सत्वाद्यस्त्वरार्थे कृतनिश्चयः ॥ २९५ ॥

कोटिशस्ते च सा पूर्णाः सत्ववन्तो महाबलाः ॥
मनःसंकल्पसंपाता निदेशे तस्य वानराः ॥२९६ ॥

मत्तुल्यास्ते य त्नशील्ला मद्विशिष्टाश्च वानराः ॥
मत्तः कोऽपि न हीनोऽयमहं तासांदिहागतः ॥२९७॥

किंपुनस्ते रा क्षि घोरा महात्ल्पपराक्रमाः ॥
न हि प्रकृष्टाः प्रेष्यंते प्रेष्यंते हीतरे जनाः ॥ २९८॥

एष्यति ते म हाल्कामेकोपातेन जानकि ॥
मम पृष्ठगतौ तौ च नृसिंहावागमिष्यतः ॥ २९९ ॥

---

१ मनोवेग.

ता नेष्यत श्री-मदीशो हत्वा रावणमाहवे ॥
शपे सत्येन ते देवि लंका भस्मीकरिष्यत ॥ ३०० ॥

इत्युक्त्वा ता रा जसुता नत्वा निर्गत्य मारुतिः ॥
बभञ्ज तद्वनं कर्तुं युद्धं द्रष्टुं दशाननम् ॥ ३०१ ॥

राक्षसीना म हद्रूप सञ्चकार भयावहम् ॥
तास्तं दृष्ट्वा महाकायं पप्रच्छुर्जनकात्मजाम् ॥३०२॥

कोऽयं जन्तु ज पराक्रिमि किं, निमित्तमिहागतः ॥
सयादक्ष कृतोऽनेन त्वया तत्कथयाखिलं ॥ ३०३ ॥

उवाच त्या म निपुणा रक्षसा कामरूपिणा ॥
विज्ञाने मम का शक्तिर्नैव जानामि कोऽप्ययम् ॥३०४॥

भीतास्म्येन रा त्रिचर चेद्भ्यह कामरूपिणः ॥
यूयमेवास्य जानीत योऽयं यद्वा करिष्यति ॥ ३०५ ॥

अहिरेव, म तो-जातुमहे पादान्सशय: ॥
इत्युक्तास्तास्ततो भीता राक्षस्यो रावणं गताः ॥३०६॥

शशायु र—ज-नीचर्यो वानरः कश्चिदागतः ॥
जानक्या कृतसंवादस्तिष्ठत्यमितविक्रमः ॥ ३०७ ॥

राजन् सा, तो-य-जाक्षी त प्लवग कृतसाहसम् ॥
नास्माभिर्बहुधा-पृष्टा निवेदयितुमिच्छति ॥ ३०८ ॥

शक्रस्य, रो-ज-राजस्य दूतो वाऽयं महाबल ॥
प्रेषितो वाऽपि, रामेण सीतान्वेषणकाङ्क्षया ॥३०९॥

तेनैवाद्य य दलत प्रिय तव मनोहरम् ॥
नानामृगखगाकीर्णं नाशितं प्रमदावनम् ॥ ३१० ॥

तस्मिन्वने रा सर्वत्र प्रदेशोनाशितोऽखिलः ॥
यत्र सा जानकी देवी स एकोऽनेन रक्षितः ॥३११॥

तच्छ्रुत्वा स म हातेजा रावणो राक्षसेश्वरः ॥
चितामिरिव जज्वाल कोपसंवर्तितेक्षणः ॥ ३१२ ॥

---

१ कुबेर.

लोचनाभ्यां श्रीदशत्रोः प्रापतन्नश्रुबिंदवः ॥
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिंदवः ॥३१३॥

किंकराख्यान् रा क्षसान् स व्यादिदेश महाबलान् ॥
भवनात्ते ऽयुतान्यष्टौ निर्ययुर्विविधायुधाः ॥३१४॥

॥ प्लवंग म शार्दूलः पुच्छमाविध्य भूतले ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ ३१५॥

स सुग्रीवो ऽ यति नो राजा रामेण पालितः ॥
दासोऽहं कोसलेंद्रस्य हनूमान्मारुतात्मजः ॥३१६॥

अहं निर्भ य एवास्मि शिलावृक्षनखायुधः
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ॥ ३१७॥

अर्दयित्वा रा क्षसानां पुरीं नत्वा च मैथिलीं ॥
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसां ॥ ३१८ ॥

एवं तस्य म रुत्सूनोर्गर्जतो ध्वनिना खगाः ॥
निपेतुर्नभसस्त्रस्तास्तेऽभवन् खलु किंकराः ॥३१९॥

किंकरास्ते ऽ ञ नासूनुमभिपेतुरितस्ततः ॥
स तैः परिवृतः शूरैः सर्वतः सुमहाबलः ॥३२०॥

आससादो म सं भीमं परिघं तोरणाश्रितं ॥
घोरं परिघमादाय जघान रजनीचरान् ॥ ३२१ ॥

द्विशः क्षत ञ दिग्धांगा हतशेषा निशाचराः ॥
निहतान् किंकरान्सर्वान्रावणाय न्यवेदयन् ॥३२२॥

प्रहस्तका य जं राजा प्राहिणोज्जंबुमालिनं ॥
अत्रांतरे कपिर्भक्त्वा चैत्यप्रासादमद्भुतम् ॥३२३॥

चैत्यस्तंभं रा मद्भुतो गृहीत्वा हंतुमागतान् ॥
चैत्यपालान् शतं तेन जघान रजनीचरान् ॥ ३२४ ॥

विश्राम्य ना म कार्यं च जंबुमालिनमागतम् ॥
प्रगृह्य परिघं घोरं तं जघानानिलात्मजः ॥३२५॥

---

कुबेर इ नु=पवन. २ प्रहस्त. ३ सोमशाखा. ४ मद्र.

तदाकर्ण्य श्री दशबंधुः सभान्यान् मंत्रिनंदनान् ॥
प्रेषयामास सत्वरान् स तानपि यमक्षयम् ॥ ३२६ ॥

सेनापतीन् रा क्षसेंद्रो दुर्धरप्रमुखांस्ततः ॥
पंच प्रहितवान् क्रुद्धः समरे दृष्टविक्रमान् ॥ ३२७ ॥

जघान स म रे तानप्यतितेजा मरुत्सुतः ॥
कुमारमक्षं च ततश्चोदयामास रावणः ॥ ३२८ ॥

अक्षमप्यं ज नापुत्रो धृत्वा चरणयोर्बलात् ॥
आविध्य व्योम्नि चिक्षेप व्यसुं तार्क्ष्य इवोरगं ॥३२९॥

ज्येष्ठं तन य मिंद्रस्य जेतारं रावणस्ततः ॥
मारुतेः प्रेषयामास निग्रहायास्त्रविद्वरम् ॥ ३३० ॥

स तेजस्वी रा क्षसेंद्रं नत्वा कृत्वा प्रदक्षिणं ॥
व्यालैश्चतुर्भिर्युक्तं स्वं रथमारुह्य निर्ययौ ॥ ३३१ ॥

इंद्रजित्स—म—रश्लाघी मारुतिश्च महाबलः ॥
यक्षसिद्धर्षयो द्रष्टुं तयोर्युद्धं समागताः ॥ ३३२ ॥

समेतावं ज नामंदोदरीपुत्रौ महाबलौ ॥
सुरासुरेंद्राविव तौ बद्धवैरौ विशारदौ ॥३३३ ॥

अवध्यं सं य ति ज्ञात्वा ब्रम्हास्त्रेणेंद्रजित्कपिं ॥
बबंधाय स निश्चेष्टोऽभवद्धृव्यपतत्तदा ॥ ३३४ ॥

मारुतिः कं ज जास्त्रं तद्बध्वात्मानि कृतास्पदं ॥
मुहूर्तमात्रान्मुक्तिं च ज्ञात्वाऽऽसीन्निमिषविह्वलः ॥३३५॥

नैवास्तिभ य मस्त्रान्मे बद्धस्येयदपि स्फुटम् ॥
पितामहमहेंद्राभ्यां रक्षितस्यानिलेन च ॥ ३३६ ॥

ग्रहणेऽपो रा क्षसैश्च महान्मे गुणदर्शनम् ॥
राक्षसेंद्रेण संवादस्तस्माद्गृह्णंतु मां परे ॥ ३३७ ॥

निश्चितार्थे -म नस्येवं बबंधुः शैणरज्जुभिः ॥
स मुक्तोऽस्त्रेण सहते नास्त्रबंधोऽन्यबंधनम् ॥ ३३

---

१ घर. २ गरुड. ३ ताग, आंबाडी.

नासा जय श्री रिति तं दृष्ट्वा बद्धं निशाचरैः ॥
मेने मनस्यगाच्चिंतामस्त्रतत्त्वार्विदिंद्रजित् ॥ ३३९ ॥

स राक्षसै रा वणस्य समीप हृष्टमानसैः ॥
क्षिपद्भिस्ताडयद्भिश्च प्राकृष्यत कुबुद्धिभिः ॥ ३४० ॥

इंद्रजित्तं म हावीर्यमस्त्रमुक्तं प्लवंगमं ॥
रज्जुबद्धं रावणाय सगणाय व्यदर्शयत् ॥ ३४१ ॥

दृष्ट्वा तं रा ज राजस्य भ्रातर कपिपण्डितः ॥
मनसा चिंतयामास तेजसा तस्य मोहितः ॥ ३४२ ॥

अस्मिन्नेको य द्यधर्मो न स्याद्राक्षसनायके ॥
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ ३४३ ॥

प्रहस्तस्त रा वणस्य निदेशादिदमब्रवीत् ॥
समाश्वसिहि भद्र ते न भीः कार्या त्वया कपे ॥३४४॥

प्रेषितोऽसि म हेंद्रेण कुबेरेण यमेन वा ॥
वरुणेनाल्पं राज्ञो दूतस्त्वंविष्णुनाऽथवा ॥ ३४५ ॥

नैर त्वं ते ज सा भासि रूपमात्रेण वानरः ॥
मोक्षः सत्यादसत्यात्तु दुर्लभ तव जीवितं ॥ ३४६ ॥

रावणाल य एतस्मिन्प्रवेशोऽद्य त्वया कपे ॥
किंनिमित्तःकृतो ब्रूहि तत्वतो मोक्ष्यसे ततः ॥ ३४७ ॥

अब्रवीदं ज नापुनस्तदा रक्षोगणेश्वरम् ॥
तेजसा भगवानिंद्रो वाणोनेति विशंकितं ॥३४८ ॥

न शक्रस्य य मस्याहं श्रीदस्य वरुणस्य वा ॥
जातो कश्चित्प्रयोगो विष्णुना नास्मि चोदितः ॥३४९॥

अत्रागतो रा वणस्य दर्शनार्थमहं कपिः ॥
तदिदं दुर्लभ तेन नाशितं प्रमदावनम् ॥ ३५० ॥

रक्षोभिस्तु म यायुद्धं रक्षार्थं कृतमात्मनः ॥
नास्मि इट्टकामेन प्रमदावनमुत्तमम् ॥ ३५१ ॥

तवांतिकं श्री रामस्य कार्येणाहमिहागतः ॥
प्रेषितोऽस्मि हरींद्रेण सुग्रीवेण महात्मना ॥ ३५२ ॥

स त्वां भ्राता रा क्षसेंद्र स्वयं कुशलमब्रवीत् ॥
भ्रातुः शृणु समादेशमिह चामुत्र च क्षमम् ॥ ३५३ ॥

हरेः सखा म हातेजा राजा दशरथः श्रुतः ॥
तस्य ज्येष्ठः सुतो रामः प्रभुः सत्यपराक्रमः ॥ ३५४ ॥

तस्य प्रिया ज नकजा लक्ष्मणस्तत्समोऽनुजः ॥
स ताभ्यां दंडकारण्यमागतः पितुराज्ञया ॥ ३५५ ॥

तद्भार्या प्रे य ता नष्टा जनस्थाने पतिव्रता ॥
स सानुजो मार्गयंस्तामृष्यमूकाद्रिमागतः ॥ ३५६ ॥

लक्ष्मणो रा म भद्रः सुग्रीवेणाथ संगतः ॥
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ॥ ३५७ ॥

सुग्रीवस्य य नुष्याणामिंद्रेणापि महात्मना ॥
राघवेण प्रतिज्ञातं हरिराज्यं निवेदितुम् ॥ ३५८ ॥

प्रभुणा रा म पुत्रेण हत्वा वालिनमाहवे ॥
सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥३५९॥

प्रभुणा सं य ति हतः शरेणैकेन रावण ॥
त्वया विज्ञातपूर्वः स वाली वानरपुंगवः ॥ ३६० ॥

तामन्वेष्टुं ज नकजां कोटिशः सत्यसंगरः ॥
हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥३६१ ॥

अहं तु प य सां राशिं शतयोजनमायतम् ॥
लंघयित्वा प्रभोर्भार्यां तां दिदृक्षुरिहागतः ॥ ३६२ ॥

भ्रमता सा रा ज कन्या दृष्टा तव गृहे मया ॥
परदारान्महाप्राज्ञो नोपरोद्धुं त्वमर्हसि ॥ ३६३ ॥

सतामसं म ते घोरे सर्वधर्मार्थनाशके ॥
न हि कर्मणि सज्जंते बुद्धिमंतो भवद्विधाः ॥ ३६४ ॥

---

१ श्राचा. २ पतित्रां. ३ प्रतिज्ञा.

राघवस्य श्री मतः को लक्ष्मणस्य च धीमतः ॥
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ ३६५ ॥

त्रैलोक्ये रा घवस्य कृत्वा सुखमवाप्नुयात् ॥
राजंस्त्रिष्वपि लोकेषु विद्यते न स कश्चन ॥ ३६६ ॥

तद्रावण म या प्रोक्तं त्रिकालहितमर्थवत् ॥
धर्म्यं मन्यस्व वचनं जानकी प्रतिदीयताम् ॥ ३६७ ॥

नेयं शक्या त्व रेयितुं सासुरैरमरैरपि ॥
विषसंपृक्तमत्यर्थं भुक्तमन्नमिवौजसा ॥ ३६८ ॥

अवध्यत्वं य दप्यस्ति धर्मस्तत्र हि कारणम् ॥
तस्मात्त्वया धर्महानिर्न कार्या राक्षसाधिप ॥ ३६९ ॥

जनस्थाने रा क्षसानां विनाशं वालिनस्तथा ॥
रामसुग्रीवसख्यं च बुध्वा त्वं स्वहितं कुरु ॥ ३७० ॥

एकः काम म हं लंकां शक्तो नाशयितुं खलु ॥
प्रभोराज्ञां विना नैतन्मया कार्यं दशानन ॥ ३७१ ॥

प्रतिज्ञातं त्व नेंद्रेण हर्यृक्षगणसंनिधौ ॥
उत्सादनममित्राणां जानकी यैः प्रधर्षिता ॥ ३७२॥

त्वद्गृहे ये- य मानीता रुद्धा तिष्ठति रावण ॥
कालरात्रीति तां विद्धि सर्वलंकाविनाशिनी ॥३७३॥

अपकुर्वन् त्व गद्भर्तुः साक्षादपि पुरंदरः ॥
न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३७४ ॥

नगरीं त्र य मप्येतद्राजन् सहत्य लीलया ॥
पुनरेव तथा स्रष्टुं शक्तो रामो महाबलः ॥ ३७५ ॥

सलक्ष्मणं रा घवं यः प्रतियुध्येत रावण ॥
सर्वथा सर्वभूतेषु सर्वकालेषु नास्ति सः ॥ ३७६ ॥

विष्णुना रा म गोऽस्य कृत्वा विप्रियमीदृशम् ॥
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ३७७ ॥

---

आरण्य २ पर्वाध्याय.

मात-सूनोः श्री मतस्तच्छ्रुत्वा वचनमुद्धतः ।
　　आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ ३७८ ॥

विभीषणो रा क्षसेंद्रं वारयामास सूक्तिभिः ।
　　दूतोऽवध्यो महाराज क्षमस्वेति पुनः पुनः ॥ ३७९ ॥

प्रेषितोऽय म तिक्रूरो यैर्दूतो राक्षसेश्वर ।
　　तेष्वेव पात्यतां दंडो न कोऽप्यस्य वधे गुणः ॥३८०॥

युद्धायोद्यो स येदेव तावयं रामलक्ष्मणौ ।
　　युद्धप्रिय महाराज जीवत्यस्मिन् महान् गुणः ॥३८१॥

तन्मनः प्रि य माकर्ण्य भ्रातुर्वाक्यमथाब्रवीत् ।
　　कपीनां किल लांगूलमिष्टं भवति दारुणं ॥ ३८२ ॥

तदस्य वी रा-द्रा कपेर्दीप्यतां दुर्मतेर्द्रुतम् ।
　　स्वस्वामिनिकटं पापस्तेन दग्धेन गच्छतु ॥ ३८३ ॥

सर्वेत्वरं म म पुरं रक्षोभिः परिणीयताम् ।
　　इत्याज्ञापयदत्युग्रः पुत्रघातातितप्तधीः ॥ ३८४ ॥

तच्छ्रुत्वा रा व वचनं राक्षसाः कोपकर्कशाः ।
　　आवेष्टयंत लांगूलं जीर्णैः कार्पासिकैः पटैः ॥३८५॥

स आंजने य स्तु तदा व्यवर्धत कुतूहली ।
　　शुष्कमिंधनमासाद्य वनेष्विव हुताशनः ॥ ३८६ ॥

परिषिच्यां स ना-सूनोः पुच्छं तैलेन भूयसा ।
　　वर्द्धमाने तत्र शीर्ष ज्वलनं समयोजयन् ॥३८७॥

इतोऽन्यतो य थादेशं नेतृन् दैवहताग् कपिः ।
　　लांगूलेन प्रदीप्तेन राक्षसांस्तानताडयत् ॥३८८ ॥

तं मारुतिं रा क्षसास्ते लंकायां सर्वतस्तदा ।
　　परिगृह्य ययुर्द्रा घोषयंतोऽस्य कर्म तत् ॥ ३८९ ॥

शंख-भेरी—म हानादैश्चारयंति स्म तां पुरीम् ।
　　तच्छ्रुत्वा राक्षसीप्रोक्तं सीताऽग्निं शरणं ययौ ॥३९०॥

---

१ उग्रक करीत. २ सांगत.

सख्युः सूनोः श्री मदाग्नेः प्रार्थितः प्रभुकांतया ।
संप्रदीप्तोऽपि लांगूललोमैकमपि नादहत् ॥ ३९१ ॥

प्रदीप्तेऽग्नौ रा मदूतश्चिंतयामास सन्मतिः ।
संप्रदीप्तोऽप्ययं कस्मान्न मां दहति पावकः ॥३९२॥

दृश्यते च म हाज्वालः करोति च न मे रुजम् ।
हिमस्य पिंड इव मे लांगूलाग्रे प्रतिष्ठितः ॥ ३९३ ॥

अथवाऽयं म नकजा-भर्तुः शीतः प्रभावतः ।
सागरस्यादरस्ताद्दाक्षिमार्मेर्न करिष्यति ॥ ३९४ ॥

सीताया द य या नूनं तेजसा राघवस्य च ।
पितुश्च मम सख्येन न मां दहति पावकः ॥ ३९५ ॥

भूयः स वी रा धिपतिश्चिंतयामास चेतसि ।
कथमस्माद्विधस्यैवमधर्मैर्बंधनं कृतम् ॥ ३९६ ॥

प्रतिक्रिया म या योग्या कार्या बुद्धिमतेति सः ।
छित्वा पाशानुत्पपात ददाह विनदन् पुरीम् ॥३९७॥

स कौर्श-कुं म रो भूयः परिघं तोरणाश्रितम् ।
गृहीत्वा रक्षिणः सर्वान् सूदयामास राक्षसान् ॥३९८॥

पितुः सखा म मनलं समृद्धैरक्षसां गृहैः ।
कृतज्ञस्तर्पयामास साधुमत्युपकारवित् ॥ ३९९ ॥

ततो धनं ज यस्यायं कुर्वंस्तर्पणमीप्सितम् ।
राजाद्विभवनाग्रेषु विचचार महाकपिः ॥ ४०० ॥

लंकां निर्भं य चेनाः स भवनाद्भवनं व्रजन् ।
ददाह रुद्रमहित- शारो दैत्यपुरीमिव ॥ ४०१ ॥

तृणैर्यथा रा शिशतैर्यथा वन्हिर्न तृप्यते ।
तथैवदापे नो तृप्तः कृते रक्षोवधे कपिः ॥ ४०२ ॥

लंकां सर्वां म हानेजा दग्ध्वा लांगूल-पावकम् ।
निर्वापयामास तदा समुद्रे हरि-पुंगवः ॥ ४०३ ॥

---

१ पीडा २ सागर-जेव.

लंकां दग्ध्वा श्री हनूमान् पश्चात्तप्तोऽभवत्तदा ।
आत्मानं गर्हयन्नेव चिंतयामास दुःखितः ॥ ४०४ ॥

धिगस्तु मां रा घवस्य प्रियां विसृज्य पावकः ।
उद्दीपितोऽत्र लंकायां दग्धा नूनं तपस्विनी ॥४०५॥

कार्य-नाशो म हानद्य क्रुद्धेनायं मया कृतः ।
धन्या विवेकिनः संतो हत सत्यमहं कपिः ॥ ४०६ ॥

नूनं देवी ज नकजा सा दग्धा लंकया सह ।
हा मया दहता लंकां न सीता परिरक्षिता ॥४०७॥

यदर्थम य मारंभस्तत्कार्यमवसादितम् ।
लंकायाः कश्चिदुद्देशो न ह्यदग्धः प्रदृश्यते ॥४०८॥

धिग्धिग्भावं रा जसं मे कार्यसर्वस्व-घातिना ।
कथं शक्यो मया द्रष्टुं रामः स च हरीश्वरः ॥४०९॥

निमित्तानि म हा बुद्धिर्दृष्ट्वा शुभ-फलानि सः ।
किंचित्स्वस्थो वातसूनुस्ततः पुनरचिंतयत् ॥ ४१० ॥

अथवा ते ज सा स्वेन रक्षिता जनकात्मजा ।
न नशिष्यति कल्याणी ह्यग्निरग्नौ प्रवर्तते ॥ ४११ ॥

धर्मात्मा प्र य तो रामः प्रियां तस्यातितेजसः ।
स्वचरित्राभिगुप्तां न स्प्रष्टुमर्हति पावकः ॥ ४१२ ॥

नूनं धर्मं ज यो राम-प्रभावेनापि मां कपिं ।
शुक्लेन च सीताया नादहत्किमु तां सतीं ॥ ४१३ ॥

एवं चित य ता तेन चारणानां महात्मनां ।
आत्मानं स्तुवतां वाक्यं श्रुतमंबरचारिणाम् ॥ ४१४ ॥

अहो समी रा त्मजेन सादृप्राकारतोरणा ।
लंका दग्धा न सीतेति विस्मयोऽद्भुत एव नः ॥४१५॥

तत्सुघोप म माकर्ण्य वाक्यं स पवनात्मजः ।
जगाम यत्र सा देवी नत्वा तामब्रवीन्मुदा ॥ ४१६ ॥

---

१ देव-योनि-विशेष. २ वाड्यांच्या भिंती व कमानी या सकट.

दिष्टचाऽक्षता श्री मति त्वा पश्यामि जनकात्मजे ।
अयमागत एवाद्य राम सुग्रीव लक्ष्मणै ॥ ४१७ ॥

इति सीता रा जसुता समाश्वास्य मरुत्सुत ।
नत्वा दृष्ट्वा पुन क्षिप्र निर्जगाम मनोगति ॥४१८॥

गतो गिरि म रिष्टाख्यमारुह्योत्प्लुत्य स गत ।
तद्भार पीडितो भूमौ निमग्न ॥ महानग ॥ ४१९ ॥

त मैनाक ञ त्निधौ दृष्ट्वा तार्क्ष्यगति कपि ।
आगच्छन् दरतो दृष्ट्वा महेंद्रमकरोद् ध्वनि ॥४२०॥

श्रुत्वाजने— य-निनद जाम्बवानब्रवीत्कपीन् ।
सर्वथा कृतकार्योऽयमस्य नादो हि तादृश ॥४२१॥

ते कीशवी—रा वृक्षाग्राद्वृक्षाग्राणि तनागतम् ।
शिखराच्छिखराग्राणि दृष्टा जग्मुर्दिदृक्षव ॥ ४२२ ॥

गिरेस्ततो म हेंद्रस्य शिखरे पादपाकुले ।
पपात नभसाच्छिन्नपक्षोऽद्रिरिव मारुति ॥ ४२३ ॥

प्लवगकु ञ रा सर्वे परिवार्योपतस्थिरे ।
वृद्धान्नत्वागदचाथ दृष्टा सीतेति सोऽब्रवीत् ॥४२४॥

आदायोपा य ना पार्या मूलानि च फलानि च ।
पूजा चक्रुमरुत्सूनोर्जांबवत्प्रमुखा मुदा ॥ ४२५ ॥

सविस्तर ञ गत्प्राणतनयो वृत्तमादित ।
कथयामास ॥ श्रीमान् धीमान् ह्रीमान् पराक्रमी ॥४२६॥

अगदाद य उत्कृष्टप्रताप वाननदान् ।
तुष्टाहृष्टरोमाण साधु साध्विति तेऽब्रुवन् ॥ ४२७ ॥

ततोऽगदो रा जपुत्रोऽब्रवीद्धत्वा दशाननम् ।
अस्माभिरर्पणीया सा रामाय जनकात्मजा ॥ ४२८ ॥

तमुवाच म हाबुद्धिर्जांबवान् प्रभुणा रावण ।
निचेतु यदनाज्ञप्ता नानेतु वालिनन्दन ॥ ४२९ ॥

---

१ मरुत

अस्माभिस्तु श्री मदाता यथाकार्यं तथा खलु ॥
प्रवृत्तिरेव सीताया निवेद्याशु महाभुज ॥ ४३० ॥

कथंचित्तां रा जकन्यामस्माभिर्निर्जिता प्रभुः ॥
चेन्नाभिरोचयेद्रामस्ततस्तत्सर्वं विफलं भवेत् ॥ ४३१ ॥

तेन सूक्त म गृण्हस्ततसाधु साध्विति चाब्रुवन् ॥
महेंद्राग्रात्समुत्प्लुत्याप्लवत प्लवगर्षभा' ॥ ४३२ ॥

ते प्रवृत्तिं ज गद्भूर्वे समाख्यातु महार्पिताः ॥
आगच्छतो मधुवन समासेदुः प्लवंगमाः ॥ ४३३ ॥

सुग्रीवस्य य दत्यर्थं प्रिय नदन सनिभम् ॥
मातुलः कपिराजस्य नाम्ना दधिमुखः कपिः ॥४३४॥

कौशिरद्वो रा त्रमेव यस्य त्राण परायण. ॥
तत्प्राप्य ते मधुवन सर्वभूतमनोहरम् ॥ ४३५ ॥

कुमार तं म धून्यत्तुमभ्ययाचत लोलुपाः ॥
फलानि च सुगंधीनि मूलानि च कृतश्रमाः ॥४३६॥

युवराजो ज नापुत्र-प्रतापेन महार्पितः ॥
तेषामाज्ञां ददौ तत्र यथेष्ट-मधु-भक्षणे ॥ ४३७ ॥

सर्वे पीत्वा य थेष्टं ते मधूनि मधु-लोलुपाः ॥
अभक्षयन् सुगंधीनि मूलानि च फलानि च ॥४३८॥

ते प्रहर्ष ज न्मुरुप्र प्राप्य-पान-मदोत्कटाः ॥
केचिन्नृत्यंति गायंति प्रहसंति रुदंति च ॥ ४३९ ॥

द्रुमाग्रात्प्र य संपाताद् द्रुमाग्रे जग्मुरुत्कटाः ॥
न तत्र मत्तो नो कश्चिन्नात्र दत्तो न कश्चन ॥४४०॥

विध्वासिते रा ज-वने कोपाद् दधिमुखः कपिः ॥
निवारयामास हरींस्ते त धिक्चक्रुरुन्मदाः ॥ ४४१॥

रुध्वा तेऽनु म ति सर्वे मारुतेरंगदादपि ॥
क्रुद्ध दधिमुख वीरा ताडयामासुरुद्धताः ॥ ४४२ ॥

---

१ वार्ता

सुग्रीवाय श्री मते स क्रुद्धो दधिमुखः स्वयम् ।
गत्वा निवेदयामास यदंगद-मुखैः कृतम् ॥ ४४३ ॥

पप्रच्छ वी रा धिपतिः सुग्रीव लक्ष्मणस्तदा ।
किमद्य दु खितो राजन् वानरो वांके तद्वद ॥ ४४४ ॥

स प्लवग म राजस्तु लक्ष्मण प्राह राघव ।
भुक्त मधु-वन कौशैरंगद-प्रमुखैर्बलात् ॥ ४४५ ॥

दृष्टा देवी ज नकजा ध्रुव रघु-कुलोत्तम ।
नैषामकृत्त-कार्याणामीदृश. स्याद्व्यतिक्रमः ॥ ४४६ ॥

ताडिता भ य मुत्सृज्य वन-पाला प्लवगमैः ।
कृत निर्विषय सर्वं वन दत्त वर मम ॥ ४४७ ॥

एव श्रुत्वा रा जवाक्य युक्तिमद्रामलक्ष्मणौ ।
प्रहर्षमतुल प्राप्तौ सीता-दर्शन-लालसौ ॥ ४४८ ॥

मातुल सा म कुशलः सुग्रीव प्राह तद्वनम् ।
पालय त्व यथापूर्वं प्रेषयाशु कपींश्च तान् ॥ ४४९ ॥

स गत्वा स त्व वस्तत्र स्थितान् दधिमुखः कपीन् ।
अगद युवराज च दृष्ट्वोवाच कृताञ्जलिः ॥ ४५० ॥

युवराज य दज्ञानादपराद्ध क्षमस्व तत् ।
द्रष्टुमिच्छति राजा त्वां सर्वैर्भिर्हरियूथपैः ॥ ४५१ ॥

प्लवगरा ज स्त्वामाशु प्लवगैः सह पश्यतु ।
प्रहृष्टो न तु रुष्टोऽसौ वन श्रुत्वा प्रधर्षितम् ॥४५२॥

अगदो न य वितूर्ण श्रुत्वा दधि-मुखेरितम् ।
जगाम हनुमन्मुख्यैः सह सुग्रीव-संनिधिम् ॥ ४५३ ॥

कृत्वाऽग्रतो रा ज-सुत हनुमत च वानराः ।
नन्नुत्पतन्त गगन यन्त्रोत्क्षिप्ता इवोपलाः ॥ ४५४ ॥

श्रुत्वा तेषां स हानादान् सुग्रीव प्राह राघवन् ।
समाश्वसिहि भद्र ते दृष्टा देवी न संशयः ॥ ४५५ ॥

हनूमता श्री मती सा दृष्टा नान्येन राघव ॥
नास्त्यस्य कर्मणो हेतुः साधने तद्विधोऽपरः ॥ ४५६ ॥

पेतुः प्रवी रा गर्जतः प्रदेशेषु समेषु खात् ॥
राम-लक्ष्मण-सुग्रीव-चरणेष्वपि ते ततः ॥ ४५७ ॥

हनूमांश्च म हाबाहुः प्रणम्य शिरसा ततः ॥
नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ४५८ ॥

हनूमतो ज नक-जा-संदष्टेत्यमृतोपमम् ॥
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ ४५९ ॥

निश्चितार्थं य शोराशी सुग्रीवं पवनात्मजे ॥
लक्ष्मणः प्रीतिमान् प्रीतं बहु-मानादवैक्षत ॥ ४६० ॥

क वर्तते रा ज-कन्या कथं चापि मयीति तान् ॥
रामे पृच्छति ते कीशाः प्रेरयंति स्म मारुतिम् ॥ ४६१ ॥

प्रणम्य स म रुत्पुत्रः सीतायै तादृशे च तम् ॥
मणिं दत्वा राघवाय सर्व वृत्तं न्यवेदयत् ॥ ४६२ ॥

लंघयित्वा स ल-निधिं शत-योजनमायतम् ॥
सीतामपश्यं लंकायां रावणस्य पुरि प्रभो ॥ ४६३ ॥

कृशांगी नि-य तां दृष्टा राक्षसीभिः सुतर्जिता ॥
रावणाद्विनिवृत्तार्था मर्तव्य-कृत-निश्चया ॥ ४६४ ॥

मनोरथं ज नक-जा त्वयि संन्यस्य दुःखिता ॥
एक-वेणी-धरा दीना नित्य चिंता-परायणा ॥ ४६५ ॥

दत्वाऽगुलीय कं मया कीर्तयित्वा गुणांश्च ते ॥
सा मया नरशार्दूल शनैर्विश्वासिता सती ॥ ४६६ ॥

दत्वा मणिं रा ज-पुत्री काक-वृत्तं च साऽब्रवीत् ॥
त्वां लक्ष्मणं च कुशलं सुग्रीवं चावदत्सती ॥ ४६७ ॥

इत्येवं स म रुत्पुत्रः प्रोवाच प्रांजलिर्नतः ॥
रामो-भक्त-मयूराणां मुदिरो मुदितस्ततः ॥ ४६८ ॥

इति श्रीमन्मंत्र-रामायणे श्रीराम-नंदन-मयूर-विरचिते श्री सुंदर-कांडे षट्त्रिंशो मंत्रः ॥

१ इंद्र-काकाची गोष्ट.

# युद्ध—कांडम्.

हनूमदुक्तं श्री रामः श्रुत्वातीव प्रहर्षितः ॥
उवाच वाक्यं यद्योग्यं सुप्रिय-श्रवणोत्तरम् ॥ १ ॥

कृतं कार्यं प रा शक्यं धीमताऽनिलसूनुना ॥
न ह्यन्यं परि-पश्यामि यस्तरेत्तं महोदधिम् ॥ २ ॥

लंकां हि कोना म विशेन्निष्क्रमेत्संप्रविश्य च ॥
भृत्य-कार्यं हनुमता सुग्रीवस्य महत्कृतम् ॥ ३ ॥

श्रेष्ठं यशोऽस्य ज गति नियोगादधिकं कृतम् ॥
न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ ४ ॥

अहं रघुवं श श्चायं लक्ष्मणश्च महाबलः ॥
वैदेह्या दर्शनेनाद्य धर्मतोऽनेन रक्षिताः ॥५ ॥

प्रियाख्यातुर्व रा र्हस्य वायु-सूनोर्महात्मनः ॥
मनः खिन्नं ममाकर्तुः कर्मणः सदृशं प्रियम् ॥ ६ ॥

मया त्विदानीं म नसा विचार्यैव पुनःपुनः ॥
सर्वस्वभूतोऽयं दत्तः परिष्वंगोऽस्य मारुतेः ॥ ७ ॥

इत्युक्त्वा प्रीति ज नितप्रभूतपुलकः प्रभुः॥
कृतकार्यं हनूमंतं तं रामः परिषस्वजे ॥ ८ ॥

पप्रच्छ तं प्रि य तमा-प्राप्त्युपायं प्रभूतमः ॥
वीर सा कीदृशी लंका दुर्जया या सुरासुरैः ॥ ९ ॥

सुदुष्पारस्य ज लधेः कथं नाम महामते ॥
हरयो दक्षिणं पारं गमिष्यंत्यंजनात्मज ॥ १० ॥

इत्युक्त्वा तामा य ताक्षीं सीतां मत्वाऽतिदुर्लभाम् ॥
शोक-संभ्रांत-हृदयः पुनर्ध्यानमुपागमत् ॥ ११ ॥

उवाच वान रा धीशस्तं रामं शोक-विव्हलम् ॥
किं त्वया तप्यते वीर यथाऽन्यः प्राकृतस्तथा ॥ १२ ॥

मैव भूः पर म ज्ञानी त्वं हि राम महाबलः ॥
त्यज संतापमाशिन्नं कृतघ्न इव सौहृदम् ॥ १३ ॥

लब्धा प्रवृत्तिः श्री मत्या ज्ञातश्च निलयो रिपोः ॥
संतापस्याद्य ते स्थानं नैव पश्यामि राघव ॥ १४ ॥

लंघयित्वा न रा धीशं पयोधिं लीलया वयम् ॥
आरोक्ष्यामः पुरीं लंकां हनिष्यामश्च ते रिपुम् ॥१५॥

इमे शूराः स म र्थाश्च सर्वथा हरियूथपाः ॥
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ १६ ॥

सेतुं निबध्य ज लधौ लंकां हरिबलं गतम् ॥
रावणो निहतः प्राप्ता जानकीत्युपधारय ॥१७॥

इमे हि हर य स्तत्र लंकायां कामरूपिणः ॥
तानरीन् विहनिष्यंति शिलापादपवृष्टिभिः ॥ १८ ॥

इत्येवं कपि रा जस्य श्रुत्वा वचनमर्थवत् ॥
प्रतिजग्राह काकुत्स्थो हनूमंतमथाब्रवीत् ॥ १९ ॥

सर्वथाऽपि स म र्थोऽस्मि सागरस्यास्य लंघने ॥
तपसा सेतुनाऽस्त्रेण पयसः शोषणेन वा ॥ २० ॥

कति दुर्गाण्यं ज नेय द्वाराणि द्विषतः पुरः ॥
लंकाया गुप्तिकर्मापि ब्रूहि संख्यां बलस्य च ॥ २१ ॥

तं वायु-तन य स्तत्रः कथयामास राघवम् ॥
दृढानि राम चत्वारि द्वाराण्यस्या महाबल ॥ २२ ॥

[2]परिखाः सह ज ग्राह-मीनैर्व्याप्ता भयंकराः ॥
द्वारेषु तासां चत्वारः [3]संक्रमाः परमायताः ॥ २३ ॥

प्राकारः स्वच्छ प शासां राशे तस्याः पुरो महान् ॥
सौवर्णो रत्न-खचितो यंत्रैर्गुरुभिराचितः ॥ २४ ॥

पूर्वद्वारि दु रा धर्षा अयुतं भीमराक्षसाः ॥
नियुतं दक्षिणद्वारि चतुरंगबलान्विताः ॥ २५ ॥

दश लक्षाणि म नुजश्रेष्ठ राम निशाचराः ॥
पश्चिमद्वारमाश्रित्य तिष्ठंति प्रियसाहसाः ॥ २६ ॥

---

१ गृह. २ खंदक. ३ पूल ( ज्यास कोकणांत साकव म्हणतात तो ).
५ लक्ष.

तथैव राम श्री। मस्ते न्यर्बुद सुमदोद्धता ॥
रात्रिंचरा महाकाया उत्तरद्वारमाश्रिता ॥ २७ ॥

मद्दो साहा प रा नीके ध्वस्त दक्षा महाबला ॥
स्वामि कार्य परा नित्य सन्नद्धा युद्ध लालसा ॥२८॥

एकाया मध्य म स्कधे चतुरगं बलान्विता ॥
सपादकोटि प्रबलास्तिष्ठति रजनीचरा ॥ २९ ॥

ते सक्रमा रा ज सिद्द ध्वस्ता दग्धा च सा पुरी ॥
प्राकारश्च मया भग्न परिखाश्चावपूरिता ॥ ३० ॥

कपीनाज्ञाप य क्षिप्रमगदादीन् महाबलान् ॥
बलैकदेश क्षपितो मयैव रघुनन्दन ॥ ३१ ॥

सर्वैसैन्येन रा जेन्द्र त्व चेद्गतुमना असि ॥
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३२ ॥

श्रु त्वा वचन म धाब्ध्य मरुत्सूनो रघूत्तम ॥
सुग्रीवमब्रवीद्राजन् मुहूर्ते विजये शुभे ॥ ३३ ॥

ह त्वा दशास्य म नक क्षिति पाल सुतां सतीम् ॥
कर्तुं प्रहृष्टा मा चाद्य प्रयाणमभिरोचय ॥ ३४ ॥

तारा-वल ज य कर समाव प्लवगेश्वर ॥
श्रु त्वाऽभियान मे सीता ह्यहामेष्यति जीविते ॥३५॥

एवमाकर्ण्य ज गतां भर्तुर्वाक्य मशस्करम् ॥
हरीनाज्ञापयामास प्रस्थानाय हरीश्वर ॥ ३६ ॥

सेनापतिर्न य पट्ट कृतो नील पुर सर ॥
ऋषभो दक्षिणे पार्श्वे सव्यमे गंधमादन ॥ ३७ ॥

सेनाया प्रनु रा याश्च पश्चाद्भागेऽथ जाम्बवान् ॥
अधिरुह्य हनूमत श्रीरामो लक्ष्मणोऽगदम् ॥ ३८ ॥

सेनार्णवस्य म ध्ये तु सुग्रीवो वानरेश्वर ॥
राघवाभ्या सह श्रीमान् बभौ सूर्य इवोदित ॥ ३९॥

---

सेना

ततः प्रयाते श्री रामे हरिः शतवलिः स्वयं ॥
भ्रमन् ररक्ष दशभिः कोटिभिर्हरिवाहिनीम् ॥ ४० ॥

अवसद्य वान रा नीक गर्जमाणं रणोत्सुक ॥
विलङ्घ्य सह्यं सम्प्राप्त तीरं लवणवारिधेः ॥ ४१ ॥

सेनां प्लवंग म पतिस्तत्र वेलावनेषु तां ॥
आज्ञया रामचन्द्रस्य स्थापयामास निर्भयां ॥ ४२ ॥

दुस्तरं तं तु ज लधिं विलोक्य रघुनन्दनः ॥
सीतां स्मृत्वा वियोगार्तो विलापमकरोद्भृश ॥ ४३ ॥

अनाथेवाप्रि य तमा सनाथाऽप्यद्य लक्ष्मण ॥
स्वभावतन्वी सा नूनं शोकेनानशनेन च ॥ ४४ ॥

भूयस्तनुत रा सीता देशकालविपर्ययात् ॥
रक्षो हत्वा हरिष्यामि कदा तस्या मनोव्यथां ॥ ४५ ॥

दूरस्थ दूरेति म म नो वत्स दुःखं दहतीति न ॥
एतदेवानुशोचामि वयोस्याद्यतिवर्तते ॥ ४६ ॥

कदा नु सा रा ज सुता देवकन्योपमा मम ॥
सोत्कंठा कंठमालम्ब्य मोक्ष्यत्यानंदजं जलं ॥ ४७ ॥

एवं भृशं प्रि य तमां स्मृत्वा शोचतमग्रजं ॥
आश्वासयामास धीरः सौमित्रिर्विविधोक्तिभिः ॥ ४८ ॥

रावणो वात ज निना दृष्ट्वा कर्म तथा कृतं ॥
पप्रच्छ राक्षसान्कार्यं ह्रिया किंचिदवाङ्मुखः ॥४९॥

आगामिष्यति य लेनं राम उल्लंघ्य सागरं ॥
एकेन तत्कृतं कर्म बहवः कपयः किमु ॥ ५० ॥

हता रक्षोव रा दग्धा दुर्धर्षा नगरी मम ॥
तेन वानरमात्रेण दृष्टा सीता ऽनुभाषिता ॥ ५१ ॥

उच्यतां नः स म र्थं यत्कृतं च सुकृतं भवेत् ॥
किं करिष्यामि भद्रं वः किं वो युक्तमनंतरं ॥ ५२ ॥

ते ऽस्त्रास्तमृचु' श्री मत्व न विना कर्तुमर्हसि ॥
महाराज जित श्रीद पुष्पक च त्वया हृत ॥ ५३ ॥

मृत्युर्वया प रा भूतो वारुणकिस्तक्षकोऽपि स ॥
त्वद्भयाद्दिहृता रक्ष्य कन्या दत्ता मयेन ते ॥ ५४ ॥

दानवाश्च स म र्थास्ते भग्ना लब्धवरा पुरा ॥
मायाश्वाग्गता बह्वो कुंभीनस्या पतिर्जित ॥५५॥

रामाधिकाश्च न गतीपतयो निर्जिता रणे ॥
मेघनादेन विजित शक्रो मुक्तो विधेर्गिरा ॥ ५६ ॥

राजन्नापरिव य मद्य प्राकृतादागता जनात् ॥
हृदि कार्या त्वया नैव त्व वधिष्यसि राघव ॥ ५७ ॥

अथ प्रहस्तो रा जान तत्तेऽनानीस्तदा ऽब्रवीत् ॥
वय प्रमत्ता विश्वस्ता कपिना तेन वंचिता ॥ ५८ ॥

करिष्यामिवि म त्वां क्ष्मा कृत्स्नामकपिमोजसा ॥
भक्षयिष्यामि त राममाज्ञापयतु मा भवान् ॥ ५९ ॥

त दुर्मुखोऽपि न गत पीडक दशकंधर ॥
तथैवोवाच दुर्बुद्धिर्वज्रदंष्ट्रोऽपि राक्षस ॥ ६० ॥

सर्वं एवा र य ग्रास्ते तस्य रक्ष पतेस्तदा ॥
सचिवा भ्रातर पुत्राश्चकु प्रोत्साहन भृश ॥ ६१ ॥

सौमित्रे साम्र न स्याय सुग्रीवस्य हनूमत ॥
हननायोधितान् सर्वान् वारयित्वा विभीषण ॥६२॥

प्रांजलिर्विन य ग्रग्र प्रोवाचाग्रजमीश्वर ॥
तव किं राक्षसेंद्रस्य रामेणापकृत पुरा ॥ ६३ ॥

हत खरोऽप रा धीति रामेण समरागत ॥
वैर समुदीयता त्वया तस्य प्रिया हृता ॥ ६४ ॥

अनिष्टमिद म स्तन हरण परयोषित ॥
महाराज त्वया त्याज्या सीता भीता मतिर्मम ॥ ६५ ॥

---

१ वस्त्रानुसारी मार्ग

प्रसादय त्वां श्री मंतं तथ्यं पथ्यं वचो मम ॥
गृहाण त्वं महाराज दीयतामस्य मैथिली ॥ ६६ ॥

सौभाग्यवत्यो रा क्षस्यः संतु संतुष्टमानसाः ॥
त्वं तु मंतुमिमंकर्तुं नाथ नार्हसि दारुणं ॥ ६७ ॥

इत्थं वदति म र्यादामार्गभाजि विभीषणे ॥
विसर्जयित्वा तान् राजा प्रविवेश स्वकं गृहं ॥ ६८ ॥

भ्रातुर्गृहं र ज न्यंते गत्वा तं पुनरेव सः ॥
अब्रवीद्रामराजाय सीतायाः प्रतिपादनं ॥ ६९ ॥

यदा प्रभृति य त्नेन त्वयाऽऽनीता नृपात्मजा ॥
तदाप्रभृति दृश्यंते निमित्तान्यशुभानि नः ॥ ७० ॥

ोच्यते वीर रा माय वैदेही प्रतिदीयतां ॥
भीतास्ते मंत्रिणो वाच्यमवश्यं तु मया हितं ॥ ७१ ॥

मंत्रिणामिति म ध्ये तं भ्राता भ्रातरमब्रवीत् ॥
सीताभिलाषी दुष्टस्तमुवाच दशकंधरः ॥ ७२ ॥

न पश्याम्यत्र ज गति कुतश्चिद्भयमण्वपि ॥
न जातु प्राप्स्यति पुनः सीतां रामो विभीषण ॥७३॥

स्वयं सहायो य द्यस्य त्रिदशेशो भविष्यति ॥
ममाग्रतः कथं स्थास्यत्यग्रजो लक्ष्मणाग्रजः ॥ ७४ ॥

ायुक्तस्ततोऽनु ज मथ स्यंदनं दशकंधरः ॥
समारुह्य ययौ भव्यां सभां मण्युज्वलप्रभां ॥ ७५ ॥

शुभं समास्था य रथं स्वाग्रजस्य विभीषणः ॥
तां संसद ययौ सर्वे मिलिता यत्र राक्षसाः ॥ ७६ ॥

नेपसाद स रा जानं नत्वा रत्नासने शुभे ॥
अथाब्रवीद्दशमुख. सर्वांस्तान् रजनीचरान् ॥ ७७ ॥

कुंभकर्णस्ये म मयं समानाहमचोदय ॥
अयं हि सुप्तः षण्मासानधुनैव समुत्थितः ॥ ७८ ॥

---

अपराध,

इयं हि सीता श्री तुल्या मयाऽनीता निजां पुरीं ॥,
सा तु संवत्सरं कालं मामयाचत जानकी ॥ ७९ ॥

तन्मयाऽप्यभि र भायाः प्रतिज्ञातं वचः शुभं ॥
श्रांतोऽहं सततं कामाद्यातो हय इवाध्वनि ॥ ८० ॥

दूतेनादाम म प्रोक्तं सुग्रीवप्रमुखान् हरीन् ॥
पुरस्कृत्य समुद्रस्य तीरे प्राप्तौ नृपात्मजौ ॥ ८१ ॥

न दातव्या कं ज नैवा हंतव्यौ रामलक्ष्मणौ ॥
कामो ममायं तद्रूपं यतध्वं कार्यसिद्धये ॥ ८२ ॥

कुंभकर्णोऽन य भ्रातुः प्रियं तत्सदसि स्वयम् ॥
उवाच प्रथमं धर्मन्यायोपेतं सतां मतं ॥ ८३ ॥

त्वया परस्त्री रा जेंद्र न समीक्ष्य स्वयं हृता ॥
महाननर्थः संप्राप्तः किं मत्रेणाधुना प्रभो ॥ ८४ ॥

गते तोये स म ग्रे किं सेतुना राक्षसेश्वर ॥
सदीप्ते सदने देव कूपस्य खननेन किं ॥ ८५ ॥

प्रियार्थमग्र ज स्याथ सोऽब्रवीद्रामलक्ष्मणौ ॥
हनिष्यामि ससुग्रीवान्भक्षयिष्यामि वानरान् ॥ ८६ ॥

मा चिंतां कुरु य द्राजन् प्रियं तद्व्रज निर्भयः ॥
वानरा वा नरा देवाः के वाऽन्ये ऽपि ममाग्रतः ।८७।

महापार्श्व प्रां ज लिस्तं क्रुद्धं रावणमब्रवीत् ॥
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण ॥ ८८ ॥

आक्रम्याक्रम्य य लेन सुंदरीं राक्षसेश्वर ॥
बलात्कुक्कुटवृत्तेन सीतां भुंक्ष्व रमस्व च ॥ ८९ ॥

कुंभकर्णः प रा नौ मित्रजिच्चमहाबलः ॥
अस्माभिः सहितौ हंतुं समर्थावपि वज्रिणं ॥ ९० ॥

महापार्श्वं त म स्यासं प्रोवाच दशकंधरः ॥
मया पूर्वं बलाद्दुक्ता सुंदरी पुंजिकस्थला ॥ ९१ ॥

१ छन्दविशेष २ अक्षरविशेष

एवं पुनस्त्वं श्री मत्तो बलादन्यां गमिष्यसि ॥
फलिष्यत्येव ते मूर्द्धा मां प्रलेत्यशपद्रुषा ॥ ९२ ॥

शापभीतो य रा रोहां वैदेहीं शयने शुभे ॥
नारोहयेऽहमबलां बलाद्बलवतां वरः ॥ ९३ ॥

आसादयति म त्वं मामज्ञात्वा मत्पराक्रमं ॥
सागरस्येव मे वेगो मारुतस्येव मे गतिः ॥ ९४ ॥

महोल्काभिः कुं ज रेंद्रं यथा राममहं तथा ॥
आजावादीपयिष्यामि ससहायं महेषुभिः ॥ ९५ ॥

इति धर्मन्या य हीनं श्लाघमानं दशाननं ॥
बिभीषणो महाबुद्धिरनुजोऽग्रजमब्रवीत् ॥ ९६ ॥

सीताव्याली प रा नर्थहेतुर्माऽस्यां मनः कुरु ॥
परस्त्रियाऽनया किं ते रामायैषा प्रदीयतां ॥ ९७ ॥

यावन्न लंका य त्युग्राः कीशा दंष्ट्रानखायुधाः ॥
आगतास्तावदेवेयं सीता रामाय दीयतां ॥ ९८ ॥

हरेर्यथा ग ज स्तद्वद्राघवस्याग्रतः क्षमः ॥
स्थातुं न कुंभकर्णोऽय नेंद्रजित्कोऽपि नापरः ॥ ९९ ॥

कदाचित्कोऽपि य मतो विमुक्तो भविता जनः ॥
रामस्य सन्निधिं प्राप्य त्वं तु जीवन्मुच्यसे ॥ १०० ॥

ततः प्रहस्तो ज गाति देवादिभ्यो न नो भयं ॥
इत्यब्रवीद्भृशं मत्तो बिभीषण उवाच तं ॥ १०१ ॥

कर्तुंपराज य स्तस्य रामस्य न मया त्वया ॥
कुंभकर्णेन वा शक्यो राज्ञा वाऽपि च सर्वथा ॥ १०२ ॥

राममुक्ताः श रा घोरा न प्रविष्टास्तनौ तव ॥
तेन प्रहस्त पुरतो रावणस्य विकत्थसे ॥ १०३ ॥

अयं राजा तु म हता व्यसनेनांतहेतुना ॥
अन्वास्यते पराभूतो मवद्भिरहितैर्जडैः ॥ १०४ ॥

---

१ फुटेल २ अनुगम्यते.

रक्ष्यः सुहृद्भिः श्री मांस्तु निगृह्यापि कचग्रहात् ॥
यथा भीमबलैर्भूनैर्गृहीतोहितकारिभिः ॥ १०५ ॥

इंद्रजित प रा नर्थशांतिकामं पितुर्हितं ॥
गर्हयामास दुर्वृत्तः सद्वृत्त सदसि स्फुटं ॥ १०६ ॥

त्वमत्र वंशे म-हिते भीरुरल्पबलो बुधः ॥
भीरो भीषयसे किं नः पिता मे रक्षभुक् प्रभुः ॥ १०७ ॥

जितो नयंत -- न-नक्तो मयावज्रधरो रणे ॥
क्व वयं विश्वजेतारः क्व प्लवंगसखो नरः ॥ १०८ ॥

तमाबभाषे य-सेरेशीलः साधुर्विभीषणः
मंत्रे बालस्त्वमानीतो येन वध्यः स दुर्मतिः ॥१०९॥

इंद्रनिरनं न रा-त्रोऽस्य हितः पुत्रोऽस्यरिर्ध्रुवं ॥
निवारयति न प्राप्तं रामात्नाश सुदुर्मते ॥ ११० ॥

अविवेकी त्व म न्यबस्तीक्ष्णो बध्योऽसिबालिशः ॥
रामलक्ष्मणयोर्बाल वज्रकोट्यधिकाः शराः ॥ १११ ॥

उक्तवंतं नि ज हितं शुद्धभावं विभीषणं ॥
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ ११२ ॥

ज्ञातीनां ज्ञात म तुष्टा भवंति व्यसने सदा ॥
वसेत्सहाहिना नैव ज्ञातिना शत्रुसेविना ॥ ११३ ॥

दले सरसि ज स्थांबुबिंदु. श्रेयं न गच्छति ॥
तथैवदुष्यनार्ये हि सौहृदं सर्वथा जने ॥ ११४ ॥

मम भाग्योद य स्तेन प्रियो ज्ञानिरासी स्फुटं ॥
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयं ॥ ११५ ॥

एवं वक्ता पे र गुः स मुहूर्तेऽस्मिन् भवेत्परः ॥
स्तात स्वत्कमर्याद त्वां तु धिक् कुलपांसन ॥ ११६ ॥

एवमुक्तः स म नियान् परुषं वाक्यमुग्रकैः ॥
न्यायवादी गदापाणिरुत्पपातासनाद्द्रुत ॥ ११७ ॥

---

१ कुबेराचा लहीक २ मृत.

सार्धं चतुर्भिः श्री मान्त्रैः सचिवैर्नभसि स्थितः
- अब्रवीद्रावणं क्रुद्धः सभायामवमानितः ॥ ११८ ॥

यथेष्टं ब्रूहि रा जन्मा ज्येष्ठः पितृसमोऽसि मे ॥
परुष न क्षमेऽहं ते न त्वं धर्मपथे स्थितः ॥११९

हितकामेन म हितं वाक्यमुक्तं दशानन ॥
न गृह्णन्त्यकृतात्मानः कालस्यवशमागताः ॥ १२०

सुलभास्ते म जं सं ये पुरुषाःप्रियवादिनः ॥
अप्रियस्य च पथ्यस्य वक्ता श्रोताच दुर्लभः ॥१२१॥

तन्मर्षयतु य प्रोक्तं गुरुत्वाद्धितमिच्छता ॥
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसां ॥ १२२ ॥

स्वस्ति तेऽस्तु सु रा राते सुखी भव मया विना ॥
त्वामापृच्छ्य गमिष्यामि धर्मन्यायी मतो मम ॥१२३॥

तमेवमुक्त्वा म तिमान् यत्र रामः सलक्ष्मणः ॥
तं देशमागतो व्योम्नि चतुर्भिः सचिवैः सह ॥१२४॥

दृष्ट्वा तं व्योम्नि अ गतीधराभं रावणानुजं ॥
सुग्रीवस्याज्ञया हंतुमुन्मेतुः कपयो रुषा ॥ १२५ ॥

स महात्मा वि य दृर्ती सुग्रीवं तांश्च वानरान् ॥
उवाच राक्षसपतेरनुजोऽहं विभीषणः ॥

जनस्थानाद्रा द कन्या जानकी मायया हृता ॥
दशकंठेन सा रुद्धा शुद्धाचारा प्रभुप्रिया ॥ १२७ ॥

॥ मया राम य ज्ञेन प्रार्थितस्ताद्धितार्थिना ॥
साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥१२८॥

हितं वचो न रा ज्ञा मे गृहीतं,परुषं बहु ॥
–प्रोक्त, ततस्तं त्यक्त्वाऽहं रामं शरणमागतः ॥१२९ ॥

शरण्याय स म र्थाय राघवाय महात्मने ॥
निवेदयत मां क्षिप्रं विभीषणमुपस्थितं ॥ १३० ॥

---

१ भरत कर

स्वयं कपींद्रः श्री राममुवाच रघुनंदन ॥
रावणस्यानुजः साक्षादागतोऽत्र विभीषणः ॥ १३१ ॥

निवेदयत रा माय क्षिप्रं मां शरणागतं ॥
इति वक्ति महाराज चतुर्भिः सचिवैः सह ॥ १३२ ॥

अहं तु वध्यं म न्ये तं शत्रुपक्षे न विश्वसेत् ॥
पप्रच्छ रामः सर्वांस्तान्क्रथं कार्यमिति प्रभुः ॥१३३॥

तव तारान्म ञ स्तद्वदृषभो जांबवानपि ॥
अन्ये च शंक्य इत्याहुः परीक्ष्यश्च विशेषतः ॥१३४॥

अंजनातन य स्ततश्चः प्रोवाच प्रांजलिस्तदा ॥
दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ॥१३५॥

शरणं त्वां ध रा धीश शरण्य भक्तवत्सलं ॥
विभिषणोऽयं संप्राप्त इति मन्ये रघूत्तम ॥ १३६ ॥

न लक्ष्यतेऽस्य म तिमन् ब्रुवतो दुष्टभावता ॥
प्रसन्नं वदनं चापितस्मान्मे नास्ति संशयः ॥ १३७ ॥

निःशंकोऽयं रा ज वर्य न शठः परिसर्पति ॥
न चास्य दुष्टावागस्ति तस्मान्मे नास्ति संशयः॥ १३८॥

उद्योग ते न य स्य दृष्ट्वा दुष्टं च रावणं ॥
वालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितं ॥ १३९ ॥

राज्यकामवि ञ गतो नायायं रावणानुजः ॥
बुद्धिपूर्वमिह प्राप्तः कार्यस्ते तस्य संग्रहः. ॥ १४० ॥

यथाशक्त्यास य स्तस्य ह्यालोकोऽयं मया प्रभो ॥
प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर ॥१४१॥

प्रसन्नात्माऽथ रा जेंद्रस्तच्छ्रुत्वा मारुतेर्वचः ॥
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितं ॥ १४२ ॥

रिवधिनं म म श्राव्यं भवाद्भिः श्रेयसि स्थितैः ॥
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ॥ १४३ ॥

मामागतो यः श्री मान् स सकार्यो बंधुरन्यथा ॥
दोषो यद्यपि तस्य स्यात्सतामेनदगर्हितं

सुग्रीवः पुन रा हार्य व्यसनं प्राप्तमग्रजं ॥
यस्त्यक्तवान् कृतघ्नोऽयं कमन्य न परित्यजेत् ॥१४५॥

तमुवाचासौ म हात्मा प्रभुः कारुण्यसागरः ॥
व्यसनेषु प्रहर्तारो ज्ञातयोऽन्ये च शत्रवः ॥ १४६ ॥

सुप्रसिद्धं रा न वृत्तमिदं लक्ष्मण लौकिकं ॥
पापाद्राज्ञो भयंप्राप्तस्तस्मादयमिहागतः ॥ १४७ ॥

मम त्वस्माद्भ य प्राप्तिर्नास्ति जानीहि साध्वसं ॥
राज्यकामः स्वोपजीव्यविरोधं न करिष्यति ॥१४८॥

सैन्येव चतु रा लोके सर्वत्र प्लवगेश्वर ॥
तस्माद्विभीषणो ग्राह्यः प्राप्तो भ्रातुर्महद्भयं ॥ १४९ ॥

न भ्रातरः म म स्यास्तु भवंति भरतोपमाः ॥
पुत्रा वा मद्विधास्तात सुहृदो वा भवद्विधाः ॥१५०॥

सलक्ष्मणः प्रां ज लिस्तु सुग्रीवः पुनरब्रवीत् ॥
प्रहर्तुं त्वयि विश्वस्ते मयि वा लक्ष्मणेऽपि वा ॥१५१॥

दशाननेना य मिह प्रभो संदिष्ट आगतः ॥ – –
जिह्मधी राक्षसो वध्यः सचिवैः सह सर्वथा ॥१५२॥

तमुवाचार्त ज नत्राणोपदो रघुनंदनः ॥
दुष्टोऽदुष्टोपिवास्त्वेष न मे कर्तुं क्षमोऽहितं ॥१५३॥

पिशाचासुर य क्षा ये पृथिव्यां ये च राक्षसाः ॥
अंगुल्यग्रेण तान् हन्यामिच्छन्हरिगणेश्वर ॥ १५४ ॥

श्रूयते हि पु रा व्याधः शत्रुः शरणमागतः ॥
कपोतेनार्चितस्तात स्वैश्च मांसैर्निमंत्रितः ॥ १५५ ॥

कंडुगीताः सु म हिता गाथाः शृणु कपीश्वर ॥
इत्युक्त्वा ताः स्वयं रामो जगौ सर्वसतां मताः ॥१५६॥

---

१ यजमान. २ वर्बुद्धि..

प्राणैः सहैव श्री स्त्याज्या रक्षता सुकृतं यशः ॥
न प्रांजलिः शत्रुरपि त्रस्तः शरणमागतः ॥ १५७ ॥

महती हि प र भूतिस्त्यजतः शरणागतं ॥
तस्मादहं करिष्यामि केडोर्वचनमुत्तमं ॥ १५८ ॥

रघोर्वंशेऽत्र म हाति प्रभवो महतोऽ भवन् ॥
ते सर्वे हि महात्मानः शरणागतपालकाः ॥ १५९ ॥

जगत्तु विश्व ज सुतः ख्यातो दशरथः प्रभुः ॥
तत्पुत्रोऽहं कथं त्यक्तुं शक्नुयां शरणागतं ॥ १६० ॥

सकृत्प्रपन्ना य तवेति तवास्मीति च याचते ॥
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ १६१ ॥

आनयैनं त्व रा वान्सन् दत्तमस्मै मयाऽभयं ॥
बिभीषणो वा सुग्रीव यदि वा रावणोऽस्त्वयं ॥१६२॥

श्रुत्वा प्लवंग म पतिः श्रीरामं जगतां पतिं ॥
समानयत्स गगनात्समाहूय बिभीषणं ॥ १६३ ॥

जहारार्धपद्ग ज स्मादहल्याया महेद्रजः ॥
निपपात तयोर्मूर्ध्नि पादयोः स बिभीषणः ॥ १६४ ॥

उवाच राद—य—श्रेष्ठ रावणेनावमानितः ॥
तस्यानुजोऽहं त्वामाद्यशरण्यं शरणागतः ॥ १६५ ॥

त्यक्ता लंका रा ज धानी मित्राणि च धनानि च ॥
भवद्गतं हि मे राज्यं जीवितं च सुखानि च ॥१६६॥

राघवो विन—य—ज्ञं तं सांत्वयित्वाऽब्रवीत्स्वयं ॥
आख्याहि मम तत्वेन राक्षसानां बलाबलं ॥ १६७ ॥

सोऽब्रवीदिति रा जेंद्र वरदानात्स्वयंभुवः ॥
अवध्यः सर्वभूतानां रावणो लोकरावणः ॥ १६८ ॥

कुंभकर्णो म म ज्येष्ठः शक्रप्रतिस्पर्धी युधि ॥
मणिभद्रस्य जेताऽ स्य प्रहस्तो वाहिनीपतिः ॥१६९॥

---

महादेव. २ कुबेर.

ज्येष्ठः सुतोऽस्य श्री मान्स मेघनादाभिधः प्रभो ॥
जातो नामेंद्रजिज्जित्वा युधींद्रं सुमहाबलः ॥१७०॥

तथा महोद रा ख्यश्च महापार्श्वोप्यकंपनः ॥
तस्योपसेनापतयो लोकपालसमा युधि ॥ १७१ ॥

सर्ववीरोत्त म स्वामिन् लंकायां कामरूपिणां ॥
दशकोटिसहस्राणि रक्षसां संति मुख्यशः ॥१७२।

ये लोकपाला न म्यै[१] ते भग्नाः सर्वे सुरैःसह ॥
बिभीषणवचः श्रुत्वा स्वयं रघुवरोऽब्रवीत् ॥१७३।

हत्वा रक्षोना थ कं तं सप्रहस्तानुजात्मजं ॥
राजानं त्वां करिष्यामि सत्यं प्रतिश्रृणोमि ते ॥१७४

अथाब्रवीत्त रा जेंद्र राक्षसानां वधे पुरः ॥
प्रधर्षणेऽह साहाय्यं करिष्यामि यथाबलं ॥१७५।

इति ब्रुवाणं म धुरं परिष्वज्य बिभीषणं ॥
रामः प्रीतोऽनुजं प्राह समुद्राज्जलमानय ॥१७६।

तेन त्वमाशु स्न लधैर्जलैर्नेमं बिभीषणं ॥
अभिषिंचाद्य राजानं रक्षसां वीरमानद ॥१७७॥

एवमुक्तः प ध तधीरभ्यषिंचद्बिभीषणं ॥
मध्ये वानरमुख्यानां राजानं राजशासनात् ॥१७८।

सद्यः प्रसादं ज गतां भर्तुर्दृष्ट्वा प्लवंगमाः ॥
प्रचुक्रुशुर्महात्मानं साधुसाध्विति चाब्रुवन् ॥१७९।

अथाब्रवीत्तो——य—राशिं तराम कथमित्युमुं ॥
बिभीषण वायुसूनुः सुग्रीवश्च महामतिं ॥ १८० ॥

प्रत्युवाच स रा जायं राघवस्तेजसां निधिः ॥
सागरं पूर्वजकृतं शरणं गंतुमर्हति ॥ १८१ ॥

सगरेणायं य द्धिर्हि खानितः सागरस्ततः ॥
कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः ॥१८२॥

---

१ युद्ध २ नगरीच्या ३ हत्वा.

बिभीषणोक्त श्री भर्तुः सागरस्योपवेशनं ॥
प्रकृत्या धर्मशीलस्य तद्रामस्याप्यरोचत ॥ १८३ ॥

कुशास्तीर्णेऽनु रा शेः स श्रीरामो विमले तटे ॥
संविवेश तदा साक्षाद्वेद्यामिव हुताशनः ॥ १८४ ॥

ततो निविष्टां म हतीं ध्वजिनीं पतिपालितां ॥
अभ्येत्य दृष्ट्वा शार्दूलः प्रतिगम्य दशाननं ॥ १८५ ॥

कथयामास ज लधेः प्रतीरे रामलक्ष्मणौ ॥
सीतायाः पदमायातौ ससैन्यं सागरोपमं ॥ १८६ ॥

दानं वा साम य त्नेन भेदोवाऽत्र प्रयुज्यतां ॥
वने निविष्ट ख व्याप्य सर्वतो दशयोजनं ॥ १८७ ॥

शुकं नाम त्व रा युक्तं ततः सदिश्य राक्षसं ॥
प्राहिणोत्सामभेदार्थं सुग्रीवप्रति रावणः ॥ १८८ ॥

शुको विहग म तनुर्व्योम्नि स्थित्वा कपीश्वरं ॥
उवाच त्वं मम भ्राता महाराजकुलोद्भवः ॥ १८९ ॥

रामस्य भार्यां ज यतोवैरोऽहमहरं यदि ॥
किं तत्र तव सुग्रीव किष्किंधां प्रति गम्यतां ॥१९०॥

व्रजतो मां प्रि य सख नास्त्यर्थस्तेत्र कश्चन ॥
अनर्थः प्रत्युत प्राप्तुं लंकाऽशक्या नृवानरैः ॥१९१॥

तं समुत्प्लुत्य ज गृहुर्वानराः पीडितः शुकः ॥
उवाच दूतान्न प्राति राम तत्साधु वार्यतां ॥१९२॥

दूतः प्राणात्य य मयं नार्हतीति प्रभोर्वचः ॥
श्रुत्वा तं मुमुचुः कीशाः श्रीशाज्ञावशवर्तिनः ॥१९३॥

गगनस्थ स रा जानं शुकः सुग्रीवमब्रवीत् ॥
किं मया रुघु वक्तव्यो रावणो लोकरावणः ॥१९४॥

वानरेंद्रस्त म वदन्नानुकंप्योऽसि मे सखा ॥
रामस्यारिस्त्वमस्माकं वध्यो वालीव वालिश ॥१९५॥

---

१ सेना. २ विजयीभव.

भ्राता न स त्वां श्री कठो रामात्पाप न मुच्यसे ॥
एतत्प्रत्युत्तर दत्तं निवेदय दशानन ॥ १९६ ॥

तदांगदस्तं रा जानमब्रवीदेष राक्षस ॥
दूतश्चारोऽपि तुलित सर्वसैन्यमनेन नः ॥ १९७ ॥

रुकां रक्षोध म स्यास्य गमन मे न रोचते ॥
गृह्यतां पुनरत्राय बध्यतां वानरेश्वर ॥ १९८ ॥

राजाज्ञया त म गृहुर्विलपतमनाथवत् ॥
तत्प्रार्थितोऽब्रवीद्रामो मुच्यतां दूत आगतः ॥१९९॥

कुशेषु रामो य तवाक् प्रतिशिश्ये पयोनिधेः ॥
बरमिच्छन्निशास्तिस्र उपाधाय भुजं प्रभुः ॥ २००॥

न ददौ वारि रा शि स यदा दर्शनमुद्धतः ॥
प्रभुर्मुमोच विशिखान् विविशुस्तेऽर्णवेनले ॥२०१॥

व्याकुलोऽभूत्स म हता तेजसा सागरः प्रभो ॥
मामेत्युक्त्वा समुत्पन्न सौमित्रिर्भूतबान्धनु ॥ २०२ ॥

उवाच रामो ज लधे शोषितस्येपुतेजसा ॥
पर तीर गमिष्यति पद्भिरेव प्लवंगमाः ॥ २०३ ॥

इत्युक्त्वा मल्ल य मेघप्रभ. प्रभुवर. पुनः ॥
ब्रह्मणोऽस्त्रेण संयोज्य शर धनुषि संदधे ॥ २०४ ॥

चापे विकृष्टे ज लधि क्षुभितः प्रलये यथा ॥
पर्वतप्रतिमोर्म्योर्मिर्व्यतिचक्राम योजन ॥ २०५ ॥

सर्वे प्राप्तभ य स्तेन ब्रह्मास्त्रेणाभवद्भुवि ॥
सकपा गिरय कृत्स्ना निष्प्रभोऽभूद्दिवाकर ॥२०६॥

सिंधुमध्याद्र रा कारो नानारत्नैर्विभूषित ॥
उदयाद्रेरिव रवि. सागर स्वयमुत्थित. ॥ २०७ ॥

स उपागम्य म धुरमुवाचामन्त्र्य राघव ॥
स्वभावे तात तिष्ठति भूतान्यहमपि प्रभो ॥ २०८ ॥

---

१ उर्से करून २ सूर्य

राजेंद्र राम श्री मंस्त्वं कुरु सेतुं मयि प्रभो ॥
ग्राहा न प्रहरिष्यंति जलस्तंभो न मे मतः ॥२०९॥

मत्स्वभावो न रा घोश यदगाधोऽहमप्लवः ॥
गाभलं तु विकारो मे क्षमस्व कुरु मद्वचः ॥२१०॥

तमब्रवीद्रा म भद्रः शृणु मे वरुणालय ॥
अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यतां ॥२११॥

प्रभुं प्रोवाच ज लधिः पापैर्दस्युभिराकुलः ॥
द्रुमकुल्याभिधो देशः शरोऽयं तत्र पात्यतां ॥२१२॥

तस्मिन्स्थाने सा य कं तं मुमोच रघुपुंगवः ॥
तत्र व्रणोऽभवत्तोयमुत्पपात रसातलात् ॥ २१३ ॥

व्रणः कूपः श रा ज्जातो विश्रुतः सोऽक्षयोदकः ॥
तत्स्थलं मरुकांतारमिति नाम्नाऽभवद्भुवि ॥ २१४ ॥

ददौ वरांश्च श्री रवे सुक्षीरोविविधौषधिः ॥
मशल्यश्चाल्परोगश्च सदेशः स्नेहवानभूत् ॥ २१५ ॥

उवाच रामं ज लधिर्विश्वकर्मसुतो नलः ॥
करोतु मय्ययं सेतुं धारयिष्याम्यहं प्रभो ॥ २१६ ॥

एवमुक्त्वा तो य राशिस्तदैवांतर्हितोऽभवत् ॥
नगैरगैर्नलः सेतुं चकार शतयोजनं ॥ २१७ ॥

काष्ठैः कीशैः कुं ज राभैस्तदान्हा प्रथमेन सः ॥
रचितः सागरे सेतुर्योजनानि चतुर्दश ॥ २१८ ॥

प्लवंगमैरा य तः [illegible] द्वितीयाह्नेन सत्वरैः ॥
कृतः पयोनिधौ सेतुर्योजनानि तु विंशतिः ॥ २१९ ॥

तृतीयेन त्व रा बद्धिर्बद्धोऽन्हा सेतुरंबुधौ ॥
योजनानि महाकायैरेकविंशतिरेव सः ॥ २२० ॥

चतुर्थेनाथ म हता तैरुत्साहेन वारिधौ ॥
द्वाविंशतिर्योजनानि निर्मितः सेतुरद्भुतः ॥ २२१ ॥

---

१ मरुदेश ( मारवाड. )

प्रतापतोथ श्री जानेस्तस्यान्हा पंचमेन तैः ॥
स त्रयोविंशतिः सेतुर्योजनानि विनिर्मितः ॥ २२२ ॥

कोशैर्धराध रा कारैः कृतः सेतुर्धराधरैः ॥
दशयोजनविस्तीर्णः शतयोजनमायतः ॥ २२३ ॥

नलसेतुं त म मराः सिद्धगंधर्वदानवाः ॥
सीमंतमिव पाथोधौ ददृशुस्तेऽतिविस्मिताः ॥ २२४ ॥

प्लवंगसेना स लंघि सा तेन नलसेतुना ॥
तीर्णा त्रिभिरहोरात्रैः पुरःसरविभीषणा ॥ २२५ ॥

मरुतस्तन पूस्कंधं राम आरुह्य सागरं ॥
सौमित्रिरंगदस्कंधं तीर्णः सेनापुरःसरः ॥ २२६ ॥

महर्षिभिः सु रा स्तत्र पुण्यैर्मंदाकिनीजलैः ॥
समभ्यषिंचन् द्विषतस्त्वं जयेत्यब्रुवन् प्रभुं ॥ २२७ ॥

उत्तीर्य सिंधु म प तां लंकां पर्वतमूर्धनि ॥
दृष्ट्वा प्रभूक्तः सुग्रीवो मोचयामास तं शुकं ॥२२८॥

दशाननं हि त तनुः शुकः क्षिप्रमुपागमत् ॥
हसन्नुवाच तं राजा लूनपक्षः कुतो भवान् ॥ २२९ ॥

स शुकस्तत्र प प्राप्तं बंधनं तर्जनं स्वयं ॥
वाचिकं चात्रनीद्रामागमनं सेतुबंधनं ॥ २३० ॥

ऋक्षवानर त न्मानो महात्मानो महाबलाः ॥
दुर्जयाः समरे राजन्नसंख्याताः समागताः ॥ २३१ ॥

सीता वाऽस्मै प्र प च्छाशु युद्धं वा राक्षसेश्वर ॥
पुरीप्राकारमायांति क्षिप्रमेकतरं कुरु ॥ २३२ ॥

रावणस्तादृ रा क्रुद्धस्तमुवाच सुरासुराः ॥
यदि मां प्रति युध्येरन्न प्रदास्यामि मैथिलीं ॥ २३३॥

स राघवो म म बलं नाज्ञासीदेव निस्तुलं ॥
कपिसैन्यैः सहागम्य तेन मां योद्धुमिच्छति ॥ २३४ ॥

---

१ निरोध. २ तट.

रक्षावमात्यौ श्री मान्स प्राहिणोच्छुकसारणौ ॥
हरिरूपधरौ वीरौ प्रविष्टौ कपिवाहिनीं ॥ २३५ ॥

बल तद्दान रा णां तावचिंत्यं लोमहर्षणं ॥
नाशक्नुवातां संख्यातुममात्यौ शुकसारणौ ॥ २३६ ॥

तौ गृहीत्वा स म तिमान्प्रतिच्छन्नावपि स्वयं ॥
आचचक्षे राघवाय दर्शयित्वा विभीषणः ॥ २३७ ॥

तौ दृष्ट्वा तं रा क सिंहमूचतू रावणाज्ञया ॥
आवां बलं परिज्ञातुमागताविति कातरौ ॥२३८ ॥

प्रहसन्सद य स्वांतस्तावुवाच रघूत्तमः ॥
कृतं कार्यं यथोक्तं चेच्छंदतः परिगम्यतां ॥ २३९ ॥

न दृष्टं चेद्व रा मेतत्सुग्रीवस्य महद्बलं ॥
विभीषणो वां कार्त्स्न्येन पुनः संदर्शयिष्यति ॥ २४०॥

ग्रहणं प्राप्य म सो मा भेतव्यं खलु राक्षसौ ॥
विभीषण सखे मुंच चारौ वध्यौ न सर्वथा ॥ २४१ ॥

विशेषस्यानु ज स्तत्र वक्तव्यो वचनं मम ॥
यद्बलं त्वं समाश्रित्य सीतां मे हृतवानसि ॥ २४२ ॥

शरणे दर्श य स्व त्वं सप्राकारां सतोरणां[1]॥
लंकां चमूं च पश्यारे शरैर्विध्वंसितां मया ॥ २४३ ॥

इति श्रुत्वा तं ज येति प्रोक्त्वा लंकां ततो गतौ ॥
तौ दशाननमब्रूतामनुभूतं यदात्मना ॥ २४४ ॥

कौसल्यातन य स्तस्य तत्तुल्यो लक्ष्मणोऽनुजः ॥
विभीषणश्च मतिमान्सुग्रीवश्चेंद्रविक्रमः ॥ २४५ ॥

चत्वारस्ते प रा क्रांताः सप्राकारामिमां पुरीं ॥
उत्पाट्य सकामयितुं सर्वे तिष्ठंतु वानराः ॥ २४६ ॥

लंकामेकः ॥ म र्थोऽस्ति जेतुं तिष्ठतु ते त्रयः ॥
राजन्मलं विरोधेन सीता रामाय दीयताम् ॥ २४७ ॥

---

१ रोमांच उत्पन्न करणारें.

उवाच राजा श्री मांस्तं सारणं जानकीमह ॥
न प्रदास्यामि रामाय त्व त्रस्तस्तद्महाद्भुत ॥२४८॥

को हि नाम प रा क्रम्य रणे मां जेतुमर्हति ॥
स इत्युक्त्वारुरोहोच्च प्रासादं तद्दिदृक्षया ॥२४९॥

दृष्ट्वा प्लवग म बलं सर्वत्रार्णवसन्निभ ॥
प्रपच्छ सारण तेषां नामसंख्यादि रावणः ॥२५०॥

एष नीलो ॥ स श्चैष सेतुहेतुर्नलस्तथा ॥
एषोऽङ्गदो वालिपुत्रो जाम्बवानृक्षराडय ॥ २५१ ॥

तन्नामरूपं य तेजः सैन्य चापि प्रधानतः ॥
सारणः कथयामास तौच श्रीरामलक्ष्मणौ ॥२५२॥

सैन्यसंख्या गि रा मोच्या सुग्रीवसचिवा हि ये ॥
एषां कोटिसहस्राणि नव पञ्च च सप्त च ॥२५३॥

प्रसंख्यातास्तेऽ म राणां तेजोगुणसमन्विता. ॥
तथा शङ्कुसहस्राणि तथा वृन्दशतानिच ॥२५४॥

शुकोत्कर्षं रा ज राजभ्राता रामस्य वर्णित ॥
भर्त्सयामास तौ वीरौ कथिते शुकसारणौ ॥२५५॥

हन्यौ भवंतौ य न्मूढौ शत्रुपक्षप्रशंसिनौ ॥
यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत् ॥२५६॥

गतावमात्यौ स नितरां तावथ रावण ॥
शार्दूलं प्रेषयामास चरैरन्यैश्चरैः सह ॥ २५७ ॥

प्रविश्य सैन्यं य स्तेन स पश्यन् मायया वृतः ॥
बिभीषणेन शार्दूलो ग्राहित. पापधीरिति ॥२५८॥

मोक्षितः सोऽपि रा मेण वध्यमानः प्लवगमैः ॥
अन्येऽपि राक्षसाः कीशैर्निगृहीता दयालुना ।२५९।

स शार्दूल. स म यनं वालिभिर्वानरैः कृतं ॥
[1]दृष्टो राक्षसराजेन कथयामास सांजलिः ॥२६०॥

---

[1] 'दृष्ट्वा' इति वा पाठः.

यथा समर्थः श्री रामस्तथा राजन् विभीषण. ॥
तेन सैन्ये प्रविष्टोऽहं गृहीतस्ताडितः परैः ॥ २६१॥

परिणीतोस्मि रा जंस्तैर्बलमध्येऽसमर्षणैः ॥
यथा हनूमान् लंकायां बध्वाऽस्माभिः पुरा प्रभो॥२६२॥

परिणीय च म न्युग्रैरंक्तार्द्रोऽहं प्लवंगमैः ॥
रामसत्सादे नीतोऽस्मि कृपया तेन मोचितः ॥२६३॥

कपिसैन्ये भ्र म न् वध्यश्चरस्तेषामसंशयं ॥
आयुःशेषात्प्रसादाच्चप्रभोजीवन्निहागतः ॥ २६४ ॥

इत्युक्त्वा स भ य व्यग्रः शार्दूलः सुरशत्रुणा ॥
पुनः पृष्टोऽब्रवीन्मुख्यान् सुग्रीवादीन्सुरांशजान् २६५॥

विद्युज्जिह्व सु रा रातिर्महामायमथाब्रवीत् ॥
शिरो रामस्य सशरं धनुश्च कुरु माचिरं ॥ २६६ ॥

चक्रे तथैव म नस्तः सीताया मोहकृत्स तत् ॥
दृष्ट्वा दशाननस्तस्मै भूषण स्वं ददौ मुदा ॥ २६७ ॥

ततः श्रीदानु ज स्तन्वीमशोकवनिकागतां ॥
सीतां ददर्श दुष्टात्मा तामुवाच पतिव्रतां ॥ २६८ ॥

मानवधाश्रित्य य स्य त्वं वीर्यं मामवमन्यसे ॥
स हतो राक्षसैरात्रौ सुप्तोऽभ्युत्तररोधसि ॥ २६९ ॥

छिन्नं मूल ते ज डेऽद्य त्वदर्पो निहतो मया ॥
भव मैथिलि भार्या मे किं मृतेन करिष्यसि ॥२७०॥

विभीषणो नि य मितो हतौ सुग्रीवमारुती ॥
दिशं प्रव्राजितः शेषैर्लक्ष्मणः प्लवगैः सह ॥ २७१ ॥

प्रहस्तेन प रा भूतो हतो भर्ता तवाबले ॥
क्षतजार्द्ररजोध्वस्तमिदं तस्याहृतं शिरः ॥ २७२ ॥

शृण्वत्यां पर म क्रूरां वार्तां तस्यां दशाननः ॥
उवाच राक्षसीं येन रामस्य शिर आहृतं ॥ २७३ ॥

---

१ अतिहृष्टे..

तमानयाशु श्री हीनं पत्युः पश्यन्विय शिरः ॥
इति श्रुत्वा तयाद्धूतो विद्युज्जिह्वो निशाचरः ॥२७४॥

तच्छिरो धनु रा दाय मायावी विनयान्वितः ॥
प्रणाम शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥२७५॥

तमुवाच स म र्त्याशो विद्युज्जिह्वं सकार्मुकं ॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ॥२७६॥

धनुः शिरोद्वु द्ध युतं सीतायाः पुरतस्तदा ॥
निक्षिप्यादर्शनमगात्स मायावी क्षपाचरः ॥ २७७ ॥

सीता दृष्ट्वा प्रिय स्यैव मत्वा तत्कार्मुकं शिरः ॥
विजगर्हेऽथ कैकेयीं क्रोशती कुररी यथा ॥ २७८ ॥

बाला गता ध रा मार्ता सा छिन्ना कदली यथा ॥
तच्छिरः समुपादाय विललापायतेक्षणा ॥ २७९ ॥

हा हतास्म्यद्य म न्नाथ पितृवाक्यपालनव्रत ॥
त्वमाशातपश्चिमावस्थां गतास्मि विधवा कृता ॥२८०॥

विलप्य देवी ज गतीसंभवा बहुशस्तदा ॥
उवाच रावणं दीना भर्तृकामा पतिव्रता ॥ २८१ ॥

साधु मां घात य क्षिप्रं रामस्योपरि रावण ॥
समानय पतिं पत्न्या कुरु कल्याणमुत्तमं ॥ २८२ ॥

विलपंत्यां रा व पुष्पामागत्य रजनीचरः ॥
उवाच राक्षस त्वाशु महस्तो द्रष्टुमिच्छति ॥ २८३ ॥

एतच्छ्रुत्वा स य क्षेशधाता क्षिप्रं विनिर्गतः ॥
जगामादर्शनं शीर्षं तच्चकार्मुकमुत्तमं ॥ २८४ ॥

राक्षसानां स रा जा तु मंत्रिभिः सह निश्चयं ॥
युद्धस्य कृत्वा सबलं सिद्धं चक्रे महाबलः ॥ २८५ ॥

सीतां मोहनि-म-ग्नां तां सरमा नाम राक्षसी ॥
आश्वासयामास सतीं विभीषणमन प्रिया ॥ २८६ ॥

बिभीहि मार्ये श्री मांस्ते कुशली सानुजः पतिः ॥
रावणेन कृता मायामाऽयासं शोकतो व्रज ॥१८७॥

हिंपुमुखीर्य रा मस्ते सखि रघुवरमागतः ॥
उपस्थितं त्वां कल्याणं शीघ्रं पत्या रमिष्यसि ॥१८८॥

दशकंठस्य म रणं माता नास्त्यत्र संशयः ॥
मोक्ष्यते प्रथितां रामो वेणामेणीदृशास्तव ॥ १८९ ॥

त्वमाहां कुरु त न्वाहं कृतार्थं कर्तुमामनः ॥
आगमिष्यामि रामे ते निवेद्य कुशलं वचः ॥ १९० ॥

सीतोवाचाऽऽशा य स्तस्य रावणस्य दुरात्मनः ॥
त्वया निवेदनीयो मे वर एष वृतः सखि ॥ १९१ ॥

सत्वरा सत्व रा शिः सा सरमा परमादृता ॥
तथेत्युक्त्वा द्रुतं गुप्ता ययौ यत्र दशाननः ॥ १९२ ॥

बिभीषणस्य म हिषी बुध्वा दशमुखाशयं ॥
आगत्य पार्श्वे जानक्या प्रीत्या दत्तासनाऽब्रवीत् १९३

शृणु सीतेऽस्य न ननी तथा मातामहश्च यः ॥
ताभ्यां बोधः कृतो यत्नात्त्वन्मोक्षार्थं पुनः पुनः ॥१९४॥

बोधितोऽप्यन य स्तोऽयं राजः सखि दारुणः ॥
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ १९५ ॥

अमृतस्वी रा म पुत्रि क्रूरो मोक्तु दशाननः ॥
जातु नोत्सहते स्पष्टो निश्चयोऽस्य समंत्रिणः ॥१९६॥

एन पापाश य मरिं हत्वा रामः सलक्ष्मणः ॥
सीतेऽयो यां प्रति क्षिप्रं त्वां नेष्यत्यसितेक्षणे ॥१९७॥

अत्रकाले छु रा रातैर्भेरीशङ्खरवाकुलः ॥
शब्दोऽभूत्कपिसैन्यानां कंपयन् धरणीं मुहुः ॥१९८॥

माल्य वाक्राम य तिमान् राज्ञो मातामहः स्वयं ॥
धर्मन्यायविदां मुख्यो बोधयामास रावणं ॥ १९९ ॥

न नाशनीया श्री रेषा त्वयाऽधर्मेण रावण ॥
रामाय दातुं योग्येयं सीता प्राप्तं यतो भयं ॥३००॥

उवाच रक्षो—ग-जस्त वनादानीय सुंदरीं ॥
किमर्थं प्रतिदास्यामि मनुष्यस्य भयादहं ॥ ३०१ ॥

द्विधा भज्येय म प्येव न नमेयं तु कस्यचित् ॥
एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥३०२॥

कृपणो मनु ज स्तं तु रणे शाखामृगाश्रयं ॥
वधिष्यामि प्रतिज्ञेयं सत्या विश्वजितो मम ॥३०३॥

व्रीडितः स्वान्त य मगात्क्रुद्धे रक्षसि माल्यवान् ॥
लंकायास्तु तदा गुप्तिं कारयामास रावणः ॥३०४॥

पूर्वद्वारे प रा सद्यं प्रहस्तं वाहिनीपतिं ॥
लंकाया दक्षिणद्वारे महापार्श्वमहोदरौ ॥३०५॥

ज्येष्ठ च पश्चि म द्वारे स्थापयामास नंदनं ॥
व्यादिदेशोत्तरद्वारे रावणः शुकसारणौ ॥ ३०६ ॥

राजराजानु ज स्तस्मिन्स्वय च कृतनिश्चयः ॥
कथयामास लंकाया गुप्तिं ज्ञात्वा विभीषणः ॥३०७॥

अमात्यास्तस्य य तेन लंकां गत्वा विरूपिणः ॥
पनसानलसंपातिप्रभृत्याख्याः समागताः ॥ ३०८ ॥

तैः सविधानं ज्ञ वनैर्लंकाया यन्निवेदितं ॥
त सर्वं विनिवेद्याय कुंभकर्णानुजोऽब्रवीत् ॥३०९॥

अयुते द्वे ह य स्थानां गजारोहास्तथाऽयुतं ॥
अयुतं च रथारूढा साग्रा कोटिश्च रक्षसां ॥३१०॥

एकैकस्यात्र रा जेंद्र युद्धार्थं रक्षसः प्रभो ॥
परीवारः सहस्राणां सहस्रमुपतिष्ठति ॥३११॥

कर्तव्यो नात्र म न्युस्त्वां कोपयेऽहं न भीषये ॥
समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ॥ ३१२॥

ततोऽब्रवीत्स श्री रामो नीलो वानरपुंगवः ॥
प्रहस्तं प्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥३१३॥

अंगदः कापि रा जस्य पुत्र एष महाबलः ॥
दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ ३१४ ॥

हनूमान्पश्चि म द्वारे निष्पीड्यैष्वजितं स्वयं ॥
प्रविशत्वप्रमेयात्मा कपिभिर्बहुभिर्वृतः ॥ ३१५॥

यः सदाऽऽशावि ज यकृत् प्रजापीडक उद्धतः ॥
तस्याहं राक्षसेंद्रस्य स्वयमेव वधे धृतः ॥ ३१६ ॥

वानरेंद्रः स्व य मयं जांबवांश्च महायशाः ॥
राक्षसेंद्रानुजश्चैष गुल्मे भवति मध्यमे ॥३१७॥

वयं सदा न रा काराः सप्त योत्स्यामहे परान् ॥
न कार्यं मानुषं रूपमृक्षैः कपिभिराहवे ॥ ३१८ ॥

एवमुक्त्वा स म तिमान्ससुग्रीवविभीषणः ॥
आरुरोह सुवेलाद्रिं लक्ष्मणेन सह प्रभुः ॥३१९॥

ते सुवेलस्य ज गतीधरस्य शिखरे स्थिताः ॥
ददृशुर्यूथपा व्योम्नि रचितामिव तां पुरीं ॥३२०॥

प्राकारवल य स्थैस्तैर्नीलवर्णैर्निशाचरैः ॥
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतं ॥३२१॥

तां दृष्ट्वा ते वि ज यिनो राक्षसान् युद्धकांक्षिणः ॥
मुमुचुर्विविधान्नादान्वानरा रामसन्निधौ ॥ ३२२ ॥

वानरैः प्रल य प्रोद्यद्घनैरिव महारवैः ॥
लंका प्रकंपिता सर्वा धीःश्रीश्यामरविद्विषां ॥ ३२३.

सततं भ्रम रा लुब्धाः सौगंधिक इवांबुजे ॥
भ्रमराः समरापास्तस्वीरपोर्यशासि प्रभोः ॥३२४॥

ततोऽस्तमग म त्सूर्यः संध्यया प्रतिरंजितः ॥
पूर्णचंद्रप्रदीप्ता च क्षपा समभिवर्तत ॥ ३२५ ॥

सौवर्णमेकं श्री मत्वे त्रिकूटशिखरं वरं ॥
दद्दशुस्तत्र तां लंकां निर्मितां विश्वकर्मणा ॥ ३२६ ॥

विचित्रां मास्व रा कारां प्रासादैरुपशोभितां ॥
दशयोजनविस्तीर्णामद्भुतां द्विगुणायतां ॥ ३२७ ॥

वनैर्मनोर म गुणैः समंतादुपशोभितां ॥
प्रातर्विलोक्य हरयो रम्याण्युपवनानि ते ॥ ३२८ ॥

विविशुर्वायु अ वनाः सुग्रीवस्य निदेशतः ॥
जग्मुर्दिशो भयात्तेषां नागाः सिंहाः खगा मृगाः॥३२९॥

ततो रामो वि य स्तुद्वैः सुवेलस्य महागिरेः ॥
आरुरोह ससुग्रीवाश्चितं शृंगं द्वियोजनं ॥ ३३० ॥

तत्र स्थितः स रा जेंद्रो दिशः सर्वा विलोकयन् ॥
ददर्श लंकां कनकप्राकारेण विराजितां ॥ ३३१ ॥

दशकंठ चा म राम्यां श्वेतछत्रेण शोभितं ॥
तस्या गोपुरशृंगस्थं ददर्श सुदुरासद ॥ ३३२ ॥

तं कुबेरानु अ स्थाने दृष्ट्वाऽशु स कपीश्वरः ॥
उत्थाय पुप्लुवे क्रोधात्प्रभो रामस्य पश्यतः ॥ ३३३ ॥

सुग्रीवो निर्भ य स्वांतस्तृणीकृत्य दशाननं ॥
पतितो गोपुरे स्थाने सोऽब्रवीत्परुष वच. ॥३३४॥

भर्तू रामस्य अ गतां सखा दासोऽस्मि राक्षस ॥
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेंद्रस्य तेजसा ॥३३५॥

इत्युक्त्वा सैर य स्तार्क्ष्य इव तस्योपरि द्विष. ॥
पपाताकृष्य मुकुट पातयामास भूतले ॥ ३३६ ॥

तमाहर-क्षो-रा-जो रे निर्मर्यादप्लवगम ॥
सुग्रीवस्त्वं परोक्षे मे हीनग्रीवो भविष्यसि ॥ ३३७ ॥

ततः प्लवग म पतिर्निशाचरपतिर्बली ॥
न्युद्ध चक्रतुर्घोरं विश्वविस्मयकारकं ॥ ३३८ ॥

---

१ देशनान् २ बाहुयुद्ध.

कृत्वा नियुद्धं श्री दस्य भ्रात्रा तेन सहातुलं ॥
सुवेलस्य पुनः शृंगमाजगाम महायशाः ॥ ३३९ ॥

तमुवाच न रा धिशः सखे सुग्रीव साहसं ॥
कर्तुं नार्हसि भूयस्त्वं मम प्राणो नहिश्वरः ॥ ३४० ॥

अथावरुह्य म हतः सुवेलाग्राद्रघूत्तमः ॥
रुरोध तानि लंकाया द्वाराणि प्रवलैर्बलैः ॥ ३४१ ॥

अनुस्मरन्रा ज धर्ममाहूयांगदमब्रवीत् ॥
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनादिदं ॥ ३४२ ॥

ऋषिदेवा हि य क्षाणामवलिप्तेन यत्त्वया ॥
त्यक्त्वा न्हियं दयां नानाप्रकारं पीडनं कृतं ॥ ३४३ ॥

तद्दोर्विप्रस्तु रा ज्ञाते दाराहरणकर्षित. ॥
आगतोऽह ससुग्रीवो लंकाद्वारे व्यवस्थितः ॥३४४॥

गमिष्यसि त्वं म हर्षिराजर्षिपदवीमरे ॥
मद्बाणैर्निहतो युद्धे भविष्यसि यदि स्थिरः ॥ ३४५ ॥

यत्बलेन येन ज नकतनयां मायया ऽधम ॥
मामतिक्राम्य नीच त्वं हृतवांस्तन्निदर्शय ॥ ३४६ ॥

सीतां त्वमादा य यदि त्वम्येषि शरणं न मां ॥
अराक्षसमिमं लोकं कर्ताऽस्मि निशितैः शरैः ॥३४७॥

धर्मात्मा तेऽनु ज न्मा ऽयं श्रेष्ठो मां शरणं गतः ॥
लंकैश्वर्यमिदं श्रीमद्ध्रुवं प्राप्नोत्यकंटकं ॥ ३४८ ॥

न राज्यमन य ज्ञेन भोक्तुं क्षणमपि त्वया ॥
शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ३४९ ॥

कृत्वा धृतिं प रा मदा त्व युध्यस्व मया सह ॥
मृतो रणे मद्बाशिखैः पाप पूतो भविष्यसि ॥ ३५० ॥

चक्षुःपथं म म प्राप्य न जीवन्प्रतियास्यसि ॥
यद्याविशसि लोकांस्त्रीन् खगीभूतो निशाचर ॥३५१॥

---

१ गर्वयुक्त.

जघन्यज त्वां श्रीदस्य हितं वाक्यं ब्रवीम्यहं ॥
सुदृष्टा क्रियतां लंका क्रियतां चोर्ध्वदैहिकं ॥३५२॥

इत्थमुक्तः स रामेण तारेयोऽक्लिष्टकर्मणा ॥
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ३५३॥

ददर्शासीनं म व्यग्रं रावणं सचिवैः सह ॥
तस्थौ तस्याविदूरेण निपत्याग्निसमप्रभः ॥३५४॥

ततो भर्तुस्त्रि ज गतां श्रावयामास तद्वचः ॥
दूतोऽहं कोसलेंद्रस्य रामस्याक्लिष्टकर्मणः ॥३५५॥

अंगदस्तन य स्तस्य वालिनश्चेत्त्वया श्रुतः ॥
आह त्वां राघवो रामः कौसल्यानंदवर्द्धनः ॥३५६॥

निष्पत्य त्वं सु रा राते युध्यस्व पुरुषो भव ॥
हंताऽस्मि त्वां सहामात्यं सपुत्रज्ञातिबांधव ॥३५७॥

त्रयो लोकाः सु म नसो भविष्यंति हते त्वयि ॥
विभीषणस्य चैश्वर्यं भविष्यति महात्मनः ॥३५८॥

उद्धरिष्यामि ज गतीसुराणां त्वाद्यकंटक ॥
हरेरिभइव स्यातु न त्वं मम पुरः क्षमः ॥३५९॥

देवदानव य क्षाणां गंधर्वोरगपक्षिणां ॥
शत्रुमुन्मूलयिष्यामि त्वामहं लीलया रणे ॥३६०॥

उक्त सत्यं नि व वचः करिष्यामि दशानन ॥
न चेत्सकुल वैदेहीं प्रणिपत्य प्रदास्यसि ॥३६१॥

तारायास्तन य स्येत्य श्रुत्वा सपरुषं वचः ॥
रुष्टः शशास सचिवानसकृद्गृह्यतामिति ॥३६२॥

जगृहुर्घव रा जानं ज्वलारो रजनीचराः ॥
माहयामास तारेयो बलं दर्शयितुं तदा ॥३६३॥

स तान्विहंग म समान्भुजसक्तान्महाबलः ॥
समादायोत्पपाताशु प्रासादं शैलसन्निभं ॥ ३६४ ॥

यदोत्पपात श्री मान्स प्रबलः पक्षिराडिव ॥
तस्योत्पतनवेगाचे निर्धूता. पतिता मृताः ॥ ३६५ ॥

तस्य पादभ रा क्रांतः प्रासादः स महानपि ॥
पफाल शतधा वज्रप्रहाराद्धिमवानिव ॥३६६॥

जगमानां म ध्ये ॥ रामपार्श्वमुपागत. ॥
भक्त्वा प्रासादशिखर नाम विश्राव्य चात्मनः ॥३६७॥

तः प्रवृत्त ज न्य तद्दारुण कपिरक्षसां ॥
कबन्धा उत्थिता यत्र दुस्तराः शोणितापगाः ॥३६८॥

ारायास्तन य स्तत्र रात्रियुद्धे भयकरे ॥
तमिंद्रजितमत्युग्रं चकार विरथ बली ॥ ३६९ ॥

ाहमायः स रा त्री तावदृश्यो रामलक्ष्मणौ ॥
बबंध शरबधेन कूटयोधी निशाचरः ॥ ३७० ॥

बद्धौ भुजग म वैरिंद्रया शरतां गतैः ॥
निष्पदौ पतितौ वीरौ मूर्छितौ रामलक्ष्मणौ ॥ ३७१ ॥

क्षतौ स्रक्षत ज स्तुया भूयस्या समराजिरे ॥
तौ रामलक्ष्मणौ दृष्टौ पुष्पिताविव किंशुकौ ॥३६२॥

तावुवाच वि य द्रती रावणिमां सुरेश्वर ॥
द्रष्टुमामासादितु वाऽपि न शक्तः किं पुनर्युवां ॥३७३॥

यमलोक रा म पुत्रौ नयामीति वदन् शरैः ॥
निर्बिभेद पुनस्तीक्ष्णै प्रजहर्ष ननाद च ॥ ३७४ ॥

तयोर्जगत्पा ॥ कयोः शरीरेऽगुलमतर ॥
न ह्यविद्ध बभूवाग्रैः फणिभिर्त्राणतां गतैः ॥ ३७५ ॥

दृष्ट्वा त्वरश रा क्रांतौ जगत्या जगतां पती ॥
बिभीषणश्च सुग्रीव. सताप परम गतौ ॥ ३७६ ॥

कपयो हनु म न्मुख्या व्याकुली परिवार्य तौ ॥
तस्थुर्दो च भुवं चापि वीक्ष्यमाणा वनौकस ॥३७७॥

---

१ कपट युद्ध करणारा.

सलक्ष्मण तं श्री रामं परिवार्य स्थितान् कपीन् ॥
यूथपानिपुभिर्घोरैरताडयदरिंदमः ॥ ३७८ ॥

एवं सर्वान् प रा भूय हर्षयन् सर्वराक्षसान् ॥
प्रहृष्टो रावणिर्लंका प्रविवेश महायशाः ॥ ३७९ ॥

विभीषणोऽथ य तिमानब्रवीद्वानरेश्वरं ॥
पर्यवस्थापयात्मानमनाथं मां च संकटे ॥ ३८० ॥

त्वं वैक्लव्यं स ज क्षिमं न मृतौ रामलक्ष्मणौ ॥
पश्येमौ न जहाति श्रीरग्रेपीयं न हास्यति ॥ ३८१ ॥

तस्मादाश्वास य स्वांतं बलं च प्लवगाधिप ॥
यावत्सैन्यानि सर्वाणि पुनः संस्थापयाम्यहं ॥ ३८२ ॥

एवमाश्वास्य रा जानं राक्षसेंद्रो विभीषणः ॥
विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥ ३८३ ॥

इंद्रजित्सुस म थेस्तात्प्रियं पित्रे न्यवेदयत् ॥
उत्पपातासनाद्धृष्टः स पुत्रं परिषस्वजे ॥ ३८४ ॥

विभीषणाग्र ज न्मा ता राक्षसीरब्रवीत्स्वय ॥
हताविंद्रजिता ख्यात वैदेह्या रामलक्ष्मणौ ॥ ३८५ ॥

तां पुष्पकम य त्नेन समारोप्यायतेक्षणां ॥
दर्शयध्वं हतौ भर्त्रौ युद्धे दाशरथी इति ॥ ३८६ ॥

यदाश्रयाद्दा ज पुत्री गर्वान्मां नोपतिष्ठते ॥
सोऽस्या भर्ता सह भ्रात्रा निहतो रणमूर्द्धनि ॥३८७॥

दृष्ट्वा रामल य निर्य निरपेक्षाऽथ मैथिली ॥
मामुपस्थास्यतेऽनन्या सर्वाभरणभूषिता ॥ ३८८ ॥

त्युक्त्वाऽऽशु रा क्षस्यः सीतारामोप्य पुष्पकं ॥
निन्युस्त्रिजटया सार्द्धं साऽपश्यद्रामलक्ष्मणौ ॥३८९ ॥

तौ मृतावेव म त्वा सा विललाप पतिव्रता ॥
पुत्रिण्यविधवेत्यूचुर्ये मां ते ऽनृतवादिनः ॥ ३९० ॥

विहाय दीनां श्री मान्मां करुणोऽयं कथं गतः ॥
हा कौसल्ये हा सुमित्रे हा कैकेयि सुतौ मृतौ ॥३९१॥

लक्षणानि ध रा देवैर्यान्युक्तानि शुभान्यलं ॥
तान्यद्य निहते रामे वितथान्येव सर्वशः ॥ ३९२ ॥

तथा रामस्य म हिषीं कृपणां बहुविह्वलां ॥
परिदेवयमानां तां राक्षसी त्रिजटाऽब्रवीत् ॥ ३९३ ॥

मा विषादं व्र ज शुभे भर्ताऽयं तव जीवति ॥
मूर्च्छितः सानुजो रामो मुखयोः श्रीः शुभाऽनयोः३९४

हते पत्यावा य ताक्षि योधानां वदनान्यलं ॥
विवर्णानि भवंत्येषां न तथा न मृताविमौ ॥ ३९५ ॥

इद हि राज रा जस्य विमानं पुष्पकं महत् ॥
दिव्यं त्वां धारयेन्नैव यद्येतौ गतजीवितौ ॥ ३९६ ॥

विश्रब्धा भव म द्वाक्यैरनुमानैः सुखोदयैः ॥
अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥ ३९७ ॥

एवमुक्ता त्रि ज टया सीता सुरसुतोपमा ॥
कृतांजलिरुवाचेममेवमस्त्विति सा सती ॥ ३९८ ॥

संनिवर्त्य वि म यानं सीता त्रिजटया सह ॥
अशोकवनिकां भूयो राक्षसीभिः प्रवेशिता ॥ ३९९ ॥

ततः स वीरोऽ ज कुलप्रदीपः प्रत्यबुध्यत ॥
भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥ ४०० ॥

पुंवत्समद य दोष प्राप्तः सौमित्रिरात्मवान् ॥
किंनु मे सीतया कार्यं परित्यक्ष्याम्यसूनहं ॥ ४०१ ॥

शक्या लोकेषु रा मा मे सीता तुल्या विचिन्वता ॥
न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥४०२॥

किं नु वक्ष्यामि म म तां कौसल्यां मातरं बत ॥
किं कैकेयीं किं सुमित्रां पुत्रदर्शनलालसां ॥ ४०३ ॥

मान. २ सामायिक.

साधुर्गुणाढ्यः श्री मान्यः पातितो हंत मत्कृते ॥
धिङ्मां दुष्कृतकर्माणमनार्यं दुःखभाजनं ॥ २०४ ॥

अस्यायेव ध रा यां स्वं देहं त्यक्ष्याम्यहं वत ॥
तत्तु मिथ्या प्रत्यपितं मां प्रपश्यत्यसंशयः ॥ २०५ ॥

पल्लंकायां नो म याऽयं कृतो राजा विभीषणः ॥
अस्मिन्मुहूर्ते सुग्रीव प्रतिपातुमितोऽर्हसि ॥ २०६ ॥

पुरस्कृत्याल ज मर्गु ससैन्यस्तर सागरं ॥
शोकेन सत्वहीनं त्वां रावणोऽभिभविष्यति ॥ २०७ ॥

यत्तु शक्यं व य स्येन सुहृदा वा परं मम ॥
कृतं सुग्रीव तत्सर्वं भवताऽधर्मभीरुणा ॥ २०८ ॥

यत्कार्यं वान रा मित्रैर्भवद्भिर्हनुमन्मुखैः ॥
तत्कृतं तेन तुष्यामि स्वस्ति वोऽस्तु यशस्विनः॥२०९॥

अनुज्ञातास्ते म या ये समुत्तीर्याब्धिमागताः ॥
भो ऋक्षा वानराः सर्वे यथेष्टं गंतुमर्हथ ॥ २१० ॥

यैः श्रुतं तस्य ज गतीभर्तुस्तत्परिदेवितं ॥
रुरुदुस्ते भृशं दीना ऋक्षाश्च कपयः समं ॥२११॥

स्थापयित्वा प्र य त्नेन सर्वाः सेना विभीषणः ॥
आजगाम गदापाणिस्त्वरितं यत्र राघवः ॥ २१२ ॥

तमंजनाभं त्व रितं दृष्ट्वा सर्वे वनौकसः ॥
दिशः प्रदुद्रुवुर्भीता मत्वा रावणिमागतं ॥ २१३

हेतुं तेषां भ य स्याथ ज्ञात्वा राजा विभीषणं ॥
जांबवंतमुवाचैतान् पर्यवस्थापय द्रुतं ॥ २१४ ॥

जांबवान्वान रा न्सर्वान् पलायनपरान्स्वयं ॥
सांत्वयामास संत्रस्तान्संनिवर्त्य महाभवः ॥ २१५ ॥

विभीषणः स म क्षेशो दृष्ट्वा तौ रामलक्ष्मणौ ॥
हा हेत्युक्त्वा सशोकार्तो रुरोद विललाप च ॥२१६॥

मिलेन हंत श्री मंतावंचिता वृत्तविक्रमी ॥
जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः ॥ ४१७ ॥

कृतः सकामो ऽ रा तिर्नो मेघनादेन रावणः ॥
विलपंतं परिष्वज्य तमुवाच हरीश्वरः ॥ ४१८ ॥

भविष्यति न म ग्रस्ते कामो धैर्यं सखे कुरु ॥
त्यक्त्वा मोहं निहंतारौ रावणं रामलक्ष्मणौ ॥ ४१९ ॥

अथ वाल्यनु ज स्तत्र सुषेणं श्वशुरं तदा ॥
अब्रवीद्गच्छ किष्किंधां गृहीत्वा रामलक्ष्मणौ ॥४२०॥

दशास्यायात्य य महं कृत्वा पुत्रादिभिः सह ॥
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियं ॥ ४२१ ॥

सुषेणो वान रां धीशमब्रवीत्क्षीरसागरे ॥
चंद्रद्रोणौ गिरिश्रेष्ठौ वर्तेते वानरेश्वर ॥ ४२२ ॥

तत्रौषध्यौ ते म हत्यौ विद्येते नामनी तयोः ॥
संजीवकरणीत्येवं विशल्यकरणीति च ॥ ४२३ ॥

अथौषधी ते ज वनाः संपातिपनसादयः ॥
प्रयांत्वानेतुमाश्वेको हनूमान्वा महार्णवः ॥ ४२४ ॥

हताः सुराः सं य ति ये दैत्यैस्तान्धिषणः स्वयं ॥
याभ्यामुत्थापयामास निर्मिताभ्यां स्वयंभुवा ॥४२५॥

तस्मिन्काले द्वि-ज-श्रेष्ठो महता पक्षवायुना ॥
कंपयन्सार्णवां क्षोणीमाजगाम भुजंगभुक् ॥४२६॥

दुद्रुवुस्ते ऽह य स्त्रस्ताः पक्षिराजे समागते ॥
जाता त्वरा वानराणां मुदिता रुदिताकुलाः ॥४२७॥

जयाशिषां न रा धीशौ प्रतिपूज्य खगेश्वरः ॥
विममर्श च पाणिभ्यां मुखे चंद्रसमप्रभे ॥ ४२८ ॥

स्पृष्टास्तेन म म स्तास्ते तयोः संरूढव्रणाः ॥
सुवर्णे च तनू स्निग्धे प्रभ्वोराशु बभूवतुः ॥ ४२९ ॥

१ बृहस्पति.

धृतिश्च शक्तिः श्री स्तस्य सानुजस्य प्रभोस्तदा ॥
द्विगुणाऽभूत्स्मृतिर्बुद्धिर्लीलया मानुषाकृतेः ॥ ४३० ॥

सस्वजे च सु रा धीशप्रतिमौ तावुभौ मुदा ॥
रामस्तमब्रवीदावां व्यसने रक्षितौ त्वया ॥ ४३१ ॥

यथा तातं प्रे म सिंधुं यथाऽजे च पितामहं ॥
तथा भवंतमासाद्य हृदयं मे प्रसीदति ॥ ४३२ ॥

को भवान्विरं ज स्के त्वं वसानो वसने शुभे ॥
दिव्यस्त्रगंगरागश्च दिव्याभरणभूषितः ॥ ४३३ ॥

विनतातन य स्तेऽहं सखा प्राणो बहिश्चरः ॥
नाम्ना गरुड इत्युक्त्वा दृष्ट्वा सोऽगाद्यथागतं ॥ ४३४ ॥

प्रहृष्टा वान रा दृष्ट्वा नीरुजौ रामलक्ष्मणौ ॥
सिंहनादं तदा नेदुर्लांगूलं दुधुवुश्च ते ॥ ४३५ ॥

ततः प्लवंग म वरा द्रुमानुत्पाट्य कोटिशः ॥
लंकाद्वाराण्युपाजग्मुर्युद्धकामा महाबलाः ॥ ४३६ ॥

राजराजानु ज स्तेषां ज्ञात्वा हर्षस्य कारणं ॥
संशयस्थं बलं मेने धूम्राक्षं प्राहिणोदय ॥ ४३७ ॥

कृतः कीशक्ष य स्तेन धूम्राक्षेण रणाजिरे ॥
गिरेः शिखरमादाय सहतो वायुसूनुना ॥ ४३८ ॥

वज्रदंष्ट्रं च ज न्यार्थं प्रेषयामास रावणः ॥
अंगदस्तस्य चिच्छेद शिरस्तदासिना रणे ॥ ४३९ ॥

अकंपनं ज य स्यार्थे निर्गतं रावणाज्ञया ॥
हनूमानवधीद्युद्धे तरुणा तरुणार्करुक् ॥ ४४० ॥

प्रहस्तोऽथ सु रा नीकपराभवविचक्षणः ॥
रावणप्रहितो युद्धे नीलेन शिलया हतः ॥ ४४१ ॥

जय श्रुत्वा प्र म थितं प्रहस्तं वाहिनीपतिं ॥
निर्ययौ स्वयमेवोग्रः क्रूरकर्मा दशाननः ॥ ४४२ ॥

---

1 निर्मल.

हंतुं सुकंठः श्री दस्य भ्रातरं भीमविक्रमं ॥
गृहीत्वाऽद्रेर्महाशृंगमभिदुद्राव वेगवान् ॥ ४४३ ॥

सायकैर्यातु रा जस्तच्चूर्णीकृत्य महाबलः ॥
शरेणैकेन सुग्रीवं पातयामास भूतले ॥ ४४४ ॥

शैलान्गृहीत्वा म हतो गवाक्षगवयर्षभाः ॥
प्रदुद्रुवुस्तेऽपिशरैस्तेन विद्धा निपातिताः ॥ ४४५ ॥

यथा वातेन ज ल्दा भग्नास्तेन वलीमुखाः ॥
जग्मुः शरण्यं शरणं रामं कामं भयाकुलाः ॥४४६ ॥

कोदंडमादा य परं हंतुं गंतुं समुद्यतं ॥
प्रांजलिर्लक्ष्मणो राममब्रवीदग्रतः स्थितः ॥ ४४७ ॥

पर्याप्तोऽहं प रा भूतौ रावणस्य दुरात्मनः ॥
आर्य कार्यमिदं कर्तुमनुजानीहि मां प्रभो ॥ ४४८ ॥

तं सोऽब्रवीस म र्थोऽसि गच्छ यत्नपरो भव ॥
आत्मानं रक्ष सौमित्रे रावणो हि महाबलः ॥ ४४९ ॥

परिष्वज्याग्र ज मयो मत्वा सौमित्रिराहवे ॥
ययौ ददर्श दिक्तुंडं छादयंतं शरैरीन् ॥ ४५० ॥

तं वायुतन य स्तस्य समासाद्य रथं रणे ॥
उवाच दक्षिणं बाहुमुद्यम्याद्भुतविक्रमः ॥ ४५१ ॥

अवध्यत्वं कं ज जस्य वरादेवासुरादिभिः ॥
प्राप्तं त्वया दशग्रीव वानरेभ्यस्तु ते भयं ॥ ४५२ ॥

दक्षिणो मम प सोऽयं बाहुरद्य समुद्यतः ॥
विधमिष्यति ते देहे भूतात्मानं चिरोषितं ॥ ४५३ ॥

संक्रुद्धो यातु धा नस्तमब्रवीत्प्रहर द्रुतं ॥
ततः पराक्रमं ज्ञात्वा त्वां वधिष्यामि वानर ॥ ४५४ ॥

तमब्रवीत्स म रुतः सूनुः क्रुद्धं दशाननं ॥
त्वं मया निहतं पूर्वमक्षमात्मसुतं स्मर ॥ ४५५ ॥

---

१ वानर.

रोषेण बंधुः श्री दस्य तलेनोरसि मारुतिं ॥
आजघानाहतस्तेन स चचाल मुहुर्मुहुः ॥ १५६ ॥

स्थैर्यं कृत्वा पु रा रातिं तलेनैवाजघान सः ॥
दशग्रीवः कंपितोऽभूद्भूमिकंपे यथाऽचलः ॥ १५७ ॥

दृष्ट्वा विसंज्ञ म मरा ऋषयो वानरा मुदा ॥
विनेदुः स त्वथाश्वास्य रावणो हारिमब्रवीत् ॥ १५८ ॥

साधु वानर जे न्ये त्वं श्लाघनीयोऽसि वीर्यतः ॥
तमब्रवीत्कपिर्वीर्यं धिगस्तु मम रावण ॥ १५९ ॥

जीवस्यद्यापि य स्त्वं मे निःशंकं तलताडितः ॥
सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ॥ १६० ॥

ततस्त्वामम रा राते मामको मुष्टिरुद्धतं ॥
लोकपीडाकरं मत्तं प्रणेष्यति यमक्षयं ॥ १६१ ॥

ततः स पर म क्रुद्धो मुष्टिमावृत्य दक्षिणं ॥
पातयामास वेगेन वानरोरसि वीर्यवान् ॥ १६२ ॥

स प्रभंजन ज स्तेन ताडितो दृढमुष्टिना ॥
पुनः पुनः सचचाल प्रवाते विटपी यथा ॥ १६३ ॥

दृष्ट्वा वायोः का य जं तं व्याकुलं दशकंधरः ॥
समुत्सृज्य महातेजा नीलं प्रतिसमभ्यगात् ॥ १६४ ॥

समाश्वस्तः सौ ज नाजो दृष्ट्वा नीलेन संगतं ॥
उवाच मारुतिर्नेदं युक्तं ते दशकंधर ॥ १६५ ॥

शिला नीलेन य शैलाग्रा वृक्षाश्च भूरिशः ॥
रावणस्ताञ्चिच्छेद शरैरशनिसन्निभैः ॥ १६६ ॥

ह्रस्वरूपः सु रा रातेर्ध्वजाग्रे निपपात सः ॥
जज्वाल रावणः क्रोधात्ततो नीलो ननाद च ॥१६७॥

सौमित्रिहनु म रामा रावणस्याग्निनंदनं ॥
दृष्ट्वा ध्वजाग्रे चापाग्रे किरीटाग्रे च विस्मिताः ॥१६८॥

---

१ पुढें. २ गूढ. ३ भूधर (पर्वत). ४ नीलनामक वानर.

तथैव बधु श्री दस्य कपिलाघरविस्मित ॥
अस्त्रमाहारयायास दीप्तमाग्नेयमद्भुत ॥ ४६९ ॥

चकुर्युवान रा दृष्टा भान्त दृष्ट्वा दशाननं ॥
क्रुद्ध आग्नेयसयुक्त शरमादाय रावण ॥ ४७० ॥

अब्रवीन्नील म द्य व जीविल रक्ष वानर ॥
इत्युक्त्वास्त्रप्रयुक्तेन शरेण तमताडयत् ॥ ४७१ ॥

नील पपात ज गतीपृष्ठे तत्कालमेव स ॥
परं पितुश्चात्मनश्च तेजसा न मृतस्तदा ॥ ४७२ ॥

ततोऽरातिर्ज य प्रेप्सु सौमित्रिमभिनिर्ययौ ॥
स।तमाहाहंसि कपीन्द्रयोद्धु पश्य मा स्थित ॥४७३॥

तमुवाच सु रा रातिर्दिष्ट्या दृष्टोऽसि राघव ॥
अस्मि क्षणे मृत्युलोक यास्यसि त्व ममाशुगै ॥४७४॥

अब्रवीत्स स म "युत्त किं पाप त्व विकत्थसे ॥
महाप्रभावा गर्जंति न जातुविदसत्तम ॥ ४७५ ॥

तत श्रीदानु ज श्चक्रे युद्ध सौमित्रिणः सह ॥
सौमित्रिश्च महातेजास्तस्य चिच्छेद सायकान् ॥४७६॥

सुमित्रातन य स्याथ ल्लाटे स दशानन ॥
निचखान शर घोर ब्रह्मदत्त पविप्रभ ॥ ४७७ ॥

स रामस्यानु ज स्तेन व्याकुलोऽभूत्क्षण पुन. ॥
सज्ञा प्राप्य महातेजा शत्रोश्चिच्छेद कार्मुक ॥४७८॥

त्रिभिस्तीक्ष्णै सा य कैस्तमाजघानाशु मर्मणि।॥
स चचाल पुन, सज्ञा कृच्छ्रात्प्राप दशानन ॥४७९॥

तत शक्ति स रा माशु ब्रह्मदत्ता।महाबल।॥
प्रेषयामास सक्रुद्धा काली व्याली नवामिव ॥४८०॥

शरैस्तै स म यैस्ता क्षघान भरतानुज।॥
तथापि शक्ति सा तस्य विवेशैव भुजातर ॥ ४८१ ॥

---

१ मश्लोक २ दशानन

महत्या ऽपि शक्त्या श्रीमान्स ताडितोऽपि स्तनांतरे ॥
विष्णोरमीमांस्यभागमात्मानं प्रत्यनुस्मरत् ॥ ४८२ ॥

द्वाभ्यां भुजाभ्यां राजा तं अग्राहेपित्र सतरं ॥
चालनेऽपि क्षमो नाभूल्कि तस्योद्धरणे पुनः ॥४८३॥

तदानीं द्रुत म भ्येत्य रावणं वायुनंदनः ॥
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ४८४ ॥

राजराजानु ज स्तेन वमन् रुधिरमाकुलः ॥
पपात मूर्छितो नेदुर्देवदैत्यमहर्षयः ॥ ४८५ ॥

कपिस्तमान् य तूर्णं राघाभ्याशं सुभक्तिमान् ॥
शक्तिस्तमुत्सृज्य गत्ता रावणस्य रथं प्रति ॥ ४८६ ॥

आश्वस्तोऽभूद रा तिशो मुहूर्ताद्दुरत्तानुजः ॥
रावणोऽपि पुनर्योद्धुं धनुर्बाणान्समाददे ॥ ४८७ ॥

दृष्टप्लवंग म वधो रामो रक्तांतलोचनः ॥
हनूमंतं समारुह्य रावणं समदुद्रुवत् ॥ ४८८ ॥

तमाह मेनु ज छद्मा तिष्ठ कृत्वा मभाप्रियं ॥
क्नु राक्षसशार्दूल गत्वा मोक्षमवाप्स्यसि ॥ ४८९ ॥

कर्ता तव क्ष य स्याहं पुत्रैः पौत्रैः प्रियैः सह ॥
क्षणेदिने जनस्थाने सर्वं नीराक्षसं कृतं ॥ ४९० ॥

एवमुक्तः सो ज नाजं वहंतं राघवं रणे ॥
आजघान शरैर्दीप्तैः पूर्ववैरमनुस्मरन् ॥ ४९१ ॥

तस्याजनाक्षा य भुवः कालानलविषोपमैः ॥
ताडितस्य शरैर्भूयस्तेजोवृद्धिरभूत्तदा ॥ ४९२ ॥

राभो राक्षस रा जेन दृष्ट्वा भक्तं कृतव्रणं ॥
चकार विरथं सूतं हयान्हत्वा निरायुधं ॥ ४९३ ॥

छित्वा ध्वजं द्वि म करमभं छत्रमयेपुभिः ॥
किरीटकूटं चिच्छेद जघानोरसि राक्षसं ॥ ४९४ ॥

---

१ वज्रसदृश. २ रामाचे समीप. ३ कपट मनुष्य (राम). ४ मुकुटाग्रम.

वज्रप्रहारैः श्री मान्यो न चचाल दशानन: ॥
॥ रामबाणाभिहतो मुमोह धनुरत्यजत् ॥ ४९५ ॥

तमुवाच प रा धीन राघवो विरथ स्वक ॥
अल श्रातोऽसि राजस्त्व युद्धे नास्त्यद्य ते बल ॥४९६॥

गच्छ मुक्तोऽस्य य त्वारे विश्रात श्वस्त्वमाहव ॥
पुन सै यै परिवृतो योद्धुमर्हि मया सह ॥ ४९७ ॥

प्रेक्षिष्यसे भु ज स्य मे वीर्यमाजौ स्वकै सह ॥
परिश्रात मृत्युवश नयामि त्वां न राक्षस ॥ ४९८ ॥

एवमुक्तो भ ■ व्यासो हतदर्पो निशाचर ॥
विवेश लका रामेण लीलया युधि निर्जित ॥४९९ ॥

श्रीरामेण प रा भूतो बभूव व्यथितेंद्रिय ॥
मातग इव सिंहेन गरुडेनेव पन्नग: ॥ ५०० ॥

उवाच पर म व्यग्र प्रेक्षमाणो निशाचरान् ॥
व्यर्थं तपो मे यद्युद्धे मानुषेणास्मि निर्जित ॥५०१॥

इद तत्कर्ज ऊ वचो घोर मामभ्युपस्थित ॥
मानुषेभ्यो विजानीहि भय त्वमिति तत्तथा ॥ ५०२ ॥

देवदानव य क्षैस्तैर्गंधर्वैरुरगराक्षसै ॥
अवध्यत्व मया प्राप्त मानुषेभ्यो न याचित ॥ ५०३ ॥

अनरण्योऽपि ज गतीपतिर्मामशपत्पुरा ॥
शप्तोह वेदवत्या च सेय जनकनदिनी ॥ ५०४ ॥

उमा शभो प्रि य तमा मह्य कैलासचालने ॥
नदीश्वरश्चोपहासे घोर शाप ददौ पुरा ॥ ५०५ ॥

तद्राक्षसा स्म रा ध्वद्य निमित्त मद्भयस्य यत् ॥
यूय प्रिया. सहाया मे यत्न कर्तुमिहार्हथ ॥ ५०६ ॥

महासत्वो म म भ्राता कुभकर्णो विबोध्यता ॥
प्रयत्न क्रियता दुर्गप्राकारद्वाररक्षणे ॥ ५०७ ॥

१ युद्धाचें आयण २ राजविशेष. (हा ■ राजाचा शाप असे कित्येकांचें म्हणणे). ३ कुंभकर्णाची कथा

संरक्षणीया श्री रद्य प्रयत्नेन निशाचराः ॥
सुप्तं स्वपिति निश्चितः कुंभकर्णो विबोध्यतां ॥५०८॥

स हि संख्ये पे रा क्रांतः ककुदं सर्वरक्षसां ॥
वानरान् राजपुत्रौ च क्षिप्रमेव हनिष्यति ॥ ५०९ ॥

रामेण संग्रा मे इह प्रभग्नस्य सुदारुणे ॥
भविष्यति न मे शोकः कुंभकर्णे विबोधिते ॥ ५१० ॥

भेत्रेत्युक्ताः प्र ज ग्मुस्ते कुंभकर्णनिवेशनं ॥
गंधमाल्यं महद्भक्ष्यमादाय रजनीचराः ॥ ५११ ॥

ते कुंभकर्णं य त्नेन महता राक्षसोत्तमाः ॥
दिनद्वयेनायुतशः कृच्छ्रेण प्रत्यबोधयन् ॥ ५१२ ॥

प्रबुद्धो मांस रा शीन्स भुक्त्वा नानाल्पपर्वतान् ॥
सहस्रशो मद्यकुंभान् पीत्वा स्नातो घटस्रुतिः ॥५१३॥

यूपाक्षात्स म म ग्रे तातचिवावृत्तमात्मनः ॥
प्रबोधकारणं श्रुत्वा कुंभकर्णस्तमब्रवीत् ॥ ५१४ ॥

हरिसैन्यं रा ज पुत्रौ तौ चाहं रामलक्ष्मणौ ॥
जित्वा प्रथममेवाजौ ततो द्रक्ष्यामि रावणं ॥ ५१५ ॥

महोदरो न य ज्ञस्तं कुंभकर्णं तदाब्रवीत् ॥
श्रुत्वा प्रभुवचः शत्रून् पश्चादपि विजेष्यसे ॥ ५१६ ॥

प्र प्रतस्थेऽग्र ज स्यादौ दर्शनार्थं महातनुः ॥
कुंभकर्णः पदन्यासैः कंपयामास मेदिनीं ॥ ५१७ ॥

बहिस्थाः कप य स्तस्य वचतो राजवर्त्मनि ॥
दर्शनात्कुंभकर्णस्य त्रस्ताः सर्वे पलायिताः ॥ ५१८ ॥

केचिच्छरण्यं रा जेंद्रं राघवं शरणं ययुः ॥
क्रममाणं महाकायं पुरा नारायणं यथा ॥ ५१९ ॥

तथा दृष्ट्वा त म त्युग्रं रामो दशरथात्मजः ॥
कोऽयमत्युच्छ्रितः श्रीमानित्यपृच्छद्विभीषणं ॥५२०॥

त्रिभीषणस्तं श्री मंतं राघवं जगतः पतिं ॥
प्रणम्याकथयत्तस्य नामवीर्यादिशेषतः ॥ ५२१ ॥

राम येन सु रा धीशः साक्षात्कालश्च निर्जितः ॥
ऐरावतैकदंतेन वासवो युधि ताडितः ॥ ५२२ ॥

भक्षिताश्च स म येन प्रजा येन महौजसा ॥
यं दृष्ट्वा त्रिदशाः सर्वे कालोऽयमिति मोहिताः ॥५२३॥

ब्रह्मा यमाह ज नितस्त्वं हि विश्रवसा ध्रुवं ॥
प्रजानाशाय तत्पाप मृतकल्पः शयिष्यसे ॥ ५२४ ॥

ब्रह्माऽग्रजेनें य स्यार्थे प्रार्थितः सन् पुराऽब्रवीत् ॥
शयिता ह्येष षण्मासमेकाहं जागरिष्यति ॥ ५२५ ॥

सोऽयं राक्षस रा जस्य कुंभकर्णोऽनुजः प्रभो ॥
उत्थापितो बलादद्य राज्ञा योद्धुं त्वया सह ॥ ५२६ ॥

रामस्तमाह म तिमन्कथमेनं महाबलं ॥
वानरा वारयिष्यन्ति तमुवाच बिभीषणः ॥ ५२७ ॥

उच्यंतां मनु ज श्रेष्ठ वानरा माययाऽरिणा ॥
बिभीषिकार्यं समरे त्र्यमेतत्समुच्छ्रितं ॥ ५२८ ॥

ज्ञात्वा मायाम य मिमं सर्वे शाखामृगाः प्रभो ॥
ये भीता दर्शनेनास्य ते भविष्यंति निर्भयाः ॥५२९॥

दशकंठानु ज वचः श्रुत्वा दशरथिः स्वयं ॥
आह सेनापतिं नीलं स तथाऽकथयत्कपीन् ॥५३०॥

यंत्रं मायाम य मिति श्रुत्वा सर्वे प्लवंगमाः ॥
गृहीत्वाऽगान्नगान् हृष्टा लंकाया द्वारमभ्ययुः ॥५३१॥

कुंभकर्णः प रा भूत्वा खिन्नमग्रजमब्रवीत् ॥
राजंस्त्वया बलवता वैरमुत्पादितं कथं ॥ ५३२ ॥

यः शत्रुभव म स्योग्रमात्मानं नाभिरक्षति ॥
अवाप्नोति हि सोऽनर्थान्स्थानाच्च व्यवरोप्यते ॥५३३॥

---

१ रावण.

पूर्वं यदुक्तं श्री मंत्ते प्रियया मेऽनुजेन च ॥
तदेव नो हितं वाक्यं यथेच्छसि तथा कुरु ॥ ५३४॥

क्रुद्धो राक्षस रा जस्तमुवाचाहं गुरुस्तव ॥
अनुप्रशास्सिकि मां त्वं यद्युक्तं तद्विधीयतां ॥५३५॥

विभ्रमाद्वाऽथ म नसो मोहाद्वीर्याश्रयेण वा ॥
यन्नाभिपन्नमधुना व्यर्था तस्य पुनः कथा ॥ ५३६ ॥

यद्यस्ति स्याग्र ज इति स्नेहः स्वस्मिंश्च विक्रमः ॥
यदि कार्यं ममैतत्ते हृदि कार्यतमं मतं ॥ ५३७॥

अस्मिन्काले तु य द्युक्तं तदिदानीं विचिन्त्यतां ॥
ममापनयज दुःख विक्रमेण समीकुरु ॥ ५३८ ॥

रुष्टं राक्षस रा ज त ब्रुवाणं धीरदारुणं ॥
कुंभकर्णः शनैः श्लक्ष्णमुवाच परिसांत्वयन् ॥ ५३९॥

शृणु राजन्म म वचः संतापेनालमुत्थितं ॥
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥ ५४० ॥

दैन्य रक्षोरा ज चित्ते मयि जीवति मा कुरु ॥
तमहं नाशयिष्यामि यत्कृते परितप्यते ॥ ५४१ ॥

राजन्कालेऽत्र य द्योग्यं कर्तुं स्निग्धेन बंधुना ॥
शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ ५४२ ॥

इत्युक्तवंतं अ न्यार्थं समुद्युक्तं दशाननः ॥
भूषणैर्भूषयामास कुंभकर्णं महाबलं ॥ ५४३ ॥

कुंभकर्णः प्रि य भ्रातुः पादौ नत्वा निपीडितं ॥
तं परिष्वज्य युद्धाय प्रतस्थे शितिशूलभृत् ॥ ५४४ ॥

पादन्यासैर्ध रा मार्तां कुर्वन् नादेन वानरान् ॥
कंपयन्निर्गतोऽत्युग्रः पुराद्बहुबलैर्वृतः ॥५४५॥

तस्य देहस्य म हतः परीणाहो धनुःशतं ॥
उच्छ्रायः षट्शतधनु-प्रमाणः परिकीर्तितः ॥ ५४६॥

---

१ तीक्ष्ण. २ घेर.

विलंघयित्वा श्री मान्स प्राकारं पर्वतोपमः ॥
　　निर्ययौ नगरात्तूर्णं कुंभकर्णो भयंकरः ॥ ५४७ ॥

सर्वेऽपि वान र स्त्रस्तास्तमायांतं सुदारुणं ॥
　　दृष्ट्वा शकटचक्राक्षं सहसा विप्रदुद्रुवुः ॥ ५४८ ॥

तानंगदः स म रतो विमुखान् यूथपान् कपीन् ॥
　　नीलादीनब्रवीद्वीरा महतीयं विभीषिका ॥ ५४९ ॥

ते तारातनु ज स्यातिप्रयत्नेन प्लवंगमाः ॥
　　निवृत्ता युगपज्जघ्नुस्तं शिलाशिखरद्रुमैः ॥ ५५० ॥

देहे शिलोच य क्रूरे विशीर्णास्तस्य ते द्रुमाः ॥
　　शिलाश्च शिखराण्यद्रेः शतशः प्राज्यतेजसः ॥ ५५१॥

बलीमुखव—रा स्तेन निहता बहवो रणे ॥
　　रक्तार्द्रा दुद्रुवुस्तेन तीर्णा येन पयार्णवं ॥ ५५२ ॥

अंगदस्तान्भ म विचान् वानरान् पुनरब्रवीत् ॥
　　अवातिष्ठत युध्यामो निवर्तध्वं प्लवंगमाः ॥ ५५३ ॥

द्रुतानां नैव ज-गतीपृष्ठे पश्यामि वः स्थलं ॥
　　दारास्तूपहसिष्यंति सोऽधिको जीवतां वधः ॥ ५५४॥

रामं दृष्ट्वा ना य मव क्रूरो जीवन् गमिष्यति ॥
　　दीप्यमानमिवासाद्य पतंगो जातवेदसं ॥ ५५५ ॥

द्रवमाणास्तु ज वना अंगदेन बलीमुखाः ॥
　　सांत्वनैश्चानुमानैश्च ततः सर्वे निवर्तिताः ॥ ५५६ ॥

अपर्यंतआस्था य मति तस्थुः संग्रामकांक्षिणः ॥
　　पर्यवस्थापिताः सूक्तैरंगदेन प्रहर्षिताः ॥ ५५७ ॥

ततस्तान्वान रा न्वीरान् भक्षयामास राक्षसः ॥
　　नासापुटाभ्यां कर्णाभ्यां तस्य केचिद्विनिर्गताः ॥५५८॥

शैलशृंगैस्तं म रुतस्ताडयामास नंदनः ॥
　　तमाजघान शूलेन कुंभकर्णो भुजांतरे ॥ ५५९ ॥

---

१ बुभगावर्ग. २ वानर.

भीमं ननाद श्री मान्स मारुती रक्षसा ऽऽहतः ॥
रक्षोगणा त्रिनेदुस्त समीक्ष्य व्यथितं कापिं ॥ ५६० ॥

ऋषभ च ध रा यां स शरभं गधमादन ॥
नील गवाक्ष चरणे पातयामास राक्षसः ॥ ५६१ ॥

त समारुह्य म हिभृत्तुल्यं ते कपयो रुषा ॥
ददशुर्दारयामासुर्नखैर्दन्तैश्च मुष्टिभिः ॥ ५६२ ॥

यथा सर्पान्द्वि ज पति र्भक्षयन्परिधावति ॥
तथैव कुभकर्णस्तान् कौशानीशानविक्रमः ॥ ५६३

तारायास्तन य स्तेन मुष्टिना ताडितो ह्रदि ॥
पपात भूमौ संयक्तो महसा सहसाऽर्दितः ॥ ५६४ ॥

सुग्रीवो वान रा धीशः शैलशृगेन वक्षसि ॥
तमाजघान तद्भिन्नं विशाले तद्भुजांतरे ॥ ५६५ ॥

शूल चिक्षेप म दिरामदांध. स निशाचरः ॥
समुत्पत्य गृहीत्वा तद्भंज पवनात्मजः ॥ ५६६ ॥

शृंगमुत्पान्य ज गतीधरस्य मलयस्य सः ॥
जघान तेन सुग्रीवं पातयामास मूर्च्छित ॥ ५६७ ॥

यथा वातस्तो य दं तं संप्रगृह्य जहार स ॥
हनूमांश्चिंतयामास किं कार्यमिति बुद्धिमान् ॥५६८॥

मोक्षितश्चेन्नि ज स्वामी मयाऽद्य बलशालिना ॥
अप्रीतिश्च भवेदस्य कीर्तिनाशश्च शाश्वतः ॥ ५६९ ॥

मूर्छितोऽद्य स्व य मयं मुहूर्ताद्वानरेश्वरः ॥
मोक्ष प्राप्स्यति सेनां स्वां तावदाश्वासयाम्यह ॥५७०॥

एवमाजौ प रा क्रम्य तमादाय कपीश्वरं ॥
विनेश लकां विजयी कुभकर्णो महायशाः ॥ ५७१ ॥

पूज्यमानः सु म नसां गधोदानां च वृष्टिभिः ॥
राजमार्गे गतो हृष्टः कुभकर्णः शनैः शनैः ॥५७२॥

---

१ शिवासारसा पराक्रमी.

अथ प्रबुद्धः श्री मान्स प्लवगेशो महाबलः ॥
दैवगत्या बभूवास्य तद्रूपं मोहशांतये ॥ ५७३ ॥

प्लवंगमानां रा जाऽशु तस्य कर्णौ नखैः खरैः ॥
लुलुंच नासां दशनैः पार्श्वौ च विददार सः ॥५७४॥

छिन्नकर्णोऽस्य म पीतो हृतनासो विलपितः ॥
आविध्य भूमौ सुग्रीवं कुंभकर्णः पिपेष सः ॥ ५७५॥

अभिपिष्टोऽल ज गत्यां हन्यमानोऽपि राक्षसैः ॥
जगाम खं कंदुकवज्जवेन स हरीश्वरः ॥ ५७६ ॥

प्रगर्जन्प्रल य प्रोद्यन्मेघघोरध्वनिर्द्रुत ॥
वानराणां सार्वभौमो रामपार्श्वं जगाम सः ॥ ५७७ ॥

आयुधं मुद्ग रा ख्यं स प्रगृह्य क्रोधनः पुरात् ॥
पुनर्विनिर्गतो योद्धुं प्रलयज्वलनप्रभः ॥ ५७८ ॥

खादन्प्लवंग म शतान्यंतकप्रतिमो यदा ॥
चचार राक्षसा भीताः शरणं राघवं ययुः ॥ ५७९ ॥

तदा रामानु ज स्तस्य चिच्छेद कवचं शरैः ॥
निचखानाशुगान् देहि शतशो वज्रदारुणान् ॥५८०॥

कुंभकर्णः स्म य न्नाह साधु साधु महाभुज ॥
युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥ ५८१ ॥

वीर रामानु ज रणे तोषितोऽहं त्वया भृशं ॥
नेंद्रोऽपि मेऽग्रतो युद्धे स्थितपूर्वः कदाचन ॥५८२॥

अंतकस्याप्य य त्नेन जेतुर्मेऽतुल्यतेजसः ॥
तिष्ठन्नप्यग्रतः पूज्यः किमु युद्धप्रदायकः ॥ ५८३ ॥

त्वामनुज्ञाप्य रा जेंद्र गंतुमिच्छामि लक्ष्मण ॥
तमेव हंतुमीहा मे सर्वं तस्मिन् हते हतं ॥ ५८४ ॥

दृष्टः पराक्र म स्तेऽद्य सत्यं त्वय्यद्भुतं बलं ॥
एष दाशरथी रामस्तिष्ठतीत्यब्रवीत्स तं ॥ ५८५ ॥




ततः स रामं श्री मंतमभिदुद्राव राक्षसः ॥
कुंभकर्णो महातेजाः कंपयन्निव मेदिनीं ॥ ९८६ ॥

रामः शचीन-रा-रातिं दंदि विव्याध मार्गणैः ॥
विद्धस्य हस्ताचस्योर्व्यां पपातोग्रगदा तदा ॥ ९८७ ॥

रक्षःप्लवंग म र्त्यान्स भक्षयामास राक्षसः ॥
मत्तो रुधिरगंधेन मदेन च रुषोद्धतः ॥ ९८८ ॥

राममुद्दिश्य ज गतीधरशृंगमरिर्महत् ॥
चिक्षेप समरे क्रुद्धः कुंभकर्णो महाबलः ॥ ९८९ ॥

कौसल्यातन य स्तूर्ण शरैश्चिच्छेद सप्तभिः ॥
द्वे शते वानराणां तत्पतमानमपातयत् ॥ ९९० ॥

तस्मिन्काले न रा धीशं रामं सौमित्रिरब्रवीत् ॥
मत्तः शोणितगंधेन स्वान्परांश्चैव खादति ॥ ९९१ ॥

एनं प्रमत्त म धुना वानराः शतशः प्रभो ॥
अधिरोहंतु भारार्तो नान्यान्हन्यादयं कपीन् ॥९९२॥

अधिरूढास्ति ज गतां नायस्याज्ञानुवर्तिनः ॥
व्यधूनयत्तान्वेगेन दुष्टहस्तीव हस्तिपान् ॥ ९९३ ॥

कोदंडमादा य तदा तमुवाच रघूत्तमः ॥
आगच्छ राक्षसश्रेष्ठ रक्षःकालमवेहि मां ॥ ९९४ ॥

दशकंठानु ज स्तेन तथोक्तः प्रभुणा स्वयं ॥
रामोऽयमिति विज्ञाय जहास विकृतस्वरं ॥ ९९५ ॥

उवाच च प्र य त्नं त्वं कुरु राम मयि ध्रुवं ॥
न विराधः खलो वाली कुंभकर्णोऽहमागतः ॥९९६॥

पराक्रमं त्वं रा जीवलोचनाजौ प्रदर्शय ॥
ततस्त्वां भक्षयिष्यामि दृष्ट्वादौ तव विक्रमं ॥ ९९७ ॥

श्रुत्वातिविक्रं म स्येत्थं वाक्यं तल्लक्ष्मणाग्रजः ॥
कृत्वा युद्धं प्रचिच्छेद बाहुं तस्य समुद्गरं ॥ ९९८ ॥

भानुः ग्राहुःश्री दस्य वज्रच्छिन्नाद्रिशृंगवत् ॥
पपात पतता तेन मर्दिता कपिवाहिनी ॥ ५९९ ॥

स्वर्भानुरिव रा[२]केशं रामं हंतुं स राक्षसः ॥
अभिदुद्राव वामेन करेणोत्पाट्य भूरुहं ॥ ६०० ॥

सनालं वाम म पि त रामश्चिच्छेद तद्भुजं ॥
तेनापि चूर्णिता रक्षःकपिभूरुहपर्वताः ॥ ६०१ ॥

दृष्ट्वा छिन्नभु ज द्वंद्वमागच्छंतं जवेन तं ॥
तत्पादावर्द्धचंद्राभ्यां चिच्छेदाशु रघूत्तमः ॥ ६०२ ॥

तस्य पादौ क्ष य करावुभौ वानरराक्षसां ॥
विनादयंतौ प्रदिशो दिशोऽब्धिं च निपेततुः ॥६०३॥

यथैव चंद्रं रा हुः स व्यादायास्यं भयंकरं ॥
रामं दुद्राव पादाभ्यां भुजाभ्यां रहितोऽप्यरिः ॥६०४॥

अपूरयद्धे म पुंखैः शरैस्तस्याननं प्रभुः ॥
शशाक वक्तुं न तदा चुकूज च मुमूर्छ च ॥६०५॥

अथाददे ते ज सेद्ध कालकल्पं शरं वरं ॥
वायुवेगं प्रचिक्षेप कुंभकर्णाय राघवः ॥ ६०६ ॥

स कृतारिल य स्तस्य चकर्त सहसा शिरः ॥
प्रयुक्तो वासवेनेव वज्रो वृत्रस्य विद्विषः ॥ ६०७ ॥

देहं ततस्य ज स्थी छेदवेगोत्थितं शिरः ॥
पपात पुरि वेश्मानि प्राकारं चाप्यपातयत् ॥ ६०८ ॥

दृष्ट्वा हतं सं प ति तं हृष्टा देवा महर्षयः ॥
प्लवगाः पूजयामासुः श्रीरामं जयभागिनं ॥ ६०९ ॥

कुंभकर्णं प रा सुं तं राक्षसेभ्य स्तं रणे ॥
श्रुत्वा शोकाकुलो राजा स मुमोह पपात च ॥६१०॥

निललाप स प्र योऽपि दैन्यं प्राप्य स रावण. ॥
हा वीर बंधो प्रधने सकन्या मां त्वं कथं गतः ॥६११॥

---

१ राहु. २ चद्र. ३ वामून.

त्वया विना मे श्री नैष्टा किं कार्यं सीतया तया ॥
राज्येन नास्ति मे कृत्यं जीविते नास्ति मे मतिः ॥६१२॥

प्राप्तो मया परानर्थः सुहृद्वाक्यमगृण्हता ॥
विभीषणेन विदुषा यदुक्तं सत्यमेव तत् ॥ ६१३ ॥

शोकदोऽयं मम प्राप्तो विपाकस्तस्य कर्मणः ॥
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषण ॥६१४॥

एवं बहुनु जल्पंतादिलपंतं दशाननं ॥
तत्सुतस्त्रिशिरा वीरः सांत्वयन्नित्युवाच तं ॥६१५॥

दैवाद्धतोऽद्य यमाजी मध्यमो नः पिता बली ॥
पराङ्मुखो हतः शौर्यो नैव योऽभिमुखो रणे ॥६१६

निष्पतिं नरानन्ये शराः सूर्याततेजसः ॥
त्रैलोक्यस्यापि विजये समर्थस्त्वमसि प्रभो ॥ ६१७ ॥

स त्वं कस्मात् मर्योऽपि शोचस्यात्मानमीदृशं ॥
मा प्राकृत इव प्राज्ञ शोकं कुरु सुरेश्वर ॥ ६१८ ॥

ब्रह्मदत्ताऽस्ति ते शक्तिनी गदाश्च कांच धनुः ॥
दिव्यः शर. स्यंदनोऽपि सहस्रखरसयुतः ॥ ६१९ ॥

त्वया शचीपि यमुना विशस्ता दैत्यदानवा ॥
त्वं सर्वायुधसंपन्नो राघवं शास्तुमर्हसि ॥ ६२० ॥

यथेष्टं त रा ज वर्यं तिष्ठाह भ्रातृभिः सह ॥
गमिष्यामि हनिष्यामि रणे राम सलक्ष्मण ॥ ६२१

श्रुत्वा स्ततन य स्यैव वाक्यं रात्रिचरेश्वरः ॥
पुनर्जातमिवात्मानं मेने कालेन मोहितः ॥ ६२२ ॥

प्रेषितस्त्रिशिरा राजा देवांतकनरांतकौ ॥
अतिकायश्च ते तस्य सर्वे लब्धवराः सुताः ॥ ६२३ ।

वैमात्रेयौ स म यौ च भ्रातरौ वरदर्पितौ ॥
पुत्रैश्चतुर्भिः सहितौ महापार्श्वमहोदरौ ॥ ६२४ ॥

१ सूर्यासारख्या तेजस्वी. २ देहकांतीचे हरण करणारा.

नरांतक तु श्री मत्त पिला सप्रेषितोऽगद ॥
मुष्टिनैवावधीदुग्र कपिसैन्यतृणानल ॥ ६२५ ॥

मारुते प्रख रा न्मुष्टिप्रहाराद्भिन्नमस्तक ॥
देवांतको जहौ प्राणान् य पुराऽवर्धनामक ॥६२६॥

नीलो गृहीत्वा म हतो गिरे शृग सपादप ॥
क्षिप्तेन तेन हतवान् गजारूढ महोदर ॥ ६२७ ॥

त्रिशिराश्चात्म ज स्तस्य रावणस्य महाबल ॥
गृहीत्वा तदासिं तेन निहतो वायुसूनुना ॥ ६२८ ॥

महापार्श्व स य दुग्रो भ्राता लकापतेरणे ॥
ऋषभेण महातेजास्तस्यैव गदया हत ॥ ६२९ ॥

अतिकाय सु रा रातिरस्त्रविद्रणदारुण ॥
सौमित्रिणा हत शूरो ब्रह्मास्त्रेण रणाजिरे ॥६३०॥

स्वपुत्रभ्रातृ म रण श्रुत्वा शोकपरायण ॥
दीन सभायामालोक्य तातमिन्द्रजिदब्रवीत् ॥ ६३१ ॥

मयि जीवत्य ज प्राप्तद्विपद्गवरे युधि ॥
न तात मोह त्व गतुमर्हस्यय महाभुज ॥ ६३२ ॥

द्विया समुद य स्याद्यतको हत कोविद ॥
पश्याद्य राम मद्बाणभिन्नदेह सलक्ष्मण ॥६३३ ॥

शक्रशत्रुर्नि ज प्रा पतेजो दर्शयितु रणे ॥
जगाम राक्षसानीकैर्वृतो वृत्र इवापर ॥ ६३४ ॥

तत स विज य प्राप्त्यै द्रष्यैर्युद्धभुवि स्थित ॥
जुहाव हुतभोक्तारमभिचारविधानत ॥ ६३५ ॥

कृष्णछाग सु रा रातिर्हुत्वा जीवतमस्त्रवित् ॥
पुनर्ब्रह्मास्त्रोपदेश ब्रह्मणा समकारयत् ॥ ६३६ ॥

स लब्ध्वा ब्राह्म य स्त्रमस्तेन स्वधनुरादिक ॥
युद्धोपकरण सन सविद्वानभ्यमन्त्रयत् ॥६३७ ॥

---

१ [illegible] २ [illegible] प्रयोग

अतार्हित स श्री दस्य भ्रातृव्य सर्ववानरान् ॥
पातयामास विशिखै पुनर्दाशरथी च तौ ॥ ६३८ ॥

रामोऽब्रवीच्छ रा कात सौमित्रि वस्त दु सह ॥
सहसा व्यग्रमनसा ब्रह्मणोऽस्त्र मया सह ॥ ६३९ ॥

स तेनास्त्रेण म हता सै य राम सल्क्ष्मण ॥
निपूदयित्वा स्वपुरी विवेश विजयी मुदा ॥ ६४० ॥

नीलस्ताराम ज स्तद्वत्सुग्रीवो जाम्बवानपि ॥
तस्मिन्काले शरैर्व्याप्ता न किंचित्प्रतिपेदिरे ॥ ६४१ ॥

विभीषण सा य कार्तान् यूथपानब्रवीत्स तान् ॥
विषादस्य न कालोऽय मामिष्ट कुशली प्रभु ॥६४२॥

मरुत्पुत्रोऽथ रा ञी तनुमानयित्वाऽस्त्रमुत्थितः ॥
तमाह यो य समाणस्त तमाश्वासयावहे ॥ ६४३ ॥

उल्काहस्तौ स म थौ तौ रणशीर्षे विचेरतु ॥
अपश्यता सप्तषष्टिकोटिकोशोत्तमान् हतान् ॥६४४॥

युक्त स्वभाव ज रया जाम्बवत शरार्दित ॥
दृष्ट्वा विभीषणोऽपृच्छ कच्चित्त्व तात जीवसि ॥६४५॥

ब्रह्मणस्तन य स्त स कण्ठादुत्तरमब्रवीत् ॥
त्वा स्वरेणाभिजानामि न पश्यामि विभीषण ॥६४६॥

तात प्राणाना ज नेय कश्चिद्धारयते रणे ॥
इति श्रुत्वा जाम्बवतमब्रवीत्स विभीषण ॥ ६४७ ॥

आर्य धर्मन य ग्रस्त्यमतिक्रम्य रघूत्तमौ ॥
सुग्रीवमगद चापि कस्मात्पृच्छसि मारुतिं ॥६४८॥

न तथा वान रा धीशे नागदे नापि राघवे ॥
आर्य सदर्शित स्नेहो यथा वायुसुते पर ॥ ६४९ ॥

समब्रवीत्स म तिभ्रान् हतमप्यहत बल ॥
आसञ्जीवयन्यथा तु जीवतोऽपि मृता वय ॥६५

तत स वृद्ध श्री मत जाम्बवत महामति ॥
पादौ गृहीत्वा शिरसा हनूमानभ्यवादयत् ॥ ६५१ ॥

तमब्रवीच्छ रा र्ते॰ स आगच्छ हरिसत्तम ॥
पर्याप्तविक्रमो नायस्त्व सर्वांस्त्रातुमर्हसि ॥ ६५२ ॥

त्वमेषा पर म त्राता सखा सर्वान् प्रहर्षय ॥
विशल्यौ कुरु चाप्येतौ सशल्यौ रामलक्ष्मणौ ॥ ६५३ ॥

हिमवत द्रा ज नेय क्षिप्र गच्छ महाबल ॥
कैलासर्षभयोर्मध्ये महानोषधिपर्वत ॥ ६५४ ॥

तत्रस्थामान य क्षिप्र मृतसजीवनीं तथा ॥
दिव्या सुवर्णसधानविशल्यकरणीरपि ॥ ६५५ ॥

गृहीत्वा तास्त्व रा युक्तश्चतस्त्रस्त्व महौषधी ॥
आगच्छ योजयित्वैना प्राणैराश्वासयस्वकान् ॥ ६५६ ॥

एवमुक्त स म रुत पुत्र उत्थाय सत्वर ॥
त्रिकूटशिखराद्व्योम्नि वेगादाप्लुवे हरि ॥ ६५७ ॥

तस्य भा रे ज गतीधरो भमो महानपि ॥
लका ऽभव मनुत्येव भग्नग्रगृहगोपुरा ॥ ६५८ ॥

गत्वा जवेन य स्तेन प्रोक्त ओषधिपर्वत ॥
स योजनसहस्राणि प्रापातीत्य महाकपि ॥ ६५९ ॥

तदौषध्यस्तु ज ग्मुस्ता मर्त्त्यदर्शनमार्गिन ॥
विनायागतमुद्वे स क्रोध चक्रेऽनिलात्मज ॥ ६६० ॥

तमुत्पाटय इव यच्छैराभे नग तमम ॥
परयदोर्वलमित्युक्त्वा शृग तस्योन्ममाथ स ॥ ६६१ ॥

तं प्रगृह्य ध रा ग्रस्य शिखर नगनागवत् ॥
जगाम लका जवन पवनस्य सुतो हरि ॥ ६६२ ॥

रराज तेन म रुत सूनु शृगेण खे तया ॥
यथा धृतेन चक्रेण विष्णुस्तेजस्विना प्रभु ॥ ६६३ ॥

---

१ नारकाल (मसु)

दृष्ट्वाऽऽगतं तं श्री मत निनेद् रूपयो मुदा ॥
ननाद सोऽपि महता हर्षेण कपिकेसरी ॥ ६६८ ॥

निपपात ध रा या स विकटस्य मरुत्सुत ॥
नवा हर्युत्तमेभ्योऽथ ससर्ज तं विभीषण ॥ ६६० ॥

महौषधीना म मृत गंधमाघ्राय राघवौ ॥
अभूतांविशल्यौ तावुत्तस्थुरितरेऽपि ते ॥ ६६६ ॥

हूतरत्नाति ज ल्धौ रात्रौ रावणाज्ञया ॥
क्षिप्तानि तेन नोत्तस्थुस्तान्यस्थोपावेगधत ॥ ६६७ ॥

स वायोस्तत्त य स्तूर्ण गगमोषधिभृत ॥
हिमवत निनायाथ पुन प्रगाजगाम च ॥ ६६८ ॥

ततस्ते वान रा उल्का समादाय महौजस ॥
सुग्रीवस्याज्ञया पुर्या समनुर्लङ्घ्न रुषा ॥ ६६९ ॥

ददाह लङ्का म नल कल्पात इव दु सह ॥
स्वनो रक्ष स्त्रीजनस्य शुश्रुवे शतयोजन ॥ ६७० ॥

विनिर्गतान् र ज न्या ते राक्षसान्बहिराकुलान् ॥
जघ्नु प्लवगा कोपेन शिलाभि शिखरैर्द्रुमै ॥ ६७१ ॥

रावण प्र प कुद्धकालकल्पो वनेर्भृतौ ॥
कुंभकर्णस्य तनुजौ प्रेषयामास दारुणौ ॥ ६७२ ॥

चक्रतु सह ज न्य तैर्वानरैस्तुमुल तदा ॥
वीरौ कुम्भनिकुंभौ तौ शक्रशत्रू महाबलौ ॥ ६७३ ॥

कपनो विज य श्रीमान् क्रुद्धो युद्धोद्यतस्तदा ॥
अंगद ताडयामास मर्मस्वग्रतरै शरै ॥ ६७४ ॥

अगदो भूध रा ग्र प्रगृह्य रणकर्कश ॥
कपन सूदयामास प्रजघ चापि मुष्टिना ॥ ६७५ ॥

मैंदो यूपाक्ष म वधीत्केसरीव महागज ॥
द्विविद शोणिताक्ष च गरुत्मानिव पन्नग ॥ ६७६ ॥

ततः स कुंभः श्री मान्तं शरैः समभिरादं ॥
विद्धा मर्मणि तेजस्वी पातयामास मूर्च्छितं ॥ ६७७ ॥

सुग्रीवस्तं दु रा धर्ष कुंभ निजबलांतक ॥
युद्ध कृत्वा धनुर्भक्त्वा प्रसन्नमतिरब्रवीत् ॥ ६७८ ॥

त्व रावणात्म य स्तात समोऽद्भुतपराक्रमः ॥
प्रल्हादबलिवृत्रघ्नकुबेरवरुणोपमः ॥ ६७९ ॥

कुंभकर्णात्म ज स्तस्य श्रुत्वा वाक्यं महाबलः ॥
बाहुयुद्ध चिर चक्रे सुग्रीवेण सहाद्भुतं ॥ ६८० ॥

सुग्रीवोऽथ ज य प्रेप्सुः कुंभमुत्क्षिप्य सागरे ॥
पातयामास वेगेन तल तस्य प्रदर्शयन् ॥ ६८१ ॥

उत्पत्य साग रा त्कुंभः सुग्रीवमतिवेगवान् ॥
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ६८२ ॥

वानरेंद्रः स म न्युस्तं विशाले वक्षसि स्वय ॥
मुष्टिनैव प्रहृत्याशु व्यसु चक्रे रणाजिरे ॥ ६८३ ॥

ततः कुंभानु ज न्माऽपि निकुंभः कालसन्निभः ॥
जग्राह परिघं घोर वज्रादप्यतिदारुणं ॥ ६८४ ॥

तं दृष्ट्वा सभ य स्तांता वानरा राक्षसा अपि ॥
न शेकुः स्पंदितु तस्य हनूमानग्रतः स्थितः ॥६८५॥

स बली वात ज स्याग्रे परिघं भास्करप्रभ ॥
स्थिरे विशाले क्रोधांधः पातयामास वक्षसि ॥६८६॥

परिघः स वि य त्युल्काशतव प्रबभौ तदा ॥
विकीर्यमाणः शतधा वक्ष आहत्य मारुतेः ॥ ६८७ ॥

मारुतिस्त सु रा र्ति ताडयामास मुष्टिना ॥
पुस्फोट चर्मवर्मास्य बहु सुस्राव शोणित ॥ ६८८ ॥

स निजग्राह म रुतः पुत्रं तस्य पिता यथा ॥
सुग्रीवं तं गृहीत्वाऽथ नाद चक्रे भयंकरं ॥ ६८९ ॥

---

१ राक्ष. २ कवच.

पातस्य सूनुः श्री मान्स ह्रियमाणोऽपि तं रिपुं ॥
आजघानोरसि वली वज्रकल्पेन मुष्टिना ॥ ६९० ॥

पातितस्याचि रा द्रक्षस्युत्पत्योच्चैर्निपत्य सः ॥
उत्पाटयामास शिरो भैरवं नदतो महत् ॥ ६९१ ॥

खरस्य पुत्रो म हता बलेन महसाऽन्वितः ॥
मकराक्षो ययौ योद्धुं रावणस्याज्ञयोद्धतः ॥ ६९२ ॥

ते तेन भग्ना ज ल्दा वातेनेव प्लवंगमाः ॥
संभ्रांतमनसः सर्वे दुद्रुवुर्भयपीडिताः ॥ ६९३ ॥

तं वानरक्ष य करं वाचालं खरनंदनं ॥
अमचस्त्रेणावधीद्रुद्रदत्तशूलवरं प्रभुः ॥ ६९४ ॥

पुनर्वचध रा रातिः क्रुद्धस्य पितुराज्ञया ॥
यज्ञभूमौ जुहावाग्निं रणे विजयसिद्धये ॥ ६९५ ॥

स मेघनादो म हता ब्रह्मास्त्रेणाभिपालितः ॥
जाज्वल्यमानं स्वरथमारुरोह महास्त्रवित् ॥ ६९६ ॥

अंतर्हितो रा ज पुत्रो शरैः श्रीरामलक्ष्मणौ ॥
विव्याध यूथपान् सर्वान् प्लवंगांश्च नभोगतः ॥६९७॥

राघवावपि य त्नेन तिग्मान्मुमुचतुः शरान् ॥
निकृत्य तं शक्रजितं पेतुस्ते शोणिताप्लुताः ॥६९८॥

तेनातिविद्धौ न नितव्रणदेहौ रणांगणे ॥
बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ६९९ ॥

सुमित्रातन य स्तत्र क्रुद्धः श्रीराममब्रवीत् ॥
ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसां ॥ ७०० ॥

पत्तीकस्याप रा धेन न सर्वान्हन्तुमर्हसि ॥
इत्युवाच तदा रामः क्रुद्धो विद्धः स्वैः शरैः ॥७०१॥

त्वरयैवाहं प्र म थने यत्नमद्य महाभुज ॥
करिष्यामीति चोवाच लक्ष्मणं पुण्यलक्ष्मणं ॥७०२॥

दिव्यास्त्रवेत्ता श्री मान्मां हनिष्यत्येव सर्वथा ॥
इति ज्ञात्वेंद्रजिन्तूर्णं प्रविवेश पुरीं ततः ॥ ७०३ ॥

निकुंभिल्यां सु रा रात्रिंगनुकामो महाखलः ॥
स प्रादुर्भावयामास सीतां मायामयीं रथे ॥ ७०४ ॥

निर्गय पथि म द्वाराद्दृष्ट्वा युद्धोद्यतौ प्रभु ॥
तद्वारणार्थं तां मायां स प्रादुरकरोदरिः ॥ ७०५ ॥

तन्यां सीतामां ज नेयो मन्यमानो हरिद्विपा ॥
गृहीतमूर्द्धजां दृष्ट्वा हंतुकाम तमब्रवीत् ॥ ७०६ ॥

धकूवां दुष्कर्म य स्यैतात्कि तवापकृतं खल ॥
साध्वीं जनकजां सीतां यदेनां हंसि निर्घृण ॥ ७०७

सीतां हत्वाऽप रा धी त्वं न जीविष्यसि जातुचित् ॥
वधार्हकर्मणा तेन मम हस्तगतो ह्यसि ॥ ७०८ ॥

इति ब्रुवाणो म रुतस्तनयो हरिभिः सह ॥
अभ्यधावत्सुसंक्रुद्धो राक्षसेंद्रसुत प्रति ॥ ७०९ ॥

स तं क्षेरमा ज लिकनाराचैः कपिवाहिनीं ॥
न्यवारयत् क्षोभयित्वा हनूमंतमथाब्रवीत् ॥ ७१० ॥

न हतव्याः स्त्रिय श्चेति यद्ब्रवीषि प्लवंगम ॥
पीडाकरममित्राणां यच्च कर्तव्यमेव तत् ॥ ७११ ॥

यन्निमित्तं त्वं ज लधिं तीर्त्वा रामः सलक्ष्मणः ॥
सुग्रीवश्चांगदश्चेमे कपयश्च समागताः ॥ ७१२ ॥

इमां हत्वा त्व य मद्य त्वां रामं च सलक्ष्मणं ॥
सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणं[1] ॥ ७१३ ॥

तमेवमुक्त्वाऽ रा निरं रुदतीं जानकीं तदा ॥
शितधारेण खड्गेन निजघानेंद्रजित्स्वयं ॥ ७१४ ॥

छिन्ना पपात सा सा रा रोनसुकरा तपस्विनी ॥
तामिंद्रजित्तथा हत्वा ततो मारुतिमब्रवीत् ॥ ७१५ ॥

---

१ हात [illegible].

पेया हताऽति श्री रेषा प्रिया रामस्य जानकी ॥
पश्य वानर सर्वोऽयं निष्फलो वः परिश्रमः ॥७१६॥

तच्छ्रुत्वा वान रा स्तस्य दुर्मतेर्गर्जितं तथा ॥
दृष्ट्वा निशस्तां सीतां च दुद्रुवुर्हतवादिनः ॥ ७१७ ॥ २

निवृत्ता हनु म द्वाक्यैस्तं पुरस्कृत्य यूथपाः ॥
रक्षसां कदनं चक्रुः शिलाशिखरपादपैः ॥ ७१८ ॥

दृष्ट्वा शिलामां ज नेयक्षिप्तां वेगेन रावणिः ॥
तस्माद्देशादपाक्रम्य निवेश देवद् भुवं ॥ ७१९ ॥

निपतंत्या क्ष य स्तेषां रक्षसां शिलया कृतः ॥
चापो रावणिना दंडः कालेनेव तदा धृतः ॥ ७२० ॥

मनुः क्रूराः श रा स्तस्य बहून्वानरपुंगवान् ॥
स मारुतिः प्लवगाश्च शिलाभिर्भूरुहैः परान् ॥७२१॥

स हनुमान्प्र म थितं रक्षोऽनीकं निवार्य तत् ॥
यूथपानब्रवीत्सर्वान्निवर्तध्वं प्लवंगमाः ॥ ७२२ ॥

यन्निमित्तं नि ज प्राणास्त्यक्त्वा युध्याम आकुलाः ॥
सा हतेंद्रजिना सीता युद्धेन निष्फलेन किं ॥ ७२२ ॥

ज्ञात्वाऽऽदावपि य मिदं मह त्सुग्रीवराघवौ ॥
तौ यत्प्रतिविधास्येते तत्करिष्यामहे वय ॥ ७२४ ॥

इति युद्धाद्दो ज नेय निवृत्त हरिभि. सह ॥
दर्शेंद्रजिद्धोतुकामो गतश्चैत्य निकुंभिलां ॥ ७२५ ॥

हुतो धनंज य स्तेन यज्ञभूमौ विधानतः ॥
संध्यागत इवादित्य उ त्थितो रक्ततर्पितः ॥ ७२६ ॥

तस्य तेऽनुच रा स्तत्र राक्षसाः सुमहाभयाः ॥
तस्युस्तत्क्षणे युत्ता गृहीतनिविधायुधाः ॥ ७२७ ॥

हनूमता प्र म थने प्रियाया विनिवेदिते ॥
पपात सहसा भूमौ राघवः शोकमूर्छितः ॥ ७२८ ॥

---

१ हा इति २ शिला. ३ यत्न. ४ नगरी विशेष.

रामं सुशीतैः श्री मतमसिचन् वानरा जलै ॥
आश्वासयामास तदा त परिष्वज्य लक्ष्मणः ॥७२९॥

सीताशोकप रा धीने रामे खिन्ने कपीश्वरे ॥
गुल्मान् संस्थाप्य परित आजगाम विभीषणः ॥७३०॥

स श्रुत्वोवाच म तिमान् राघव शोकपीडित ॥
राम मायाविना तेन सीता मायामयी हता ॥ ७३१ ॥

निकुंभिलां वि ज यद याग कर्तुं गतो ध्रुव ॥
गच्छामस्तत्र यावन्न तस्य होम. समाप्यते ॥७३२॥

त्वं स्वस्थहृद य स्तिष्ठ लक्ष्मण प्रेषय द्रुत ॥
रावणिर्निर्मिते यागे ध्रुव वध्यो भविष्यति ॥ ७३३ ॥

तस्य सादिश रा जेंद्र सौमित्रिं कार्यसिद्धये ॥
हनिष्यत्येष त युद्धे ततस्त्वमपि रावण ॥ ७३४ ॥

ततो रामस्त म त्यतप्रिय लक्ष्मणमाशिषा ॥
वर्धयित्वाऽहित हतु प्रेषयामास सत्कृत ॥ ७३५ ॥

यूथपैर्वात ज मुखै सर्क्षराजविभीषण ॥
प्रणम्य राम सौमित्रिर्जगाम बलसवृत ॥ ७३६ ॥

कपजन्तयोद्य म प्रदय व्यूहमासाद्य रक्षसा ॥
तस्थौ ब्रह्मविधानेन विजेतु रघुनदन ॥ ७३७ ॥

निशाचरा नि ज घ्नुस्ते शस्त्रैरस्त्रैः प्लवंगमान् ॥
तानृक्षा वानराश्चापि प्रावभिः शिखरैर्गे ॥ ७३८ ॥

रा समरास्य य त्नेन तेषा वानररक्षसा ॥
बभूव तुमुलो ऽन्योन्य क्रुद्धानामभिनिघ्नता ॥ ७३९ ॥

उत्तस्थौ सु दु रा धर्षो निपग्णे निहते बले ॥
आरुरोह रथ भीममसामानाश्रियो नृपा ॥ ७४० ॥

सामनिस्तत्र म हा पादपेन महायन ॥
रक्षणं पदा तगे त तौ राघि र्ते ॥ ७४१ ॥

विभीषणेन श्री मान् स भ्राता रामस्य लक्ष्मणः ॥
नाहि रावणिमिन्मुक्तो दर्शयित्वा रणोद्यतं ॥ ७४२ ॥

स रावणिर रा तेस्तं पितृव्यं पक्षमाश्रितं ॥
गर्हयामास वल्हीभिर्दुर्वृत्तः परुषोक्तिभिः ॥ ७४३ ॥

विभीषणोऽपि म तिर्मास्तमुवाचाग्रजात्मजं ॥
दोषालय इव त्यक्तः पिता ते दोषवान्मया ॥ ७४४ ॥

पापस्त्वं मनु ज श्रेष्ठाल्लक्ष्मणान्न विमोक्ष्यसे ॥
नेयमस्ति पुरी लंका न च त्वं न च ते पिता ॥७४५॥

मानी दुराश य श्चासि बालो विनयवर्जितः ॥
बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ॥७४६॥

तस्य सौमित्रि रा हत्वा स्कंधं सूनो र्नभस्वतः ॥
चकार युद्धं तुमुलं तदा रावणिना सह ॥ ७४७ ॥

विभीषणेन म थिता गदया तस्य वाजिनः ॥
तत्सारथेः शिरः कायात्पातयामास लक्ष्मणः ॥ ७४८॥

तमाह मनु ज त्व न क्षमः स्थातुं ममाग्रतः ॥
त्वामहं प्रेषयिष्यामि न चिराद्यमसादनं ॥ ७४९ ॥

लक्ष्मणोऽविन य क्रौर्यमायाऽक्षमैत्रशंवदं ॥
उवाच रावणि युद्ध कुरु त्वं किं विकत्थसे ॥ ७५०॥

मां नेतुं कोऽपि ज गति क्षमो नास्ति निशाचर ॥
वाचा व्याहत्य नानीषे कृतार्थोऽस्मीति दुर्मते ॥७५१॥

अंतर्हितेन य त्स्वच्छ भवताऽऽचरितस्तदा ॥
तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥ ७५२ ॥

पुरतस्तेऽस्म्य रा तेऽहं स्थितो मार्गणगोचरे ॥
दर्शयस्वाद्य तत्तेजो वाचा किं त्वं विकत्थसे ॥७५३॥

इत्युक्तः सोऽन्य म र्षेण रावणिः समितिंजयः ॥
युद्धं चकार तुमुलं तेन सौमित्रिणा सह ॥ ७५४ ॥

---

१ वायु

भमे शैतांगे श्री मान्स लंकां गत्वा नजं रथं ॥
समास्थायाभ्ययात्तूर्णं परैरनुपलक्षितः ॥ ७५५ ॥

रक्षोवर्के श्रा रा सारैः प्रममर्द विभीषणः ॥
चतुर्भिः सचिवैः सार्द्धं मारुतिश्च द्रुमोपलैः ॥७५६॥

शस्त्रैरस्त्रैः स म र्थस्तं युद्धं कृत्वा स लक्ष्मणः ॥
ऐन्द्रास्त्रेण जघानाजाविंद्रशत्रुं महाबलं ॥ ७५७ ॥

कृते शिरोबु ज छेदे रावणेरमराधिपः ॥
मुमुदे सह लोकैश्चैनेदुर्दुंदुभयो दिवि ॥ ७५८ ॥

पुष्पवृष्टिर्वि य त्संस्थैः कृता लक्ष्मणमूर्धनि ॥
अप्सरा ननृतुर्मुख्या गधर्वा ललितं जगुः ॥ ७५९ ॥

पादार्पितशि रा भ्राता रामेणाऽऽलिंगितो मुदा ॥
निर्भिणेनेंद्रजितो वधस्तस्मै निवेदितः ॥ ७६० ॥

मूर्न्युपाघ्राय म र्माणि व्रणितानि पराशुगैः ॥
परपर्श सदय साश्रु श्रीरामो भक्तवत्सलः ॥ ७६१ ॥

अंकमारोप्य ज नकः प्रियं पुत्रमिवानुजं ॥
रामोऽब्रवीदहोरात्रैस्त्रिभिः कृच्छ्राद्धतो रिपुः ॥७६२॥

निरमित्रोऽहं य शस्वी कृतोऽस्म्यद्य त्वया ध्रुवं ॥
त्वया नाथेन दुष्प्रापे सीता भूश्च न लक्ष्मण ॥७६३॥

इत्युक्त्वा मनु ज श्रेष्ठः सुषेण हरिमब्रवीत् ॥
विशल्यः क्रियतां क्षिप्रं सौमित्रिर्मित्रवत्सल ॥७६४॥

रामोक्तः प्र य त्नेन स पट्टर्हरियूथप. ॥
लक्ष्मणाय ददौ नस्तः सुषेण. परमौषधं ॥ ७६५ ॥

आघ्राय रा जीवन्मोचनस्तस्य तत्क्षण ॥
निर्वेदनो विशल्यश्च समपद्यत लक्ष्मणः ॥ ७६६ ॥

प्लवंग य श्रेष्ठाः सामात्यश्च विभीषणः ॥
कृता विशल्या मुदिताः सुषेणेन महात्मनः ॥७६७॥

---

२ नाराष्ट्र.

रामोऽतिदृष्टः श्री दस्य भ्राता शोकाकुलोऽभवत् ॥
सीतां हंतुं प्रगृह्यासिमशोकवनिकां ययौ ॥ ७६८ ॥

सीता दृष्ट्वा ख रा सिं तं भीता सस्मार राघवं ॥
आर्यां शुशोच कौसल्यां मंथरां च निनिंद सा॥७६९॥

सुपार्श्वा नाम म तिमानमात्यः शीलवांस्तदा ॥
वारयामास तं सीतावधात्सूक्तिशतैर्मतैः ॥ ७७० ॥

सतो ज्येष्ठात्म ज स्यातिशोकव्याकुलमानसः ॥
राक्षसान्प्रेषयामास हंतुं दाशरथी रणे ॥ ७७१ ॥

चलच्छिलोच्च य निभा महोत्साहा महौजसः ॥
दशाननप्रिये युक्ता मुक्ताश्चापादिवेपवः ॥ ७७२ ॥

लब्धलक्षाः सु रा णां ये युद्धे कज्जलमेचकाः ॥
नरमांसाशनाः क्रूराः शूराः परिघबाहवः ॥ ७७३ ॥

चतुरंगेण म हता बलेन परिवारिताः ॥
महाबलाः कवचिनः सर्वामरसुदुःसहाः ॥ ७७४ ॥

ते रावणस्यां ज लिना प्रहिता अहिता दिवः ॥
त्यक्तप्राणा विनिर्गत्य युयुधुर्विविधायुधाः ॥ ७७५ ॥

नानाजावज य न्कीशा दाशरथ्योश्च मार्गणाः ॥
गता यमक्षयं सर्वे मत्ताः सत्तापहेतवः ॥ ७७६ ॥

अन्योऽन्यमेव ज घ्नुस्ते रामसादृश्यमोहिताः ॥
गांधर्वास्त्रे संप्रयुक्ते राक्षसा विलयं गताः ॥ ७७७ ॥

याणैः कौसल्ये य मुर्फैर्मुहूर्तद्वयतो रणे ॥
सप्ता कोट्यस्तथैकोनत्रिंशल्लक्षाणि सद्रथाः ॥ ७७८ ॥

हताश्च कुंज रा मत्तास्ते सहस्राणि विंशतिः ॥
तथा द्वादश लक्षाणि तथैव दश कोटयः ॥ ७७९ ॥

पत्तिस्तुरंग म वराः सहस्राण्यथ विंशतिः ॥
लक्षाणि वे दशशतकोटिसंख्याः प्रमर्दिताः ॥७८०॥

---

१ अळे ( मिचकुट ). २ अडसर.

पदातयश्च श्री शेन निहताः शतकोटयः ॥
पंचचत्वारिंशदष्टाशीतिर्लक्षाणि चाहवे ॥ ७८१ ॥

सिद्धर्षयः सु रा श्चैव गंधर्वाश्चारणास्तथा ॥
साधुसाध्विति रामस्य तत्कर्म समपूजयन् ॥ ७८२ ॥

उवाच रामो म धुरं सुग्रीवादीन्प्रति प्रभुः ॥
एतदस्त्रबलं भीमं मम वा त्र्यंबकस्य वा ॥ ७८३ ॥

हत्वा रक्षोरा ज सेनां शस्त्रास्त्रेषु जितक्लमः ॥
सस्तूयते स्म त्रिदशैरामो हृष्टैर्महर्षिभिः ॥ ७८४ ॥

राक्षसानां क्ष य स्तेन रावणेन श्रुतो महान् ॥
विलापो राक्षसीनां च शोकार्तानां सुदुःसहः ॥७८५॥

शोकक्रोधप रा धीनो दशकंठस्ततः स्वयं ॥
नगरान्निर्ययौ हंतुं सबली रामलक्ष्मणौ ॥ ७८६ ॥

वृतः सैन्येन म हता रथारूढो महाबलः ॥
महोदरमहापार्श्वविरूपाक्षैः समन्वितः ॥ ७८७ ॥

स्यंदनेन प्र ज्व लितप्रवराष्टहयेन सः ॥
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ७८८ ॥

तदोत्पाता भ य स्याराःसूचका बहवोऽभवन् ॥
निष्प्रभोऽर्कः शिवा नेदुश्चस्खलुश्चास्य वाजिनः ७८९ ॥

राजराजानु ज मरि दृष्ट्वाऽऽयांतं प्लवंगमाः ॥
निनेदुर्यातुधानाश्च घोरमंभोधरा इव ॥ ७९० ॥

रावणेन क्ष य श्चक्रे कपीनां भूयसां शरैः ॥
परैः सोढुं न ये शक्या यैः सुरा विजिताः खरैः ७९१ ॥

सुग्रीवो वान रा धीशः प्रतापी पादपायुधः ॥
प्रतस्थेऽभिमुखं सार्द्धं यूथपैर्दशकंधरं ॥ ७९२ ॥

ननर्द सुभी म न्मृधः स्वरेण महता महान् ॥
पोथयन् राक्षसान् शिष्टान् दशग्रीवपुरःसरान् ॥७९३॥

---

ननर्द.

रक्षोप्रलेपु श्री मानुत्त वृष्टि चक्रे महीभृतां ॥
ममर्द ताम्महावातः प्रवृद्धानगमानिव ॥ ७९४ ॥

विरूपाक्षं दु रा पांत कपिकपप्रदायुधं ॥
वानरेंद्रो व्यसु चक्रे त च वीर महोदरं ॥ ७९५ ॥

महापार्श्वस्य म थन वालिनस्तनयोऽकरोत् ॥
चकार कोप तद्दृष्ट्वा राक्षसानामधीश्वरः ॥ ७९६ ॥

तामसास्त्रेण ज गतो विधात्रा निर्मितेन सः ॥
हत्वा विद्राव्य च कपीन्महून् राममुपाययौ ॥ ७९७ ॥

सुमित्रातन य स्तेन रावणेन सह स्वय ॥
युयुधे प्रथम वीरो राहुणेव निशाकरः ॥ ७९८ ॥

सर्ती शतैः श रा णां त व्याकुलीकृत्य लक्ष्मण ॥
व्यसृजच्छरवर्षाणि राममासाद्य रावण ॥ ७९९ ॥

भल्लैश्चिच्छेद म हतः शरौघांस्तस्य राघवः ॥
विव्याध राम स पुन. शरैर्दर्शितलाघवः ॥ ८०० ॥

रावणे व्यसृ ज द्रामः शरवर्षाणि सतत ॥
रामेऽपि रावणो वीरावुभौ शस्त्रास्त्रपारगौ ॥ ८०१ ॥

अस्त्रप्रयोगं य त्तौ तौ चक्रतुर्युद्धपडितौ ॥
खडितौ यौ न कुत्रापि समरे जयमंडितौ ॥ ८०२ ॥

लक्ष्मणोऽथ ध्व ज च्छेदं शिरश्छेदं च सारथेः ॥
ततश्चक्रे धनुश्छेद सायकैर्जयदायकैः ॥ ८०३ ॥

विभीषणो ह य श्रेष्ठान् भ्रातुर्ज्येष्ठस्य सगरे ॥
जघानाप्लुत्य गदया न दयाऽस्यतिपापिनि ॥ ८०४ ॥

ततः सरत रा माशु क्रोधादशनिसन्निभां ॥
विभीषणाय चिक्षेप शक्ति शक्तिमतां वरः ॥ ८०५ ॥

अप्राप्तामेव म ध्ये तां लक्ष्मणस्त्रिभिराशुगैः ॥
चिच्छेद खेदयन्युद्धे दशकठस्य मानस ॥ ८०६ ॥

अन्यां च शक्र श्री हर्ता शक्तिं जग्राह दारुणां ॥
भ्रातु त्रिभीषण तस्याग्रतस्तस्य लक्ष्मणः ॥ ८०७ ॥

तमुवाच ग रा सारिंदष्टादयतं स रावणः ॥
त्रिभीषणो मोक्षितश्चेत्त्वयाय विनिपात्यते ॥ ८०८ ॥

इत्युक्त्वा शक्ति म त्युग्रां चिक्षेप मयनिर्मितां ॥
मोघा भवेति रामोक्ता तद्वक्षासि ममज्ज सा ॥ ८०९ ॥

पपात मोह ज नयन् रामेऽपि भुवि लक्ष्मणः ॥
न विषादस्य कालोऽयमिति संचिंत्य राघवः ॥ ८१० ॥

कौसल्यातन य श्चक्रे तुमुलं युद्धमोजसा ॥
विचकर्ष ततः शक्तिं तां विकृष्य बभंज च ॥ ८११ ॥

तदा खराः श रा स्तस्य शक्तिं निष्कर्षतोऽरिणा ॥
कनीयसा दशास्येन गात्रे रामस्य पातिताः ॥८१२॥

अचिंतयित्वा म र्मग्रांस्तानिघ्नरिणेरितान् ॥
समाश्लिष्यानुज राम- सुग्रीवादींस्तदाऽब्रवीत् ॥ ८१३॥

परिवार्यैव ज न्येऽमु तिष्ठध्वं वनौकसः ॥
यावद्धर्म्यंहित कालः प्राप्तोऽय मे चिरेप्सितः ॥८१४॥

जातोऽक्षिविप य श्चाय नैव जीवितुमर्हति ॥
विनतातनयेनेव दृष्टो दुष्टो भुजंगमः ॥ ८१५ ॥

करिष्यामि वि ज गति ख्यातं कर्माद्य यत्सुराः ॥
नराश्च कथयिष्यंति यावद्भूश्चंद्रभास्करौ ॥ ८१६ ॥

एवमुक्त्वा ता य कौघैराजघान दशानन ॥
स साध्वसात्प्रदुद्राव यथा वातहतोऽम्बुदः ॥ ८१७ ॥

दशग्रीव प रा भूय केसरीव महागज ॥
ददर्श करुणासिंधुर्लक्ष्मण मूर्च्छित भुवि ॥ ८१८ ॥

ततः सुषेण म गेदकार रघुवरोऽब्रवीत् ॥
लक्ष्मणोऽथ यदि मृतः प्राणैः किं मे प्रयोजन ॥८१९

---

१ देख.

तदा सुषेण श्री मंतं तं हनूमंतमब्रवीत् ॥
गच्छ तात द्रुतं त्वं ता ओषधीः पुनरानय ॥ ८२० ॥

गत्वा शृंग ध रा भृत्यो गृहीत्वा पुनरागतः ॥
सुषेणस्तं प्रशस्याथ गृहीत्वा तां महौषधिं ॥ ८२१ ॥

संक्षोदयित्वा म तिमांस्तद्रसं सोऽमृतोपमं ॥
लक्ष्मणाय ददौ नस्तो नस्तो यस्मान्मृतिव्यये ॥८२२॥

विशल्यो विरु ज स्तूर्णमुदतिष्ठत्स लक्ष्मणः ॥
तमालिंग्याभवद्रामो बाष्पपर्याकुलेक्षणः ॥ ८२३ ॥

प्रहृष्टा हर य स्तं ते पूजयामासुरन्वितं ॥
रामरावणयोर्युद्धं प्रवृत्तं पुनरद्भुतं ॥ ८२४ ॥

भूमौ स्थितस्य रा मस्य रथस्थस्य च रक्षसः ॥
न समं युद्धमित्याहुर्देवगंधर्वकिन्नराः ॥ ८२५ ॥

तच्छ्रुत्वा शत म न्युः स्वं ससारथिं सूतमब्रवीत् ॥
मातले गच्छ राम त्वं मद्रथे स्थापयाभिमाते ॥ ८२६ ॥

शक्राज्ञया मां त लिना प्रार्थितस्तेन राघवः ॥
आरुह्य स्यंदनं दिव्यं युयुधे सह रक्षसा ॥ ८२७ ॥

गांधर्वमथ य दैवमस्त्रं राक्षसमद्भुतं ॥
प्रयुक्तमरिणा रामः प्रत्यस्त्रेण जघान तत् ॥ ८२८ ॥

स चकार ध्व ज'च्छेदं मर्दयित्वा प्रभुं शरैः ॥
ऐन्द्रानपि जघानाश्वान् विद्धा मर्मसु मातलिं ॥८२९॥

त्रिदशा अप य स्त्रस्ता दृष्ट्वाऽऽर्तं रघुनंदनं ॥
व्यथिता वानरेंद्राश्च बभूवुः सविभीषणाः ॥ ८३० ॥

तदा क्रूरत य जाता उत्पाता बहवो रणे ॥
जगाम सुमहाक्रोधं रामस्तामरसेक्षणः ॥ ८३१ ॥

तस्मिन्क्रुद्धे स म र्थे भूः प्राकंपत सपर्वता ॥
सर्वभूतानि वित्रेसुः क्षुभितः सरितांपतिः ॥ ८३२ ॥

---

१ नाराचान.

शूलं गृहीत्वा श्री दस्य भ्राता परमदारुणं ॥
हतोऽसीति ब्रुवन् रामं प्रति चिक्षेप कोपतः ॥८३३॥

दग्धुऽऽत्मनः श रा न् घोरानापतंतं महाप्रभं ॥
रामो वासवशक्त्या तं शूलं चिच्छेद भीमया ॥८३४॥

शरैस्तुरंग ष्म श्रेष्ठांस्तस्य विद्ध्वा रघूत्तमः ॥
निर्बिभेदोरसि क्रूरं ललाटेऽपीषुभिस्त्रिभिः ॥ ८३५ ॥

रामोऽपि प्रति ज्ञ ग्राह शरानुग्रस्य रक्षसः ॥
दृष्टः शोणितदिग्धांगः स फुल्ल इव किंशुकः ॥८३६॥

कौसल्यातन य स्यास्य छित्वा शस्त्राण्युवाच तं ॥
शून्याश्रमात्त्वया चौरचर्यया राक्षसाधम ॥ ८३७॥

भार्या मम म रा मृष्टा तस्मात्त्वं नासि वीर्यवान् ॥
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनं ॥ ८३८ ॥

गर्वमद्य स म स्तं ते संहर्तुं शिरसा सह ॥
स्थितोऽस्मि पुरतस्तिष्ठ त्वं पाप पुरुषो भव ॥८३९॥

एवमुक्त्वा भ्रा त्र मानैस्ताडयामास तं शरैः ॥
कपयश्चाश्मभिर्जघ्नुः स तदा व्याकुलोऽभवत् ॥८४०॥

सारथिः सुमि य स्तस्य तदवस्थं निरीक्ष्य तं ॥
शनैर्युद्धादसंभ्रांतः शतांगं स न्यवर्तयत् ॥ ८४१ ॥

स मोहमुक्तो व नितक्रोधो धिक्कृत्य सारथिं ॥
उवाच परुषं माऽयं कालनष्टमातोहि यत् ॥ ८४२ ॥

सूतस्तमाह य राजन्कश्मलं त्वयि संगरे ॥
दृष्टं मया न तत्पूर्वं तेन त्वमपवाहितः ॥ ८४३ ॥

यद्वदस्यद्य रा जन्मां तत्करिष्याम्यसंशयं ॥
नाहं भीतो भेदितो वा स्नेहेनैतत्कृत मया ॥८४४॥

श्रुत्वेति वाक्य म धुरं प्रसन्नहृदयोऽभवत् ॥
ददौ तस्मै शुभं ह्येकं हस्ताभरणमात्मनः ॥ ८४५ ॥

---

१ "नोपजग्मे" इति वा पाठः

सूतो रथं ते श्री दस्य भ्रातुर्वचनगौरवात् ॥
निनाय रघुवीरस्य पुरतः प्रेरयन् हरीन् ॥ ८४६ ॥

दशाननप रा भूतिंचितया व्यग्रमानस ॥
उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ ८४७ ॥

भो रामभद्र म त्प्रोक्तं शृणु गुह्यं सनातनं ॥
येन सर्वानरीन्वत्स प्रजेष्यसि रणाजिरे ॥ ८४८ ॥

स एवमुक्त्वा ज यदमादित्यहृदयं ददौ ॥
जपित्वा जेष्यस्यद्य त्वं रावणं शक्रशात्रवं ॥ ८४९ ॥

उपदिश्येति य शसाऽनुपमोऽथ जगाम सः ॥
रामोऽपि जप्त्वा स्तोत्रं तत्परं हर्षमवाप्तवान् ॥ ८५० ॥

मूर्तिमानन र धीशो रविः सुरगणे स्थितः ॥
रामं दशाननं हतुं त्वरस्वेति वचोऽब्रवीत् ॥ ८५१ ॥

रामोऽथ शत मा न्योस्तं सारथिश्रेष्ठमब्रवीत् ॥
मातले पश्य सत्वधमापततं रथं रिपोः ॥ ८५२ ॥

तिष्ठाप्रमादो ज न्येऽस्मिन्मत्युद्गच्छ रथं रिपोः ॥
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितं ॥ ८५३ ॥

रथं प्रचोद य क्षिप्रमित्युक्तः स तथाऽकरोत् ॥
चक्रसंभूतरजसा रावणं संव्यधूनयन् ॥ ८५४ ॥

स चापसैरं ज ग्राह शरांश्चार्ककरप्रभान् ॥
युद्धं तयोस्तदाऽऽरब्धं दृप्तयोरिव सिंहयोः ॥ ८५५ ॥

देवाश्च मुन य श्चैव वानरा रजनीचराः ॥
युद्धं समागता दृष्टुं विस्मिताश्चित्रवत् स्थिताः ॥ ८५६ ॥

तदा बभूव रा मोस्तद्द्वैरथं परमाद्भुतं ॥
रामरावणयोर्युद्धं रामरावणयोरिव ॥ ८५७ ॥

जेतव्यमिति य र्मेशो मर्तव्यमिति रावणः ॥
धृतौ स्ववीर्यसर्वस्वं युद्धेऽदर्शयतां तदा ॥ ८५८ ॥

रामः शरेण श्रीमत ध्वज चिच्छेद रक्षसः ॥
तेन तन्मनसि क्रोध. प्रजज्वाल सुदुःसह. ॥८५९॥

वृष्टिं चक्रे श रा णां स क्रुद्धो युद्धोद्यतः प्रभो ॥
नानाविधायुधाना च गिरीणां भूरुहामपि ॥ ८६० ॥

तां वृष्टिं पर म प्राज्ञो रामश्चिच्छेद सायकैः ॥
ततोऽच्छिनत्तस्य शिरः श्रीमज्ज्वलितकुंडल ॥८६१॥

तस्य शीर्षांबु ज च्छेदे दृष्टा देवर्षयो भृश ॥
अन्यत्तेनैव सदृश रावणस्योत्थित शिर. ॥ ८६२ ॥

छिन्न तदपि य त्नेन प्रभुणा क्षिप्रकारिणा ॥
छिन्नमात्र च तच्छीर्षं पुनरेव व्यदृश्यत ॥ ८६३ ॥

एवमेव सु रा रातेस्तुल्याकार शिर.शत ॥
छिन्न रामेण समरे क्षिप्रहस्तेन मार्गणैः ॥ ८६४ ॥

दशकंठस्य म रणमपश्यन् राघवो रणे ॥
चिंतयामास बाणानाममोघाना विपर्यय ॥ ८६५ ॥

सप्तरात्रम ज स्त्र तत्तयोर्युद्धमभून्महत् ॥
उवाच मातलीं राममस्त्र पैतामह प्रभो ॥ ८६६ ॥

अस्त्रप्रणाशा य रिपोर्विसृज त्व रघूत्तम ॥
स्मारित. शक्रसूतेन रामो वीरशिरोमणि ॥ ८६७ ॥

यमगस्त्यो द्वि ज श्रेष्ठो ददौ पूर्वं महाशुग ॥
अभिमन्त्र्य तमेवाशु चिक्षेप ब्रह्मनिर्मित ॥ ८६८ ॥

स तस्य हृद य स्येषुर्भेद कृत्वा महाद्विपः ॥
भुवस्तल विवेशाथो तूणीरं च विनीतवत् ॥ ८६९ ॥

गतप्राणो ध रा यां स राक्षसेंद्रो दशाननः ॥
पपात पापो वज्रेण हतो वृत्र इवाहित· ॥ ८७० ॥

दृष्ट्वा पतित म स्यार्तो हतशेषा निशाचराः ॥
हतनाथा भयग्रस्ता लंकामभ्यपतन् द्रुत ॥ ८७१ ॥

निशाचरास्ते श्री मद्भिर्नदद्भिर्जितकाशिभिः ॥
वानरैर्मर्दिताः क्रुद्धैर्घनाश्च समीरणै ॥ ८७२ ॥

विजये रघु रा जस्य व्यनदद्देवदुंदुभिः ॥
दिव्यगंधवहस्तत्र मारुतः सुसुखो ववौ ॥ ८७३ ॥

वृष्टिस्तदा सु म नसां दिव्यानां निपपात खात् ॥
सुर्पिभिः कृता पुण्या स्तुतीरामस्य शुश्रुवे ॥ ८७४ ॥

मरुद्गणाः प्र ज ग्मुस्ते शमं स्वर्गाय नाजगुः ॥
अगु स्वास्थ्य च लोकेशाः सुप्रभोऽभूत्सहस्रगुः॥८७५॥

रामः प्राप्तज य स्तत्र मुमुदे सकपीश्वरः
भ्रातरं निहतं दृष्ट्वा विललाप विभीषणः ॥ ८७६ ॥

सांत्वितः स गि रा माध्व्या श्रीरामेण महामना ॥
विभीषणस्तं संस्कर्तुं प्रार्थयामास राघवं ॥८७७॥

शांतिर्वैरस्य मे रणं निवृत्तं नः प्रयोजनं ॥
क्रियतामस्य सत्कारो ममाप्येष यथा तव ॥ ८७८ ॥

इत्युवाच त्रि जं गतां नाथो रघुकुलोत्तमः ॥
॥ समं प्रशमकल्पामा सर्वभूतेषु यः सम. ॥ ८७९ ॥

अथ सर्वाब्धि प स्तस्य मृतं श्रुत्वा समीश्वरं ॥
मदोदरीप्रभृतयो विलाप चक्रुराकुलाः ॥ ८८० ॥

अतः पुराद्रा ज भार्या विनिर्ययुः शुचार्दिताः ॥
रणपांसुषु चेष्टंत्यो मुक्तकेश्यो हतेश्वराः ॥ ८८१ ॥

ददृशुस्ताः प्रि य तमं पतितं रणपांसुषु ॥
आलिंग्य रुरुदु. सर्वाः सा च मदोदरी भृशं ॥ ८८२

इंद्रियाणि पु रा जित्वा जितं त्रिभुवनं त्वया ॥
स्मरद्भिरिव तद्वैरमिंद्रियैरेवं विनिर्जितः ॥ ८८३ ॥

न चापि काम म प्राप्य मैथिलीसंगमे कृत ॥
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ॥८८४॥

---

१ सहस्ररश्मि ( सूर्य ). २ मधुरया. ३ प्रेतसंस्कार. ४ पुण्यश्लोक. ५ शोकार्ते.

सीता सतीयं श्री रेव रामो विष्णुर्न मानुषः ॥
हतोऽस्यतिक्रमान्नीतेर्धर्मस्य त्वं महानपि ॥ ८८५ ॥

मैथिली सह रा मेण विशोका विहरिष्यति ॥
अल्पपुण्या त्वह घोरे पतिता शोकसागरे ॥ ८८६ ॥

इत्यतां तस्य म हिषीं तामन्याश्च विभीषणः ॥
सांत्वयामास बहुधा रुदतीः सुदतीः प्रियाः ॥ ८८७ ॥

श्रीकौसल्यात्म ज स्तासां सांत्वनाय् विभीषण ॥
रावणस्य च संस्कारं कर्तुमाज्ञापयत्तदा ॥ ८८८ ॥

नाहं पापाश्र य स्यास्य परदाराभिमर्शिनः ॥
कर्तुमिच्छामि संस्कारमित्युवाच विभीषणः ॥ ८८९ ॥

मैवं ब्रूह्यदा र स्त्व संस्कारं कर्तुमर्हसि ॥
मरणांतानि वैराणि ममाप्येष यथा तव ॥ ८९० ॥

इत्युक्तः स त य थेन श्रीरामेण विभीषणः ॥
विधिवत्तस्य संस्कारं चकार विधिकोविदः ॥ ८९१ ॥

सांत्विताास्तेन ज ग्मुस्ताः स्त्रियः सर्वाः स्वकान्गृहान् ॥
विभीषणे रामपार्श्वंस प्रातिष्ठद्विनीतवत् ॥ ८९२ ॥

आज्ञां दत्वा न य रथं शक्रपार्श्वमिति प्रभुः ॥
मातलिं पूजयामास सत्काय तं शतक्रतोः ॥ ८९३ ॥

रामचंद्रो ऽनु ज मथ प्रोवाच शुभलक्षणं ॥
विभीषणमिमं सौम्य लंकायामभिषेचय ॥ ८९४ ॥

कामो मे ह द य स्थोय परमो यद्विभीषण ॥
पुरेभिषिक्तं पश्येय प्रियं पूर्वोपकारिणं ॥ ८९५ ॥

सौमित्रिर्वान रा न्दत्वा घटान्हैमात्मनो जवान् ॥
व्यादिदेश समुद्रेभ्यः सलिलानयनं द्रुतं ॥ ८९६ ॥

जलैः प्लवंग म श्रेष्ठैरानीतैस्तं विभीषणं ॥
अभ्यषिचत्प्रसन्नात्मा लक्ष्मणः परमासने ॥ ८९७ ॥

अथाद्भुतेक श्री राम: प्रभुमारुतिमत्रवीत् ॥
विभीषणमनुज्ञाप्य कुशलं पृच्छ जानकीं ॥ ८९८ ॥

वैदेह्या वान रा धीशं कुशलं लक्ष्मणं च मां ॥
आचक्ष्व वदतां श्रेष्ठ रावणं च हतं रणे ॥ ८९९ ॥

प्रियमुक्त्वा स म र्प्रं त्वं ततस्तस्य हरीश्वर ॥
प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ॥ ९०० ॥

इत्युक्तो वायु ज स्तेन रामेणाक्लिष्टकर्मणा ॥
तां पुष्पवाटिकां गत्वा सीतां मत्वेदमत्रवीत् ॥९०१॥

कुशली त्वाह य स्तेतिप्रिय: श्रीरघुसत्तम: ॥
गतं रक्षो लयं देवि भास्करेणेव तत्तम: ॥ ९०२ ॥

[1]प्रियमाख्यामि रा ज्ञि त्वां भूयोभूय: समाजये ॥
रामस्याद्य प्रमुदिता देवर्षीणां सभाजये ॥९०३ ॥

[2]प्रभावात्ते सु य श्रिते रावणो निहतो रणे ॥
विभीषणसहायेन रामेणाद्भुततेजसा ॥ ९०४ ॥

स दक्षिणो भु ज स्तस्य रामस्य कुशली सति ॥
लक्ष्मण: सुमहातेजा: सुग्रीवश्च महामति: ॥ ९०५ ॥

लब्धोयं विज य स्तेजो रामेण ख्यापितं महत् ॥
लंका वशीकृता सीते स्वस्था भव गतज्वरा ॥ ९०६ ॥

सीतोवाच नि श स्वार्तेप्रियं श्रुत्वाऽनिलात्मजं ॥
तूष्णींभूता क्षणं पश्चात् तेन संप्रार्थिता सती ॥९०७॥

मत्सार्थस्तु: प्रि य स्मास्य भवतो हितकारिण: ॥
देयं वस्तु न पश्यामि सदृशं किंचिदप्यहं ॥ ९०८ ॥

हनुमानाह रा ज्ञीं तां प्रांजलिर्देवि वत्सले ॥
स्निग्धमेवंविधं वाक्यं त्वमेवार्हस्यभिदिते ॥ ९०९ ॥

एतदेव म . य [3]श्रेय: प्रियं भर्तृहितेरते ॥
लब्धं सर्वं मया श्रुत्वा वाक्यमेतत्तवामृतं ॥ ९१० ॥

---

१ निरोप. २ गतदु:खा. ३ हृदय.

देयो वरोऽद्य श्री मन्या मातर्यः प्रार्थ्यते मया ॥
श्रोतुमर्हसि तं देवि विश्वविख्यातसद्व्रते ॥ ९११ ॥

इमास्तु खलु य क्षत्यो यदि त्वमनुमन्यसे ॥
हंतुमिच्छामि ताः सर्वा याभिस्त्वं तर्जिता पुरा ॥९१२॥

जानक्युवाच य तिमन् कुर्वतीनां पराज्ञया ॥
विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ॥ ९१३ ॥

इत्युक्तो वात ज स्नुषस्तामुवाच यशस्विनीं ॥
युक्ता रामस्य भवती धर्मपत्नी गुणान्विता ॥ ९१४ ॥

वैदेहि इद य स्यं यत्तत्त्वं तत्वं मनस्विनि ॥
प्रतिसंदेश मां देवि गच्छेयं यत्र राघवः ॥ ९१५ ॥

एवमुक्ता न रा धोत्सुता सीता हनूमता ॥
साऽब्रवीद्द्रष्टुमिच्छामि भर्तारं भक्तवत्सलं ॥ ९१६ ॥

हनूमान् राम म हिषीमुवाच प्रांजलिस्तदा ॥
पूर्णचंद्रमुखं राम द्रक्ष्यस्यद्य सलक्ष्मणं ॥ ९१७ ॥

एवमुक्त्वा भा ज मानां सीतां साक्षादिव श्रियं ॥
आजगाम महातेजा हनूमान्यत्र राघवः ॥ ९१८॥

तस्याः सोऽकथय त्सर्वं राघवायोत्तरं वचः ॥
स्वयं चोवाच शोकार्ता द्रष्टुमर्हसि तामिति ॥ ९१९ ॥

एवमुक्तस्त्रि ज गतां नाथो धर्मभृतांवरः ॥
आगच्छत्सहसाऽध्यानमीषद्बाष्पपरिप्लुतः ॥ ९२० ॥

तामुपस्थाप य क्षिप्रं सीतां स्नातामलंकृतां ॥
विभीषणमिति श्रीमानुवाच रघुनायकः ॥ ९२१ ॥

आरोप्य प्रव रा भार्यां शिबिकां तां विभीषणः ॥
नयामासत सुस्नातां प्रीतां सीतां स्वलंकृतां ॥ ९२२ ॥

तदा प्लवंग म क्षोत्सान् वारितान्वेत्रपाणिभिः ॥
दृष्ट्वा विभीषणं रामो मैत्रमित्यब्रवीत्क्रुधा ॥ ९२३ ॥

अथाह रामः श्री मांस्तां विनीतां पार्श्वमागतां ॥
पौरुषादनुष्ठेयं मयैतदुपपादितं ॥ ९२४ ॥

निर्जिताऽसि न रा रोहे शत्रुं जित्वा रणाजिरे ॥
परिश्रमोऽयं युद्धार्थं न त्वदर्थं मया कृतः ॥९२५॥

प्राप्तसंदेह म हिमा मम प्रतिमुखे स्थिता ॥
दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढा ॥ ९२६ ॥

तद्गच्छ त्वं रा ज कन्ये यथेष्टं विवृता दिशः ॥
कः कविः पुनरादद्यात्स्त्रियं परगृहोषिताम् ॥ ९२७ ॥

लक्ष्मणेवान्या य ताक्षि भरते वा नरोत्तमे ॥
शत्रुघ्ने वा गुणाढ्ये त्वं कुरु बुद्धिं यथासुखं ॥ ९२८ ॥

सुग्रीवे वान रा धीशे राक्षसे वा विभीषणे ॥
निवेशय मनः सीते यथा वा सुखमात्मनः ॥ ९२९ ॥

न त्वां दशास्ये म हिलां दिव्यरूपां बलाद्धृतां ॥
मर्षयेत्सुचिरं सीते स्वगृहे पर्यवस्थितां ॥ ९३० ॥

अत्यप्रियं रा ज कन्या तदुपश्रुत्य सा प्रियात् ॥
रुदती सुदती सीता भर्तारमिदमब्रवीत् ॥ ९३१ ॥

किमेवं वद म च्छेदि प्रभो मां श्रोत्रदारुणं ॥
रूक्षं श्रावयसे वाक्यं प्राकृतः प्राकृतामिव ॥ ९३२ ॥

न तथास्मि नि ज स्वांते यथा मामवगच्छसि ॥
प्रत्ययं गच्छ मे स्वेन चारित्र्येण शपे स्वयं ॥ ९३३ ॥

अन्यासामन य ज्ञात्वाज्जातिं त्वं परिशंकसे ॥
त्यज शंकां परस्पर्शो कामकारो न मे प्रभो ॥ ९३४ ॥

शरीरेऽत्र प रा धीने किं करिष्याम्यनीश्वरी ॥
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ॥ ९३५ ॥

निपीडितो म म करो न प्रमाणीकृतस्त्वया ॥
न मे भक्तिर्न मच्छीलं सर्वं ते पृष्ठतः कृतं ॥ ९३६॥

सैवं तदोक्ता श्री मंतं लक्ष्मणं दीनमानस ॥
　　उवाच व्यसनस्यास्य भेषजं कुरु मे चितां ॥ ९३७ ॥

त्यक्ता देवर रा ज्ञाहमप्रीतेन गुणैर्मम ॥
　　मिथ्यापवादोपहता निवेक्ष्ये हव्यवाहनं ॥ ९३८ ॥

प्राप्तो वशम म र्षस्य स विज्ञाय प्रभोर्मतं ॥
　　चितां चकार सौमित्रिः परवान्भृशदुःखितः ॥ ९३९ ॥

नहि रामं ते ज सोग्रं तदा कश्चिद्यमोपमं ॥
　　अनुनेतुमथो वक्तुं द्रष्टुं वाप्यशकत्सुहृत् ॥ ९४० ॥

अधोमुख मि य तमं रामं कृत्वा प्रदक्षिणं ॥
　　बद्धांजलिः सती सीता साब्रवीदग्निसन्निधौ ॥ ९४१ ॥

यथा मनो मे रा जेंद्रान्नापसर्पति राघवात् ॥
　　तथा सर्वस्य साक्षी मां सर्वतः पातु पावकः ॥९४२

यद्यहं शुद्धि म त्यस्मि श्रीमद्रामैकमानसा ॥
　　केशवस्त्रादिकमपि माधाक्षीन्मम पावकः ॥ ९४३ ॥

एवमुक्ता ग ज गतिः परिक्रम्य हुताशनं ॥
　　सीता विवेश ज्वलनं निःशंकेनांतरात्मना ॥ ९४४ ॥

महान् ज नोघ य स्तत्र ददर्शाश्रुसमाकुलः ॥
　　प्रविशती सतीमग्निं दीप्तं सौदामिनीमिव ॥ ९४५ ॥

ददृशुस्तां ■ ज कन्यां प्रविशतीं हुताशनं ॥
　　ऋषयो देवगंधर्वाः पूर्णाहुतिमिवाध्वरे ॥ ९४६ ॥

प्रचुक्रुशुः स्त्रि य स्तास्तां दृष्ट्वा दीप्ते चितानले ॥
　　पतंतीं संस्कृतां मंत्रैर्वसोर्धारामिव क्रतौ ॥ ९४७ ॥

रक्षसां वान रा णां च हाहेति विपुलः स्वनः ॥
　　तस्यामग्निं संविशंत्यां समभूवाद्भुतोपमः ॥ ९४८ ॥

ततो रामः का म विम्नः श्रुत्वैव वदतां गिरः ॥
　　दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥९४९॥

शक्रो यमोऽथ श्री दश्च शंभुर्ब्रह्माऽसुरैः सह ॥
लंकां विमानैरागत्य तेऽभिजग्मूरघूत्तमं ॥ ९५०

अब्रुवंस्तं सु रा रामं प्रांजलिं पुरतः स्थितं ॥
विश्वस्य कर्तारमात्मानं कथं त्वं नावबुध्यसे ॥ ९५१॥

सीता तवेयं म हिषी साक्षाच्छ्रीर्जनकात्मजा ॥
उपेक्षसे कथं विष्णो पतंतीं हव्यवाहने ॥ ९५२ ॥

अस्माभिस्त्वं त्रि ज गतां भर्ता हंतुं दशाननं ॥
प्रार्थितो मानुषीं योनिं प्रविष्टोऽसि सनातनः ॥९५३॥

प्रभवश्चाप्य य श्च त्वं देवकार्यं कृतं त्वया ॥
सर्वे कृतार्थास्त्वद्भक्ताः शरण्यस्त्वं जनार्दन ॥ ९५४ ॥

गृहीत्वा तां व रा रोहां मूर्तिमान् हव्यवाहनः ॥
उत्थायाभ्येत्य भगवानित्युवाच रघूत्तमं ॥ ९५५ ॥

राम रामान्छ म नसं सीतां शीतांशुजिन्मुखीं ॥
गृहाण त्वमिमां मान्यां माऽन्यां बुद्धिं कुरु प्रभो॥९५६॥

एवमुक्त्वा रा ज मानां सीतां दाशरथेः प्रभोः ॥
स्थापयामास वामे तामंके पंकेरुहेक्षणां ॥ ९५७ ॥

लोकापवादो य शसो नाशकोऽतस्तमागतं ॥
परिमार्ष्टुमिदं दिव्यं मया विज्ञाय कारितं ॥ ९५८ ॥

इयं विशुद्धा ज गति श्रेष्ठा भानोरिव प्रभा ॥
न विहातुं मया शक्या कीर्तिरात्मवता यथा ॥ ९५९॥

सुस्निग्धानां सु य शसां नाथानां वदतां हितं ॥
अवश्यं च मया कार्यं सर्वेषां वो वचः प्रियं ॥९६०॥

एवमुक्त्वा स रा जेंद्रः प्रियां स्वीकृतवान्मुदा ॥
ततः शुभतरं वाक्यं व्याजहार महेश्वरः ॥ ९६१ ॥

पुष्कराक्ष स म र्थेश श्याम तामरसप्रभ ॥
दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर ॥ ९६२ ॥

आश्वास्य दीन श्री मत्त भरत भक्तमात्मन ॥
मातृश्च राज्य कृत्वाथ स्वपद गतुमर्हसि ॥ ९६३ ॥

विमानेऽय न रा धीश पिता दशरथस्तव ॥
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ ९६४ ॥

शक्रस्य लोक म सैंद्रो गतो मतिमता वर ॥
सत्पुत्रेण त्वया राम तारितोऽय गुरुस्तव ॥ ९६५ ॥

राघव स्वानु ज श्चक्रे नमन पितुरात्मन ॥
स चैनमक आरोप्य परिष्वज्य मुदाऽब्रवीत् ॥९६६॥

राम प्राणप्रि य स्वर्ग समानोपि सुरर्षभे ॥
न मे बहुमतो जातु त्वां विना पुत्रवत्सल ॥ ९६७ ॥

कैकेय्या यानि रा जीवनेत्र प्रोक्तानि दुष्टया ॥
तानि वाक्यानि शल्यानि स्थितानि हृदये मम ।९६८।

दु खा मुक्तोऽद्य म हतस्त्वा परिष्वज्य सानुज ॥
तारितोह त्वया पुत्र सुपुत्रेण महात्मना ॥९६९॥

राम प्रोवाच ज नक कैकेय्या भरतस्य च ॥
प्रसाद कुरु शाप ॥ सपुत्रा न स्पृशे प्रभो ॥९७०॥

तथेत्युक्त्वा प्रि य गुण लक्ष्मण ता च जानकी ॥
समाश्वास्य विमानेन ययौ स्वर्ग महायशा ॥९७१॥

ततो जयत ज नको राम प्राजलिरब्रवीत् ॥
अमोघ दर्शन राम तवास्माक रघूत्तम ॥ ९७२ ॥

प्रीता स्म ब्रूहि य त्प्राज्य राजेंद्रमनसेप्सित ॥
तच्छ्रुत्वा वासव हृष्टो वचन प्राह राघव ॥ ९७३ ॥

मम हेतो प रा क्रांता ये गता यमसादन ॥
ते सर्वे जीवित प्राप्य समुत्तिष्ठतु वानरा ॥ ९७४ ॥

अकाले चापि म धुरा फलमूलसमृद्धय ॥
नद्यश्च निर्मलास्तत्र तिष्ठेयुर्यत्र वानरा ॥ ९७५ ॥

रक्षःक्षयात् श्री ति: प्रहृष्टात्र तदा प्रभुं ॥
महानर्दं वरत्नाद लंकोका रघुनन्दन ॥ ९७६ ॥

मम त्वनि प म प्रीतिस्तस्मादित्तद्विरिष्यति ॥
समुत्तिष्ठंतु सर्वे ते दे हता युधि राक्षसैः ॥ ९७७ ॥

ततः प्लवंग म वानास्ते सुप्तेव समुत्थिताः ॥
बभूवुर्वानरा ऋक्षाः किम्वेनादिति विस्मिताः ॥ ९७८ ॥

राममापृच्छ्य त म्नुस्ते स्वर्गं सेंद्रा दिवौकसः ॥
श्रीरामं प्रार्थयामास सत्कर्तुं ■ विभीषणः ॥ ९७९ ॥

तमाह रामो य दि मां राजन्सत्कर्तुमिच्छसि ॥
हरीन् सुग्रीवमुख्यांस्त्वं सर्वानप्यद्य सत्कुरु ॥ ९८० ॥

सतु ताम्यति रा ज्येऽपि भरतो मत्कृते सदा ॥
तं विना मे बहुमतं न स्नानं वस्त्रभूषणं ॥९८१॥

एनरं पश्य-प तिमन् यथा क्षिप्रं निजां पुरीं ॥
प्रतिगच्छामि मार्गोऽयं राजन् परमदुर्गमः ॥९८२ ॥

दशकण्ठानु ज स्तं स प्रत्युवाच कृतांजलिः ॥
अन्हा त्वां प्रापयिष्यामि साकेतं पुष्पकेण तत् ॥९८३

अनुग्रहस्ते य द्यस्ति सदारः सानुजो वस ॥
गृहाण सत्क्रियां मत्तः सौहृदं तव चेन्मयि ॥ ९८४ ॥

तत्कौसल्यात्म ज स्तस्य श्रुत्वा वाक्यं ततोऽब्रवीत् ॥
साचिव्येन तथा प्रेम्णा पूजितोऽहं भृशं त्वया ॥९८५॥

भरतं तु मि य सत्वं द्रष्टुं मे त्वरते मनः ॥
शिरसा याचतो यस्य न कृतं वचनं मया ॥ ९८६ ॥

कौसल्यां च परां मातां सुमित्रां केकयात्मजां ॥
गुहं च सुहृदं पौरान् द्रष्टुं मेऽत्युत्सुकं मनः ॥९८७॥

अनुजानीहि म तिमन् मामहं सत्कृतस्त्वया ॥
उपस्थापय मे शीघ्र विमानं राक्षसेश्वर ॥ ९८८ ॥

॥ तद्विमान श्री दस्य कामग रावणाहृतं ॥
स्थापयामास सेवार्थां सुरतः पुरतः प्रभोः ॥ ९८९ ॥

ससैन्य यान रा धीश सपूज्य परया मुदा ॥
साकेत मा नयेत्याह राम भक्तो विभीषण. ॥ ९९० ॥

सोऽपि प्लवग म पति सुग्रीवो मन्त्रिभि' सह ॥
तथैव प्रार्थयामास प्रभु प्राप्यदय स्वय ॥ ९९१ ॥

तद्विमान श्री ज मान राजराजस्य राघव' ॥
ताभ्या सह समारुह्य राजभ्या कपिरक्षसां ॥ ९९२ ॥

त्रिकूटाद मि य तमामके कृत्वा सलक्ष्मण : ।
प्रतस्थे सुमहातेजा लकालकारनिःपुरं ॥ ९९३ ॥

कैलासशिख रा कारे त्रिकूटशिखरे स्थितां ॥
लकां युद्धधरां रामो दर्शयन्नाह जानकीं ॥ ९९४ ॥

प्रिये पश्य ल म स्याद्रेस्त्रिकूटस्य शिरोगतां ॥
सुरैर्दुर्गसदां लका निर्मिता विश्वकर्मणा ॥ ९९५ ॥

इय युद्धस्य ज गती लक्ष्तेऽत्र सह प्रिये ॥
सचिवैर्भ्रातृभि.पुत्रैः सीते दशमुखो हतः ॥९९६॥

रावणस्य स्त्रि य स्तत्र मदोदर्या सह प्रिये ॥
विविध भूरिकरुण त मृत पर्यदेवयन् ॥ ९९७ ॥

सेतुर्नलेन ज लधावेष देव्याज्ञया मम ॥
तव हेतोर्विशालाक्षि बद्धः पश्य सुदुष्करः ॥ ९९८ ॥

पश्य सीते प्रिया य ताक्षि दुस्तर वरुणालय ॥
जलशो यत्र पतित नयसकरुणालय ॥ ९९९ ॥

इतस्त्व रुचि रा पाणे मैनाक पश्य पर्वत ॥
विश्रामार्थ हनुमतो भित्वा सागरमुत्थित ॥१००० ॥

उत्तर तीर म स्याब्धेरेतद्देवि मनोरम ॥
अत्र पूर्वं महादेव. प्रसादमकरोद्विभुः ॥ १ ॥

इदं तु तीर्थं श्री मदत्तीर्थमन्यत्ततो ऽधिकं ॥
सेतुबंध इति ख्यातं भव्यं कृत्यचितं हितं ॥ २ ॥

अत्र राक्षस-रा जोऽयं देव्यागच्छत् विभीषणः ॥
सुग्रीवस्य पुरी चैषा किष्किंधी वालिपालिता ॥ ३ ॥

सीतोवाच म म स्त्रीभिः सुग्रीवस्य महात्मनः ॥
ताराप्रभृतिभिर्गंतु सार्धमिच्छा पुरीं प्रभो ॥ ४ ॥

एवमस्त्वित्य त्र कुलश्रेष्ठः श्रेष्ठः सतां प्रियां ॥
उक्त्वोवाच तथा कर्तुं सुग्रीवं वानरेश्वरं ॥ ५ ॥

ससुग्रीवः प्रि य तमां स्वयं तारां तथाऽब्रवीत् ॥
सा चाहूय प्लवंगानां सर्वा भार्याः स्वलंकृताः ॥ ६ ..

ताभिः सह त्व रा युक्ता पुष्पकं सा समारुहत् ॥
सीता तया कपींद्रस्य योषिता तोषिताऽभवत् ॥ ७ ॥

ततो रघूत्त म स्तत्र पुष्पके द्रुतगामिनि ॥
वैदेहीमित्युवाचायमृष्यमूकः स भूधरः ॥ ८ ॥

यत्राहं वारि ज स्पर्धिमुखि प्रियतमे सति ॥
अनेन राज्ञा कीशानां सुग्रीवेण समागतः ॥ ९ ॥

त्वया विहीनो य त्राहं विलापपरमोऽभवम् ॥
एषा सा दृश्यते पंपा शंपाकंपावहप्रभे ॥ १० ॥

अत्र सीते यो ज नोग्रबाहुरहूरसागतः ॥
कबंधो निहतो भ्रात्रा लक्ष्मणेन तथा मया ॥११॥

न्यग्रोधं पश्य य त्र त्वां त्रातुं मम पितुः सखा ॥
प्रवृत्तः समरे तातो जटायुर्निहतोऽरिणा ॥ १२ ॥

रक्षसां यत्र रा ज्ञा त्व रावणेन हृता बलात् ॥
एषा गोदावरी रम्या प्रसन्नसलिला शुभा ॥ १३ ॥

एतत्तदाश्र म पदमस्माकं वरवर्णिनि ॥
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने ॥ १४ ॥

कालें ऽति पुण्य श्री वासः कुम्भजस्यायमाश्रमः ॥
शरभंगस्य च मुनेरत्रेः कुलपतेरयं ॥ १५ ॥

चित्रकूटो व रा रोहे शैलेंद्रो ऽयं प्रकाशते ॥
कैकेय्या अत्र पुत्रो मां प्रसादयितुमागतः ॥ १६ ॥

राजपुत्रि य म स्यैषा सा स्वसा यमुना नदी ॥
भरद्वाजाश्रमश्चैष दृश्यते सुकृताकरः ॥ १७ ॥

इयं च गंगा ज गतां सेव्या देव्याश्रितेष्टदा ॥
शृंगबेरपुरं चैतद्गुहो यत्र सखा मम ॥ १८ ॥

सैषा सतां प्रि य तमा राजधानी पितुर्मम ॥
अयोध्यां कुरु वैदेहि प्रणामं पुनरागता ॥ १९ ॥

ततस्ते वान रा ऋक्षा राक्षसाश्च सनायकाः ॥
उत्पत्योत्पत्य सदृष्टास्तां पुरीं ददृशुस्तदा ॥ २० ॥

शुभहर्म्योत्त म प्राज्यप्रोच्चप्रासादमालिनीं ॥
अपश्यंस्ते पुण्यवंतः साक्षादिंद्रपुरीमिव ॥ २१ ॥

रामो भरद्वा ज मुनिं तं ववंदे तदाश्रमे ॥
पूर्णे चतुर्दशे वर्षे पंचम्यां रचितांजलिः ॥२२॥

स्ववृत्त कथ य न् रामो मातॄणां भरतस्यच ॥
पप्रच्छ मुनिशार्दूलं भरद्वाज द्विजेश्वरं ॥२३॥

कुशलं स द्वि ज श्रेष्ठः कथयामास सर्वतः ॥
भरतस्य व्रतं तीव्र भक्ति तत्पादुकार्चने॥ २४ ॥

द्रुमेष्वतिश य स्तस्मात्फलानां वरदान्मुनेः ॥
वव्रे बद्धांजलीरामो मार्गे यावन्निजं पुरं ॥ २५ ॥

मारुतिं च त्व रा युक्तं भरतं प्रति राघवः ॥
प्रेषयामास कुशलागमं कथयितु प्रभुः ॥२६ ॥

स शृंगबेर म गमन्नररूपोऽवदद्गुहं ॥
कुशली ते सखा श्वस्त्वं द्रक्ष्यस्यत्रैव राघवं ॥२७॥

---

ततः स तूर्णं श्री मंतं भरतं नाटिलं कृशं ॥
आगतः प्रभुरित्युक्त्या चकार मुदितं भृशं ॥२८॥

स महर्षभ रा भूमौ पपात भरतस्तदा ॥
उत्थाप्य कपिमाश्लिष्य तं सिषेचाश्रुबिंदुभिः ॥२९॥

अथाब्रवीत्स य मरो नरो वा करुणागतः ॥
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियं ॥३०॥

कन्या धन्याः कं-ज-नेत्र्यः षोडशस्वर्णभूषिताः ॥
गवां शतसहस्रं च ग्रामाणां च शतं मतं ॥३१॥

बहून्यहो हा य नानि गतस्य सुमहद्वनं ॥
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनं ॥ ३२ ॥

कल्याणीयं प रा गाथा लौकिकी प्रतिभाति मे ॥
एति जीवंतमानंदो नरं वर्षशतादपि ॥ ३३ ॥

कुशलं वृत्त म खिलं संहृष्टो भरतेन सः ॥
कथयामास मुदितो भूयः समुपवेशितः ॥ ३४ ॥

सलक्ष्मणं वि ज यिन सदारं सचिवसंयुतं ॥
अविप्रपुष्ययोगेन श्रीरामं द्रष्टुमर्हसि ॥ ३५ ॥

प्रहृष्टहृद यः स्तुत्वा मारुतिं भरतोऽब्रवीत् ॥
चिरस्य खलु मे पूर्णो हृदि रूढो मनोरथः ॥३६॥

प्रहृष्टं सेनु ज मथ भरतः सत्यसंगरः ॥
स्वयमाज्ञापयामास पुरमार्गादलंक्रियां ॥ ३७ ॥

जयंतो विज य स्तद्वत्सिद्धार्थश्चार्थसाधकः ॥
अशोको मंत्रपालश्च सुमन्त्रो धृष्टिरष्टमः ॥ ३८ ॥

ते प्रधानास्त्व रा युक्ताः पौराः सूर्योदये द्विजाः ॥
निर्ययू राजदाराश्च रामं द्रष्टुं समुत्सुकाः ॥ ३९ ॥

द्विजातिनैग म श्रेष्ठैः सचिवैर्भरतो वृतः ॥
धर्मज्ञः शिरसा भव्ये गृहीत्वा रामपादुके ॥४०॥

छत्र च राज श्री चिन्ह पुरस्कृत्य शशिप्रभ ॥
शुभ्रे च वाल्व्यजने शत्रुभेरीशतस्वनै ॥ ४१ ॥

प्रत्युद्ययौ न रा धीश राम चीराजिनाम्बरः ॥
उपवासकृशो दीनः प्रेमाश्रुभिरभिप्लुतः ॥ ४२ ॥

तदा तुरग म खुरैरथचक्रैश्च तद्रवै. ॥
बृंहितैर्दंतिना चाथै. सचचालेव मेदिनी ॥ ४३ ॥

अदृष्ट्वा तत्रा ज यानमश्च्छन्मारुति पुन ॥
कच्चिन्नानुगतस्तात कपिरीर्ति त्वमात्मन ॥ ४४ ॥

गर्जंति हर य स्तेषां नादः सश्रूयते महान् ॥
अयमागत एवार्य इत्युवाच स त कपि ॥ ४५ ॥

अथ तद्राज रा जस्य विमानं पुष्पक महत् ॥
आराददृश्यत व्योम्नि शशिसूर्यसमप्रभ ॥ ४६ ॥

दृष्ट्वा हर्षेण म हता रामोऽयमिति कीर्तिते ॥
स्त्रीबाल्युववृद्धानां नि स्वनो दिवमस्पृशत् ॥ ४७ ॥

स्यदनेभ्यः कुजरेभ्यस्तुरगेभ्योऽवतीर्यते ॥
महीं गतास्त ददृशुर्नराः सोममिवाम्बरे ॥ ४८ ॥

प्रांजलि प्रण ॥ प्रव्हो भरतो राघवोन्मुख ॥
ववंदे पुष्पकस्थ त मेरुस्थमिव भास्कर ॥ ४९ ॥

ततो विमान ज गती पपात प्रभुकामत ॥
ववंदे भरतो राम बाष्पकण्ठः पुन पुनः ॥ ५० ॥

अके तमादा य मुदा श्रीराम. परिषस्वजे ॥
अथो ववंदे भरत सीतां स्व नाम चाब्रवीत् ॥५१॥

लक्ष्मण च प रा क्रांत वदमान महामति ॥
प्रहृष्ट भरतश्चक्रे सभाव्यालिंगनादिना ॥ ५२ ॥

ततः प्लवग म श्रेष्ठ जाववत तथांगद ॥
अन्याश्च नलनीलादीन् यूथपान् परिषस्वजे ॥५३॥

भ्राता चतुर्णां श्री मंस्त्वमस्माकमसि पंचमः ॥
इत्यब्रवीत्परिष्वज्य भरतो वानरेश्वरं ॥ ५४ ॥

परिष्वज्याह रा जेंद्रनंदनस्तं विभीषणं॥
दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करं ॥५५ ॥

शत्रुघ्नोऽपि न म स्कारं चकार प्रभुपादयोः ॥
जानक्याश्च महादेव्याः कीर्तयन्नात्मनोऽभिधां ॥५६॥

रामो ननाम ज ननीं कौसल्यामतिवत्सलां ॥
सुमित्रां सत्त्वसंपन्नां कैकेयीं च यशस्विनीं ॥५७॥

वसिष्ठं स्वान्व य स्याद्यं ब्रह्मणा सदृशं गुरुं ॥
ऋत्विजः पितुरन्यांश्च ववंदे स सतां गतिः ॥५८॥

सचिवान्पितु रा ष्ट्रास्तान्पौरान्सर्वान्यथार्हतः ॥
हर्षयामास धर्मात्मा चकोरानिव चंद्रमाः ॥ ५९ ॥

पादुके ते तु म हिते गृहीत्वा भरतः स्वयं ॥
चरणाभ्यां नरेंद्रस्य योजयामास धर्मवित् ॥६०॥

अब्रवीच्च प्रां ज लितं सफलो मे मनोरथः ॥
एतत्ते सकलं राज्यं न्यासं प्रत्यर्पितं मया ॥ ६१ ॥

पश्य नाथ प्र य त्नेन धनं धान्यं गृहं बलं ॥
भरतस्तेजसा सर्वं कृतं दशगुणं मया ॥ ६२ ॥

तथा ब्रुवाणं ज गतोऽर्थ्यं दृष्ट्वा तं भ्रातृवत्सलं ॥
मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ॥ ६३ ॥

रामस्तं विन य स्यैकमाल्यं भरतं नतं ॥
अंकमारोप्य यानेन ययौ तेन तदाश्रमं ॥ ६४ ॥

व्योमयानाव रा त्तस्मादवतीर्य रघूद्वहः ॥
कुबेरं वह गच्छेति तदाज्ञापयदीश्वरः ॥ ६५ ॥

आज्ञप्तमग म च्छीघ्रं विमानं तदनंतरं ॥
भरतः प्रार्थयामास राज्यं स्वीकुर्विति प्रभुं ॥ ६६ ॥

भ्रातुस्तथेति श्री राम प्रतिजग्राह तद्वच ॥
शत्रुघ्नवचनात्प्राप्ता निपुणा श्मश्रुवर्धना ॥ ६७ ॥

पूर्वभ्रातृषु रा जेंद्र स्नातेषु भरतादिषु ॥
सुग्रीवे राक्षसेंद्रे च स्नान चक्रे तत स्वय ॥६८॥

शत्रुघ्न पर म प्रेम्णा विशालकारमग्रज ॥
अलंकारैरलंचक्रे सद्गुणैरप्यलंकृत ॥ ६९ ॥

प्रतिकर्माय ज गतोपुत्र्या दशरथस्त्रिय ॥
चक्रुर्वानरपत्नीना कौसल्या पुत्रवत्सला ॥ ७० ॥

सुमंत्रोऽथ ह य श्रेष्ठैर्युक्त रथमुपानयत् ॥
तमारुरोह श्रीराम प्रभुराजपुरंदर ॥ ७१ ॥

रश्मीजग्राह रा जीवलोचनो भरत स्वय ॥
छत्र पूर्णशरच्चंद्रप्रभ शत्रुघ्न आददे ॥ ७२ ॥

बिभीषणोऽथ म तिमान् वाल्यजनमुत्तम ॥
लक्ष्मणो व्यजन तस्य तालवृतमय तदा ॥ ७३ ॥

शत्रुजयकु ज रेंद्र चलपर्वतसन्निभ ॥
आरुरोह महातेजा सुग्रीव प्लवगर्षभ ॥ ७४ ॥

ययु समारुह्य वहून् वारणान् वानरोत्तमा ॥
मानुष विग्रह कृत्वा सर्वाभरणभूषिता ॥ ७५ ॥

राम सुरद्वि—ज-श्रेष्ठा द्रष्टु व्योम्नि समागत ॥
प्रहृष्टा पूजयामासु स्तुतिभि पुष्पवृष्टिभि ॥ ७६ ॥

साकेत शम य न्कृत्स्न सताप प्रविवेश स ॥
तृषार्तचातककुल घर्मात इव वारिद ॥ ७७ ॥

शुश्राव मधु रा रामा गिर स्वगुणपूरिता ॥
प्रजा प्रापु सुख दृष्ट्वा मुख रामस्य भूरि ता ॥७८॥

दद्य राम म हिषीन्योग्यामहिलास्तया ॥
यथा क पन्ता प्रासादमथ । चिन्तृनय ॥ ७९ ॥

तत. स रामः श्री मत्प्राप मुख्यं पितृगृहं ॥
अथाह भरत मक्तं हनूमंतं विभीषणं ॥ ८० ॥

सुग्रीवं वान रा धीशं जांबुवंतं तथांगदं ॥
यूथपैः सह मातॄणां वदनार्थं शनैर्नय ॥ ८१ ॥

वानरेंद्राय म द्रेहं समृद्धं त्वं निवेदय ॥
भरतस्तत्तथा कृत्वा वानरेश्वरमब्रवीत् ॥ ८२ ॥

दूतांस्त्वमद्य त्व वनान् काकुत्स्थस्य महात्मनः ॥
आज्ञापयाभिषेकाय जलमाहर्तुमंबुधीन् ॥ ८३ ॥

तदाज्ञया तो य माशु स्वर्णकुंभेन वानरः ॥
सुषेण आनिनायाशु पूर्वाब्धितोयंमहाबलः ॥ ८४ ॥

ऋषभः साग रा दंभो दक्षिणाद्गवयः कपिः ॥
पश्चिमादर्णवात्तूर्णं स्वयं मारुतिरुत्तरात् ॥ ८५ ॥

अन्ये प्लवंग म वरा जांबवांश्चर्क्षभूपतिः ॥
नदीशतानां पंचानां जलं कुंभैरुपाहरन् ॥ ८६ ॥

वसिष्ठादिद्वि-ज-श्रेष्ठाः पीठे रत्नमये प्रभुं ॥
ससीतमभ्यषिंचंस्तेविधिना तीर्थवारिभिः ॥ ८७ ॥

ऋत्विग्भिश्च द्वि-ज-वरैः सचिवैः शास्त्रिभिस्तथा ॥
नैगमैर्लोकपालैश्च श्रीरामं तेऽभ्यषेचयन् ॥ ८८ ॥

पूर्वं साक्षाद्वि ज गतां कर्त्रा यन्निर्मितं वरं ॥
तत्किरीटं वसिष्ठेन स्थापितं राममस्तके ॥ ८९ ॥

अलिंगिभश्चान्य-य-प्राज्यतेजोभिर्मणिभूषणैः ॥
सभायां हेमकॢप्तायां राघवः समलंकृतः ॥ ९० ॥

छत्रं च द्विज रा जाभं तस्य शत्रुघ्न आददे ॥
विभीषणः कपींद्रश्च वालव्यजनमुत्तमं ॥ ९१ ॥

मुक्ताहार हे म पद्ममालां रामाय मारुतः ॥
ददौ सभायामागम्य मूर्तः शक्रप्रचोदितः ॥ ९२ ॥

तत्राभिषेके श्री जाने रामस्यामिततेजसः ॥
प्रजगुर्देवगंधर्वा ननृतुश्चाप्सरोगणाः ॥ ९३ ॥

सस्यपूर्णा धर रा सर्वे फलवतश्च पादपाः ॥
गधवति च पुष्पाणि बभूवू राघवोत्सवे ॥ ९४ ॥

श्वानां धेनूनां च गवां शत ॥
ददौ शतवृषान्पूर्वं द्विजेभ्यो मनुजर्षभः ॥ ९५ ॥

त्रिंशत्कोटीः स ज गनीसुरेभ्यो हेम्न ईश्वरः ॥
नानाभरणवस्त्राणि महार्हाणि ददौ पुनः ॥ ९६ ॥

प्लवगराजा य विभुः काञ्चनी मणिविग्रहां ॥
सूर्यरश्मिनिभां दिव्यां स्रजं प्रापच्छदीश्वरः ॥ ९७ ॥

महार्हे रुचि रा कारे चंद्ररश्मिविभूषिते ॥
सर्वरत्नमये श्रीमानंगदायांगदे ददौ ॥ ९८ ॥

मुक्ताहार स्व म हार्हं सीतायै प्रददौ प्रभुः ॥
त कंठादवमुच्याथ देवी राममुदैक्षत ॥ ९९ ॥

तामिंगितज्ञो ज गतीमभवामब्रवी प्रभुः ॥
प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनि ॥ १०० ॥

अथांजनेया य ददौ तं हार सा दयावती ॥
यथावतोय स जगन्मान्ये श्रीस्तेन यावती ॥ १०१ ॥

धृतिर्यशस्ते ज सी च दाक्ष्य सामर्थ्यमुत्तम ॥
यस्मिन्बुद्धिर्विक्रमश्च पौरुष विनयो नयः ॥ १०२ ॥

सोऽजनातन य स्तेन हारेण शुशुभे तथा ॥
मदाकिन्या प्रवाहेण सुमेरुः शैलराडिव ॥ १०३ ॥

सुग्रीवो वान रा धीशो राक्षसेंद्रो विभीषणः ॥
हनूमान् जांबवानन्ये श्रीरामेण समर्चिताः ॥ १०४ ॥

गतः प्लवंग म श्रेष्ठः किष्किधां प्रभुसत्कृतः ॥
लब्ध्वा कुलधनं लकां हृष्टः प्रायाद्बिभीषणः ॥१०५॥

स्वयैवराज्य श्री रामो लक्ष्मणानुमते ततः ॥
भरताय ददौ प्रेम्णा राघवो लाघवेक्षितः ॥ १०६ ॥

श्रीराम प्राप्य रा ज्य तद्वर्षाण्ययुतमेकराट् ॥
दशाश्वमेधानाजन्हे सदश्वान् भूरिदक्षिणान् ॥ १०७ ॥

आसन्प्रजा रा म स्तास्ता वीतशोका निरामयाः ॥
बहुसर्वायुषोऽन्याढ्या बहुपुत्रा बहुस्रुताः ॥१०८ ॥

निकामवर्षी ज लदो नासीद्व्यालकृतं भयं ॥
न पर्यदेवन्विधवा रामे रा ज्य प्रशासति ॥ १०९ ॥

स्तेनो बन्ध व ध स्तेषां जनानां नाभवच्चन ॥
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत् ॥ ११० ॥

लक्ष्मणानुच रा द्रामात्कामायुतशतोत्तमात् ॥
सर्वान्मनोरथान्प्राप्ताः प्रजा मुमुदिरे भृशं ॥ १११ ॥

समस्यातिस म र्थस्य तस्यानिशदयावत ॥
रामस्य मुमुदे विश्वं कीर्त्या विशदयाञ्चितं ॥ ११२ ॥

सर्वापि धरया ज नताऽजनताभृत्तदानिशं ॥
भूर्नन्दनप्रभवना भवनाशकराप्रभो ॥ ११३ ॥

साध्वसं नैव प्र मतो जातु जीवस्य कस्यचित् ॥
सर्वेपि सुहृदः स्वैरं वैरं केनाप्यमेनसा ॥ ११४ ॥

भर्ता सर्वस्य ज गतः श्यामो रामो यथा घनः ॥
भक्ता मयूरास्तं दृष्ट्वा यत्तेषां मुदितं मनः ॥११५॥

सोऽयामवि प्र णाम स्मरतां भद्रसादरं ॥
श्रीमद्वाल्मीकिना गीतं चरितं सद्रसादरं ॥ ११६ ॥

यशो विश्वाभि रा मस्य श्रीरामस्यातिपावनं ॥
गीतं वापि श्रुतं वापि यथामत्यनुमोदितं ॥ ११७ ॥

रामनाम्नैव म हितं सन्मनोज्ञेन मोहितं ॥
यो हि तं पातुकामो द्राक् तस्यान्यत्खलु नो हितं ॥ ११८

इति श्रीमन्मंत्ररामायणे श्रीरामनंदनमयूरविरचिते युद्धकाण्डे षडशीतितमो मन्त्रः ॥

## उत्तर-कांडम्.

प्राप्तराज्यो यदा श्री मान् रामोऽयोध्यापतिस्तदा ॥
आजग्मुर्मुनयः सर्वे प्रेम्णा तं प्रतिनंदितुम् ॥ १ ॥

विश्वामित्रस्तपो रा शिर्यवक्रीतोऽपि गालवः ॥
अगस्त्योऽत्रिश्च भगवानन्ये च मुनिसत्तमाः ॥ २ ॥

प्रत्युज्जगाम रा म स्तान् द्वारपालनिवेदितान् ॥
पूजयामास संस्थाप्य स्वासनेषु यथार्हतः ॥ ३ ॥

कुशलं रघुरा ज स्तांस्ततोऽपृच्छत् सुसत्कृतान् ॥
ते तमूचुर्महाबाहो सर्वत्र कुशलं हि नः ॥ ४ ॥

त्वां तु दिष्ट्या स्वाल य स्य वीरं कुशलिनं प्रभो ॥
सानुज कीर्तिसम्पन्नं पश्यामो हतशात्रवम् ॥ ५ ॥

दिष्ट्या त्वया हतो रा जन् रावणो लोकरावणः ॥
सभारस्तेन सधनु र्विजिथास्त्वं जगत्त्रयम् ॥ ६ ॥

लक्ष्मणेनच सं म र्दे शक्रजित्प्रमुखा द्विषः ॥
दिष्ट्या हता महाभाग भ्रात्रा त्वद्धितकारिणा ॥७॥

कुंभकर्णोऽपिच ज गत्कालो दिष्ट्या हतो रणे ॥
यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते ॥ ८ ॥

सेंद्रा लोकेश्वरा य स्मात्त्रस्ताः सर्पादिवाखवः ॥
दिष्ट्या दशास्यो निर्हतो द्वंद्वयुद्धगतस्त्वया ॥ ९ ॥

वधो राक्षसरा ज स्य तव भारो न राघव ॥
द्वंद्वयुद्धमनुप्राप्तः स दिष्ट्या रावणिर्हतः ॥ १० ॥

रामास्माकं विस्म य स्तु श्रुत्वा शक्रजितं हतम् ॥
अवध्य सर्वभूतानां हतु कोपि क्षमो न तम् ॥ ११ ॥

दिष्ट्या त्व वर्धसे रा कापतिस्त्वच्छमहायशाः ॥
दत्वाद्य विपुलां राम विप्रेभ्योऽभयदक्षिणाम् ॥ १२ ॥

श्रुत्वा तद्विस्मये म मो रामः प्रांजलिरब्रवीत् ॥
अतिक्रम्य दशग्रीवं किं प्रशंसथ रावणम् ॥ १३ ॥

अथ कुंभोद्भवः श्री मानुवाच रघुनंदनम् ॥
शृणु राम पुरा वृत्तं तस्य सर्वं ब्रवीमि ते ॥ १४ ॥

प्रजापतिसुतो रा जन् पुलस्त्यो भगवान् मुनिः ॥
तृणबिंद्वाश्रमं गत्वा तपस्तेपे महातपाः ॥ १५ ॥

विघ्नं कुर्वंत्याश्च म स्थे मुनौ तस्मिंस्तु कन्यकाः ॥
गायंत्यो वादयंत्यश्च लासयंत्यो यथासुखम् ॥ १६ ॥

रुष्टः स मुनिरा ज स्तास्तत्र प्रोवाच कन्यकाः ॥
या मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति ॥ १७ ॥

ताः कन्याः शापम य स्तस्तं देशं नोपचक्रमुः ॥
तृणबिंदोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १८ ॥

साऽऽश्रमे विचचा रा य कांचिदभ्यागतां सखीम् ॥
अदृष्ट्वा तं तदापश्यत्तस्य श्रुत्वा श्रुतिध्वनिम् ॥ १९ ॥

मुनेर्वचनसा म र्थ्यात्सहसा गर्भिण्यभूत् ॥
पित्रा दृष्टाब्रवीद्धेतुं मुनेर्दर्शनमेव सा ॥ २० ॥

ध्यानं विवेश रा ज र्षिर्ज्ञात्वा शापं महात्मनः ॥
तस्मै पुलस्त्याय ददौ कन्यां सोऽप्यग्रहीन्मुदा ॥२१॥

मुनेर्वरात् सा प्र म ताऽसूत विश्रवसं सुतम् ॥
पितेव तपसा युक्तः सोऽभवद्विश्रवा मुनिः ॥ २२ ॥

तस्मै विश्रवसेऽ ज स्य प्रीत्यायाद्भुततेजसे ॥
भरद्वाजो ददौ कन्यां तस्या वैश्रवणः सुतः ॥ २३ ॥

तस्मै ब्रह्माऽप द य न्या लोकपालत्वमीप्सितम् ॥
निधीनां रक्षणं चादात् तपसाराधितश्चिरम् ॥ २४ ॥

पुष्पकं च प्रचा रा य विमानं प्रददौ प्रभुः ॥
विष्णोर्भीतैः परित्यक्तां राक्षसैस्त्वष्टृनिर्मिताम् ॥ २५ ॥

त्रिकूटस्थां हेम म यीं लंकां तस्मै पिताऽप्यदात् ॥
तां विश्वकर्मरचितां मोदमानस्त्वपालयीः ॥ २६ ॥

पप्रच्छ घटजं श्री मान् रामो राजीवलोचनः ॥
ये लंकायां स्थिताः पूर्वं राक्षसाः कथितास्त्वया ॥ २७ ॥

भगवंस्ते तपो रा शे कस्माज्जाताः कथं स्थिताः ॥
अपराधं कमुद्दिश्य निहता विष्णुना रणे ॥ २८ ॥

अगस्त्यः प्राह र म यन्मनो रामस्य सूक्तिभिः ॥
प्रजापतिरप॰ सृष्ट्वा तद्रक्षार्थं महातपाः ॥ २९ ॥

व्यसृजद्वारिजन्म निः स भूतानि पुरा प्रभुः ॥
अपो रक्षध्वमित्याह तानि सत्वानि भूतकृत् ॥ ३० ॥

रक्षामेमञ्जन य नमोक्तं यैस्ते तु राक्षसाः ॥
यक्षामेति च यैरुक्तं यक्षास्ते नामतोऽभवन् ॥ ३१ ॥

हेतिः प्रहेतिश्च रा जन् मुख्यौ तत्र बभूवतुः ॥
प्रहेतिर्धार्मिको नित्यं तपोवनरतोऽभवत् ॥ ३२ ॥

हेतिस्तु संतान म तिः कालस्य भगिनीं भयाम् ॥
उपयेमे सुतस्तस्यां विद्युत्केशाभिधोऽभवत् ॥ ३३ ॥

विद्युत्केशोऽतितेज स्वी संध्या दुहितरं प्रियाम् ॥
उदावहद्रघूत्तमनाम्ना सालकटंकटाम् ॥ ३४ ॥

गर्भं प्राप्ता सा प्रि य तो मंदरे तं घनस्वनम् ॥
तत्याज घनसंकाशं विद्युत्केशरताथिनी ॥ ३५ ॥

तस्मिन्काले गिरि ज या सहारुह्य वृषं शिवः ॥
गच्छन्मारुतमार्गेण शुश्राव रुदितं शिशोः ॥ ३६ ॥

तत्र प्रसादं प्रि य या प्रेरित शंकरोऽकरोत् ॥
सद्योऽमरत्वं तारुण्य पुरमाकाशगं ददौ ॥ ३७ ॥

स सुकेशो यातु रा जः प्रख्यातोऽभूद्रघूत्तम ॥
गंधर्वो ग्रामणीस्तस्मै ददौ देववतीं सुताम् ॥ ३८ ॥

स पुत्रांस्त्रीन् प्रीत म ना जनयामास राघव ॥
माल्यवन्त सुमालिंच मालिंच बलिनां वरम् ॥ ३९ ॥

तपस्तुष्टो ददौ श्रीमान् वरांस्तेभ्यः सुदुर्लभान् ॥
अजेयाः शत्रुहंतारो जातास्ते चिरजीविनः ॥ ४० ॥

देवा दैत्याश्च ते रासन् पीडिता वरनिर्भयैः ॥
विश्वकर्मकृता लंका प्राप्ता शक्रपुरीसमा ॥ ४१ ॥

गंधर्वी नर्मदा मत्वा युक्तं कन्यात्रयं स्वयम् ॥
अलंकृत्य ददौ तेभ्यो नक्षत्रे भगदैवते ॥ ४२ ॥

सुंदरी चातुरा जस्य भार्या माल्यवतोऽभवत् ॥
तत्सुता वज्रमुष्टिश्च विरूपाक्षश्चतुर्मुखः ॥ ४३ ॥

सुप्तघ्नश्च तथा यज्ञकोपो मत्तश्च राक्षसः ॥
उन्मत्तनाम्नी कन्या च सुन्दर्यामनलाभिधा ॥४४॥

भार्या सुमालिनो रामनाम्ना केतुमती प्रिया ॥
प्रहस्तोऽकंपनश्चैव विकटः कालिकामुखः ॥४५॥

धूम्राक्षश्च तथा मत्र्यंशत्रू दण्डसुपार्श्वकौ ॥
संह्रादिः प्रघसश्चैव भासकर्णश्च तत्सुताः ॥४६॥

कन्या च रक्षोराजस्य राका पुष्पोत्कटाभिधा ॥
कैकसय चतुर्थी सा नाम्ना कुंभीनसी प्रभो ॥४७॥

मालेस्तु वसुदायस्यामनलानिलनामकौ ॥
हरः संपातिरित्येते बिभीषणहिते रताः ॥४८॥

अथ तैर्बहुधाऽमस्य वरदानेन पीडिताः ॥
त्रिदशा शरणं जग्मुर्भगवन्तं महेश्वरं ॥ ४९

तानुवाच त्रिमयनो ममावध्या हि तेऽसुराः ॥
शरणं गच्छत हरिं हनिष्यति स तान्प्रभुः ॥ ५० ॥

प्राप्योपायं शंकरात्ते देवा राक्षसपीडिताः ॥
शरण्यं शरणं जग्मुर्विष्णुं प्रणतवत्सलम् ॥ ५१ ॥

दत्वाऽभयं तान्सोऽमर्त्यान् शंखचक्रगदाधरः ॥
स्वस्थानं प्रेषयामास तद्वात्वोवाच माल्यवान् ॥ ५२॥

भ्रातरौ प्रार्थितः श्री शः सुरैः सोऽस्मान्निशाचरान् ॥
हन्तुं प्रतिज्ञां कृतवान् किंकर्तव्यमतः परम् ॥ ५३ ॥

सुमालिमालिनौ रा म मत्तान्चतुरग्रजम् ॥
हतव्यास्त्रिदशा यैर्नो घातार्थं प्रार्थितोऽच्युतः ॥ ५४ ॥

इति कृत्वा मतिं म त्ता देवान्हन्तु समुद्यताः ॥
चतुरस्त्रबलोपेता लंकायास्ते विनिर्गताः ॥ ५५ ॥

तज्ज्ञात्वा द्विजरा ज स्य पृष्ठमारुह्य चक्रभृत् ॥
तानाससाद दुर्वृत्तान्हन्तु मन्तु स्मरन्प्रभुः ॥ ५६ ॥

शस्त्रैर्जघ्नुः प्रभुं प त्ता युगपत्सर्व एव ते ॥
ततः शार्ङ्गधनुर्मुक्तैः शरैस्तानवधीद्धरिः ॥ ५७ ॥

पांचजन्य महा रा वं प्रदध्मौ पुरुषोत्तमः ॥
पेतुस्ते राक्षसा भग्ना वाहनेभ्यो भयार्दिता. ॥ ५८ ॥

त्रासयामास स म हान् शलराजरवः परान् ॥
मृगराजो महारण्ये समदानिव कुंजरान् ॥ ५९ ॥

सुमाली प्राप्तवि ज य विष्णु हन्तु धनुर्धरः ॥
ररास राक्षसो हर्षात्सतडित्तोयदो यथा ॥ ६० ॥

सुमालिनो निर्भ य स्य सारथेरिषुणा शिरः ॥
चिच्छेद त्रिजगन्नाथो भ्रांतास्ते तस्य वाजिनः ॥६१॥

अथ मालिशरा ज न्ये कार्तस्वरविभूषिताः ॥
विविशुर्हरिमासाद्य क्रौञ्च पत्ररथा इव ॥ ६२ ॥

सोऽर्द्यमानोपि सु य शा बहुभिर्मालिनः शरैः ॥
न चुक्षुभे रणे विष्णुर्जितेंद्रिय इवाधिभिः ॥ ६३ ॥

मालिनं त्रिदशा रा तिं क्रूरं विमुखमाशुगैः ॥
चकार पातयन्मौलिं ध्वज चाप तुंरगमान् ॥ ६४ ॥

जघान गदया म ध्ये ललाट स खगेश्वरम् ॥
गरुत्मान् विमुखश्चक्रे जितमाजौ पराङ्मुखम् ६५ ॥

पराङ्मुखोऽपि स श्रीशः शस्त्रियंस्खलितकंधरः ॥
मालिनोपातयच्छीर्षं चक्रेणानुलतेजसा ॥ ६६ ॥

हते मालिनि तौ रा जन्सुमाली माल्यवानुभौ ॥
सवलौ शोकसनद्धौ लङ्कामेव प्रधाविनौ ॥ ६७ ॥

सगरु मान्महा म न्युः पक्षवातेन राक्षसान् ॥
द्रावयामास देवोऽपि ममर्दारिगदेषुभिः ॥ ६८ ॥

पेतुर्हता. सिं्नु जले राक्षसाश्छिन्नमस्तकाः ॥
माल्यवान्केशव प्राह क्रोधप्रस्फुरिताधरः ॥ ६९ ॥

नारायण त्वं सु य शाः क्षत्रधर्मं पुरातनम् ॥
न वेत्स्ययुद्धमनसो भीतान्हंसि यथेतर ॥ ७० ॥

उवाच तेजसा रा शिः सुराणामभय मया ॥
उत्सादनेन भवतां तदेतदनुपाल्यते ॥ ७१ ॥

शक्त्या विष्णु बाहु म ध्ये स बिभेदाशु माल्यवान् ॥
हरेरुरसि सा रेजे मेघस्थेव शतह्रदा ॥ ७२ ॥

तामेव शक्तिम त्रु न्‍ प्रभुरुत्कृष्य तेजसा ॥
चिक्षेप सा माल्यवत बिभेदोरसि दारुणा ॥ ७३ ॥

मोह प्राप्तोऽपि का य स्य क्षतं सो ऽगणयन्बली ॥
आश्वस्तोऽप्यवधीद्देव पुनः शूलेन वक्षसि ॥ ७४ ॥

तथैव देवरा ज स्य माल्यवान्मुष्टिनाऽनुज ॥
ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ ७५ ॥

विष्णु खगेश च य दा राक्षसोऽताडयत्पुन ॥
गरुड पक्षवातेन सुदूर तमपोहयन् ॥ ७६ ॥

दृष्ट्वैवाग्रजमा रा त्त द्रावित पक्षिणा तथा ॥
सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ ७७ ॥

गरुत्मतः पक्ष म रुद्धूलोद्धूतः ■ माल्यवान् ॥
स्वबलेन समागम्य ययौ लङ्का ह्रिया वृतः ॥ ७८

एव भग्न रणे श्री मन्राम ते बहुशोऽरय॰ ॥
त्यक्त्वा लकां गता वस्तु पाताल स्वजनावृताः ॥ ७९॥

ये त्वयाद्य हता रा जन् पौलस्त्या रजनीचराः ॥
माल्यवत्प्रमुखाः सर्व एतेभ्यो बलवत्तराः ॥८०॥

न चान्योद्भूतसा म ध्यो हता लोकेषु राक्षसान् ॥
विना नारायण राम शखचक्रगदाधरम् ॥ ८१ ॥

राम नारायणोऽज्ञ स्य॰ साक्षात्त्व प्रभुरव्ययः ॥
राक्षसान्हन्तुमुत्पन्न॰ शरणागतवत्सल॰ ॥ ॥ ८२॥

हतस्त्वया वधो य स्य राक्षसस्य रघूत्तम ॥
जन्म प्रभाव तस्य त्व रावणस्य निबोध मे ॥ ८३ ॥

स सुमाली सुरा रा तिर्यदायातो रसातल ॥
तदा धनाधिपो लंकामावसत्पुत्रपौत्रवान् ॥ ८४ ॥

अथैकदा प्रभो म र्त्यलोकमादाय कन्यकां ॥
सुमाली व्यचरत् पश्यन् वर दुहितुरात्मन ॥ ८५ ॥

तदा विश्रवस स न्मप्रद द्रष्टु धनेश्वरम् ॥
गच्छत पुष्पकेनेद्यमपश्यल्लोकनायकम् ॥ ८६ ॥

सविस्मयोऽचिंत य त्स रक्षसा श्रेयमुत्तम ॥
किं कृत्वैवमचिराद्वर्धेमहि कथ वयम् ॥ ८७॥

अथाब्रवीदात्म ज नीं कैकसीं स्वरसातले ॥
पुत्रि प्रदानकालस्ते न च विज्ञायते वर॰ ॥ ८८ ॥

तस्य विश्रवस य त्वा सेवया वरय स्वयम् ॥
ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न सशयः ॥८९॥

ता तच्छ्रुत्वा वचो रा त्रिचरकन्या स्वय ययौ ॥
उपसृत्य प्रदोषे त चरणाधोमुखी स्थिता ॥९०॥

विभिन्न-तीमय म हीमगुष्ठाग्रेण सुन्दरीं ॥
विश्रवा वीक्ष्य पप्रच्छ का त्व कार्य च किं तव ॥९१॥

एवमुक्ता तु सा श्रीमन् कृतांजलिरथाब्रवीत् ॥
आत्मप्रभावेन मुने ज्ञातुमर्हसि मे मतं ॥ ९२ ॥

विद्धि मां तपसां राशे शासनात्पितुरागतां ॥
ब्रह्मर्षे कैकसीं नाम शेषं त्वं ज्ञातुमर्हसि ॥ ९३ ॥

तां ध्यात्वोवाच राम-या विज्ञातं ते मनोगतं ॥
सुताभिलाषो मत्तस्ते मत्तमातंगगामिनि ॥ ९४ ॥

उपस्थिता मां रजनीमुखे त्वं दारुणे ततः ॥
सविष्यसे पृथुश्रोणि राक्षसान् क्रूरकर्मणः ॥ ९५ ॥

साब्रवीत्साऽश्रुनयना भगवन् ब्रह्मवादिनः ॥
त्वत्तः कुपुत्रान्नेच्छामि प्रसादं कर्तुमर्हसि ॥ ९६ ॥

सोऽब्रवीत्तां पुष्कराक्षीं पश्चिमो यः सुतस्तव ॥
मम वंशानुरूपः स भविष्यति शुभानने ॥ ९७ ॥

एवमुक्ता तु सा राम ये नीलांजनचयोपमं ॥
दशास्यं विंशतिभुजं जनयामास सा सुतं ॥ ९८ ॥

तस्य राम यदा जन्म तदोत्पाताः सुदारुणाः ॥
बभूवुर्भूमिकम्पाद्याः सर्वलोकभयप्रदाः ॥ ९९ ॥

कृतस्तस्याह्वयो यस्तु प्रभूतो दशकंधरः ॥
द्विबाहुरेकवक्त्रश्च कामरूपोऽपि सोऽभवत् ॥ १०० ॥

तस्य त्वनंतरं जज्ञे कुंभकर्णो महाबलः ॥
ततः शूर्पणखा राम धर्मात्मा च बिभीषणः ॥ १०१ ॥

जातो बिभीषणो यर्हि पुष्पवर्षं तदाऽपतत् ॥
नभस्थाने दुंदुभयो देवानां प्राणदंस्तथा ॥ १०२ ॥

तावरण्ये महाराज ववृधाते महौजसौ ॥
कुंभकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ १०३ ॥

कुंभकर्णस्तु प्रमत्तो महर्षीन्धर्मवत्सलान् ॥
भक्षयन्विचचारोग्रो न संतुष्टो जगत्त्रये ॥ १०

विभीषण: शुचि श्री मान् नित्यं धर्मे व्यवस्थितः ॥
स्वाध्यायाहारनियतो बुद्धिमान्विजितेंद्रियः ॥ १०५ ॥

अथ राजन् राज ग जस्तत्र कालेन केनचित् ॥
आगतः पितरं द्रष्टुं पुष्पकेन धनेश्वर ॥ १०६ ॥

तं दृष्ट्वा कैकसी म ग्ना दुःखे पुत्रं दशानन ॥
प्राह पश्य दशग्रीव भ्रातरं भाग्यशालिनम् ॥ १०७ ॥

भ्रातृभावे समे ऽ स्त त्वं पश्यात्मानं त्वमीदृश ॥
तथा यत्न कुरु यथा भवेर्वैश्रवणोपमः ॥ १०८ ॥

प्राह मातरं य स्माच्छ्रीदतुल्यो ऽधिकोपि वा ॥
भविष्याम्योजसा मातः संतापं त्यज हृद्गत ॥ १०९ ॥

स इत्युक्त्वाभीध रा भ तपोर्थं कृतनिश्चयः ॥
दशग्रीवो ययौ राम गोकर्णं सानुजो वशी ॥ ११० ॥

स कुंभकर्णः सु म हत्तपश्चके महातपाः ॥
शीतवृष्टिसहो ग्रीष्मे पंचाग्नीन्परितः स्थितः ॥१११॥

तस्य साधुः सोऽपि ज न्मा नित्य धर्मरतः शुचिः ॥
पंच वर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ११२ ॥

तावतीश्च समा य तः स्वाध्याये धृतमानसः ॥
तस्थावूर्ध्वशिरोबाहुः सहस्रांशुं विलोकयन् ॥ ११३ ॥

दशकंठोऽपि सोऽज स्त्रं निराहारो दृढासनः ॥
पूर्णे वर्षसहस्रे स्व शिरो वन्हौ जुहाव ह ॥ ११४ ॥

छेत्तु कामोऽभूत्तस्य य दा दशास्यो दशमं शिरः ॥
वरदस्त्रिदशैः सार्द्धं प्राप्तस्तत्र पितामहः ॥ ११५ ॥

अमरावतीं सुरा रा ध्यो वरं वरय वां स्थितं ॥
महासत्त्व दशग्रीव सफलस्ते परिश्रम. ॥ ११६ ॥

हृष्टः स तस्मिन्स म ये प्रबद्धांजलिरब्रवीत् ॥
नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ ११७ ॥

ततः प्रोवाच तं श्रीमान् भगवांश्चतुराननः ॥
नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ ११८ ॥

एवमुक्ते तदा राम ब्रह्मणा लोककारिणा ॥
दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ ११९ ॥

सुपर्णयक्षाग्र सदैत्यदानवरक्षसाम् ॥
अवध्योऽहं प्रजाध्यक्ष भवेयं त्वत्प्रसादतः ॥ १२० ॥

अन्येषु चिंता न त्व मे नास्त्येवामरपूजित ॥
तृणभूता हि मे सर्वे प्राणिनो मानुषादयः ॥ १२१॥

इत्येवमुक्तस्तु ततः स वचनमुवाच पितामहः ॥
भविष्यत्येव मे तत्ते वचो राक्षसपुंगव ॥१२२॥

हुतानि यानि धीरा त्वं मस्तकानि त्वया पुरा ॥
पुनस्तानि भविष्यन्ति तथैव तव राक्षस ॥ १२३ ॥

कामरूपश्च संग्रामे भविष्यसि दशानन ॥
एवमुक्तस्योत्थितानि यानि शीर्षाणि रक्षसः ॥ १२४ ।

अथाब्रवीत्पुनस्तत्र साध्वाचार विभीषणं ॥
परितुष्टोऽसि धर्मात्मन् वरं वरय सुव्रत ॥ १२५॥

कृताञ्जलिः स प्रयतः प्राह लोकगुरुं स्वयम् ॥
प्रीतस्त्वं कृतकृत्योऽस्मि वृतः सर्वगुणैरहम् ॥ १२

दातव्यश्चेत्कज त्वं मे वरस्तच्छृणु वत्सल ॥
परमापद्गतस्यापि धर्मे भवतु मे मतिः ॥ १२७ ॥

अस्त्रेषु प्रवर च त्वत्प्रसादात्तव वत्सल ॥
अशिक्षितं च ब्रह्मास्त्रं भगवन् प्रतिभातु मे ॥१२८॥

सदा धर्मनया राम मा धर्मपालनसादरा ॥
सर्वत्र बुद्धिर्मे देव भवतु त्वत्प्रसादतः ॥ १२९ ॥

तमाह देव ब्रह्म हान् सर्वमेतद्भविष्यति ॥
राक्षसोऽप्यसि साधुस्त्वममरत्वं ददामि ते ॥ १३०

कुंभकर्णाय च श्री मान् वर दातुमवस्थित ॥
स देव परमत्रस्ता प्राहु माजल्य सुरा ॥ १३१ ॥

कुंभकर्णेनाम–रा–दा, महेन्द्रानुचरा दश ॥
नन्दनेप्सरस सप्त भक्षिता ऋषयोप्यज ॥ १३२ ॥

भक्षिता बहवोऽ म र्त्या एववीर्यो वरादते ॥
एष लब्धवर स्याचेद्भक्षयेद्भुवनत्रयम् ॥ १३३ ॥

वरव्याजेनाब्ज ज ने मोहेस्मिं दीयता प्रभो ॥
लोकाना स्वस्ति चैव स्याद्भवेदस्य च सम्मते ॥१३४॥

एवमुक्तोऽचित य स्त ब्रह्मा देवहिते रत ॥
चिंतिता चोपतस्थेऽस्य पार्श्वे देवी सरस्वती ॥ १३५॥

विधिस्तामाह धी रा णा भजतामिष्टकारिणी ॥
वाणि त्व राक्षसेंद्रस्य भव वाग्देवतेप्सिता ॥ १३६ ॥

तथेत्युक्त्वा ह ष्ट म ति प्रविष्टा सा सरस्वती ॥
धाता तमाह व स त्व वर वरय यो मत ॥ १३७ ॥

स कैकस्या आत्म ज स्त प्रभु तन्मोहितोऽब्रवीत् ॥
स्वप्नु वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ १३८ ॥

तथेति कृतमा य स्त मोक्ता प्रायात्पितामह ॥
सरस्वती जहौ कृत्वा देवकार्य निशाचरम् ॥ १३९ ॥

दशकठस्यानु ज श्च चितयामास दु खित ॥
ईदृश किमिद वाक्य ममाद्य वदनाच्च्युतम् ॥१४०॥

हताह मोहितो य त्वादेवैर्मन्ये समागते ॥
एव गते किं कर्तव्य वचितेन मयारिभि ॥ १४१ ॥

लब्ध्वा वरान्स्तेच रा स्ते न्यवसन्पितुराश्रमे ॥
तदाकर्ण्य प्रहृष्टात्मा सुमाली तानुपागत ॥ १४२ ॥

मातामह स कु म तिस्त दशग्रावमब्रवीत् ॥
दिष्ट्या न स त्वया प्राप्तश्चिंतितोय मनोरथ ॥ १४३॥

अभिवाद्य गुरु श्री द प्राह भ्रातुर्यदीप्सित ॥
स प्राजलि सुत प्राह शृणु पुत्र वचो मम ॥ १५७ ॥

लकापुरापहा रा र्थ मुक्त्वा मम सन्निधौ ॥
मया निर्भर्त्सितश्चासौ बहुशो न शम गत ॥१५८॥

वरप्रदानस म त्तो मायामान्य न वेति स ॥
क्रूरात्मा मम शापाच्च दारुणा प्रकृति गत ॥१५९॥

कैलास राजरा ज त्व गच्छ तात सहानुग ॥
निवेशय पुर तत्र निवासार्थं सुखी भव ॥ १६० ॥

पितृवमुक्त सु य शा कैलास गिरिशालय ॥
सदारपुत्रसचिव सधन सानुगो गत ॥ १६१ ॥

प्रहस्तोऽथ मुदा रा विचराधीश दशानन ॥
प्राह लकापुरी शून्या त्यक्त्वैना धनदो गत ॥ १६२ ॥

दशानन प्राप्त म ह सानुज सबलस्तदा ॥
विवेश सन्सुहृत्त्यक्ता शाका ल्का महामहा ॥१६३॥

तत्राभिषिक्त स्व ज नैरवसद्दशकधर ॥
अलकाया च कैलासे रचिताया धनेश्वर ॥ १६४ ॥

विद्युज्जिव्हाभिधा ा स्व स्वसार दानवाय स ॥
ददौ शूर्पणखा प्रीत्या कालकेयाय राक्षस ॥१६५॥

मदोदरी मय ज नि वृत्वा दशकधर ॥
मायाविद्दुह्यनुजा हेमाकुक्षिसमुद्भवा ॥ १६६ ॥

वैरोचनस्य प्र य ता दौहित्री समकल्पयत् ॥
वज्रज्वालाभिधा भार्या कुम्भकर्णस्य रावण ॥१६७॥

गधर्वाणा तथा रा ज शैलूषस्य महामन ॥
सरमा नाम धर्मज्ञा भार्या लेभे विभीषण ॥ १६८ ॥

मदोदरीशो म त्र वो पायोदमिवातुल ॥
पुत्र महेंद्रजेतार मेघनादमजीजनत् ॥ १६९ ॥

ज्ञानमात्रेण हि श्री मंस्तेन रावणसूनुना ॥
स दत्तो सुमहान् मुक्तो नादो घनरवोपमः ॥ १७० ॥

स मत्तो रक्षसां रा जा जगत्पीडामथाकरोत् ॥
तच्छ्रुत्वा धनदो दूतं प्रेषयामास कोविदं ॥ १७१ ॥

तत्संदेशं स सु म तिः कथयामास तद्धितं ॥
मैवं कुरु जगत्पीडां धर्म एव स्थितिर्हिता ॥ १७२ ॥

निराकृतोऽप्यग्र ज स्तं बहुशो राक्षसाधिप ॥
सापराधोपि बालोहि रक्षितव्यः स्वबांधवैः ॥ १७३ ॥

कैलासे वसतो य न्मे वृत्तं शृणु दशानन ॥
तत्र देवो मया दृष्ट उमया सहितः प्रभुः ॥ १७४ ॥

सव्यं चक्षुर्मया रा जन् देवादेव्यां निपातितं ॥
कान्वेषेयेव सहजं नखल्वन्येन हेतुना ॥ १७५ ॥

जगद्धात्र्यास्तु सु म हत्तेजो निरुपमं हि तत् ॥
देव्या दिव्यप्रभावेण दग्ध सव्यं ममेक्षणं ॥ १७६ ॥

भगवत्यास्तु ते ज स्तद्द्रष्टुं चक्षुर्न मे क्षमं ॥
रेणुध्वस्तमिव ज्योतिः पिंगलत्वमुपागतं ॥ १७७ ॥

ततो गतोहं नि य तस्तटं तस्य गिरेः परम् ॥
तूर्ष्णी वर्षशतान्यष्टौ सुव्रतं समधारयम् ॥ १७८ ॥

समाप्ते नियमेऽ.ज न्मा तत्र देवो महेश्वरः ॥
ततः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः ॥ १७९ ॥

प्रीतोऽस्मि जनिता य स्त्वत्तपसानेन सुव्रत ॥
मया चैतद्व्रतं चीर्णं त्वया चापि म्हात्थितं ॥१८०॥

व्रतादस्मादुष्क रा त्त्वं सखा भव ममानघ ॥
पिंगलत्वमवाप्ति यच्चक्षुर्देव्या निरीक्षणात् ॥ १८१ ॥

एकापिंगेति ना म त्वं प्राप्य ख्यातो भविष्यसि ॥
एवं प्राप्तप्रसादेन लब्धानुज्ञांच शंकरात् ॥ १८२ ॥

आगतेन मया श्री मन् श्रुतस्ते पाप निश्चयः ॥
तदधर्माभिरतस्व मृत्युदात्कुलदूषणान् ॥ १८३ ॥

संनियम्य मनो रा जन् पुण्यां कीर्तिमुपार्जय ॥
त्रियते हि यथोपायः सर्षिसंघैः सुरैस्तव ॥ १८४ ॥

एवमुक्तः क्रूर म तिः कोपसंरक्तलोचनः ॥
हस्तान् दतांश्च सपिष्य दशास्यो वाक्यमब्रवीत् ॥ १८५ ॥

ज्ञातं वचस्ते सु ज्ञ ड ब्रूहि मा पुनरीदशम् ॥
नैव त्वमसि नैवासौ भ्राता येनासि चोदितः ॥ १८६ ॥

हरसख्य श्राव य ते मूढो ब्रूते न मे हित ॥
तन्नैव क्षमणीयं मे यदेतद्भाषितं त्वया ॥ १८७ ॥

न हतव्या राज रा जो ज्येष्ठो भ्रातेति मर्षितं ॥
त्रीन् लोकानपि जेष्यामि तस्यैकस्य कृते चिरान् ॥ १८८

तेन सार्धं तान्य म स्य क्षयं नेष्यामि लोकपान् ॥
इत्युक्त्वाऽसुं ददौ हत्वा दूतमाज्ञां स रक्षसां ॥ १८९ ।

भक्ष्याज्ञां राजरा ज स्य वरसपन्मदोद्धतः ॥
सेनामाज्ञापयामास रक्षसां कामरूपिणां ॥ १९० ॥

ततः कृतस्वस्त्य य नो रथमारुह्य रावणः ॥
त्रैलोक्यविजयाकांक्षी ययौ यत्र धनेश्वरः ॥ १९१ ॥

बलेन यक्षान ज यन्माणिभद्रमुखान् रणे ॥
जहार पुष्पकं जित्वा माययास्त्रैश्च सोऽग्रजं ॥ १९२ ।

वार्यमाणो मया य त्त्वं नावगच्छसि दुर्मते ॥
पश्चादस्य फलं प्राप्य तप्स्यसे निरयं गतः ॥ १९३ ॥

इति शप्त्वा राज रा जो युद्ध तेन सहाकरोत् ॥
पपात मूर्च्छितो नीतः स यक्षैर्नंदनं वन ॥ १९४ ॥

आरुह्य पुष्पक म थ प्रहृष्टः स दशाननः ॥
जित त्रिभुवनं मेने गर्वोत्सिकाःसुदुर्मतिः ॥ १९५ ॥

ततः शरवणे श्री मत्पुष्पक ब्रह्मनिर्मितं ॥
दिव्यं निरुद्धसंचारमभवत्सहसाद्भुतम् ॥ १९६ ॥

कुतोनु स्तंभितं रा ज व्योमयानमिति स्वकैः ॥
मीमांसमाने सचिवैः सह तस्मिन् दशानने ॥ १९७ ॥

नंदीश्वरो मित म हा आजगाम त्रिशूलभृत् ॥
उवाच स तमा क्ति राक्षसेंद्रमशंकितः ॥ १९८ ॥

निवर्तस्वाशु र ज नीचर क्रीडति शंकरः ॥
प्रभुणा सर्वभूतानामगम्योयं कृतो गिरिः ॥ १९९

तच्छ्रुत्वा रक्तन य नः पुष्पकादवरुह्य सः ॥
कोऽयं शंकर इत्युक्त्वा त दृष्ट्वा वानराननम् ॥२००॥

अवज्ञाय समा रा ध्यं द्वितीयमिव शंकरं ॥
श्रीमदांधो जहासोच्चैर्नंदीश्वरमसत्तमः ॥ २०१ ॥

नंदी तमाह सा म र्षो यस्मान्मां कपिरूपिणं ॥
अवज्ञाय प्रहासं त्वं कृतवान् बलदर्पितः ॥ २०२ ॥

तस्मान्मद्रूपते ज स्का मनःसंपातरंहसः ॥
उत्पत्स्यंति वधार्थं हि कुलस्य तव वानराः ॥ २०३ ॥

एवं शप्ते तास्य य स्य निश्चयेोत्यप्रहर्षतः ॥
देवदुंदुभयो नेदुः पुष्पवृष्टिश्च खाच्युता ॥ २०४ ॥

अचिंतयित्वा स ज गत्पतिप्रतिनिधेर्वचः ॥
पर्वतं तं समासाद्य वाक्यमाह दशाननः ॥ २०५॥

क्रीडा ते गोपते य त्र पुष्पकस्य गतिस्त्वया ॥
यतश्छिन्ना त तवेमं समुन्मूल करोम्यगं ॥ २०६ ॥

केनैजसात्र मा रा रिर्नित्य क्रीडति राजवत् ॥
विज्ञातव्य न जानीषे भयस्थानमुपस्थित ॥ २०७ ॥

एवमुक्त्वा स सा म र्थ्याद्विक्षिप्याधो गिरेर्भुजान् ॥
तोलयामास त शीघ्र स शैलः समकपन ॥ २०८ ॥

गिरेश्चालनतः श्री मत्युमा सा भगवत्यपि ॥
चचालाल्गिंतवती मानिन्यपि महेश्वरं ॥ २०९ ॥

ततो राम पुरा रा तिर्देवानां प्रभवो हरः ॥
पादांगुष्ठेन तं शैलं पीडयामास लीलया ॥ २१० ॥

पीडितास्तद्भुजा म ध्ये मूल राम महागिरेः ॥
विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ॥ २११ ॥

तेनातिरोषाद्भु ज गप्रभवाच्चतिपीडनात्॥
मुक्तो विरावः सहसा त्रैलोक्यं येन कंपितं ॥ २१२ ॥

महादेवं तोप य स्व नीलकंठमुमापतिं ॥
तमृते शरणं नान्यं पश्यामोऽत्र दशानन ॥ २१३ ॥

इत्युक्तो रक्षसां रा जा सचिवैः स तथाकरोत् ॥
सर्वं सरसहस्रं तु रुदतो रक्षसो गतम् ॥ २१४ ॥

ततः प्रणम्य स म नः स्थिरीकृत्य महेश्वरं ॥
तुष्टाव सामभिः स्तोत्रैर्विविधैः करुणार्णवं ॥ २१५ ॥

ततः प्रीतः प्राह ज गत्पतिर्मुक्त्वा भुजान्प्रतं ॥
शैलक्रांत्या यो मुक्तस्त्वयारावः सुदारुणः ॥ २१६ ॥

भीतं च शङ्कितं य स्मादेतल्लोकत्रयं भृशं ॥
तस्मात्त्वं रावणो नाम्ना ख्यातो राजन्भविष्यसि ॥२१७

अनुज्ञातोऽथ व्र-ज त्वमित्युक्तो रावणोऽब्रवीत् ॥
यदि देव प्रसन्नोसि वरं मे देहि याचतः ॥ २१८ ॥

अवध्यत्वं मया य त्प्राप्तं देव चतुर्मुखात् ॥
निर्विघ्नमायुषः शेष शस्त्रं च त्व प्रयच्छ मे ॥२१९॥

एवमुक्तः स्मरा-रा-तिश्चंद्रहासमसिं वरं ॥
शापायानाश्यं च ददावायुष. शेषमीश्वरः ॥२२०॥

आज्ञामवाप्य न-म-न्नं कल्पायारुह्य पुष्पकं ॥
ततो महीतलं राम पर्यक्राम स रावणः ॥२२१॥

क्षत्रियान् बलिनः श्री मान् बाधमानश्चरन् भुवि ॥
कन्यामपश्यद्धिमवद्वने ऽजिनजटाधराम् ॥ २२२ ॥

तामपृच्छ स स्म रा तं: का त्वं कस्येति सा सती ॥
विधिना तस्य चातिथ्य कृत्वोवाच तपस्विनी ॥२२३

कुशध्वजो नाम म म ब्रह्मर्षिरमितप्रभः ॥
बृहस्पतिसुतस्तातो बुध्या यो गुरुणा समः ॥ २२४

तस्याह कुर्वतो अ–स वेदभ्यास महात्मनः ॥
सभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता २२५

सुरारिभि कतो य त्नो मदर्थ राक्षसेश्वर ॥
विष्णुरेवात्यभिप्रेतो जामाता मत्पितुः प्रभु ॥ २२६

दैत्येन शंभुना म श्री सुप्तस्तातो हतस्ततः ॥
तनुं तस्य परिष्वज्य प्रविष्टाग्नि प्रसूर्मम ॥ २२७ ॥

पितुर्मनोरथ म ह सत्य कर्तुं निरन्तर ॥
तमेव जगतां नाथ हृदयेन समुद्वहे ॥ २२८ ॥

कर्तुं स्व सफल ज न्म चरामि विपुल तप ॥
कथित वृत्तमेतन्मे गच्छ पौलस्त्यनंदन ॥ २२९ ॥

श्रुत्वाऽब्रवीत्स भू य स्तां यौवन तेऽतिवर्तते ॥
त्रैलोक्यसुंदरि त्व मे भव भार्या शुचिस्मिते ॥२३०॥

कस्तैरत्न न वि जा ने वने वस्तु त्वमर्हसि ॥
वीर्येण तपसा भोगैर्न स विष्णुर्मया सम ॥२३१ ॥

प्रोवाच त सा प्र य ता मामेव जगदीश्वर ॥
त्वदते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥२३२॥

एवमुक्ते तया रा जन् कन्यां तां मूर्धजेषु स. ॥
बलाज्जग्राह कामान्ध' सा चुकोप तपस्विनी ॥२३३॥

केशान् परातान् ▪ म–त्वान् कन्या वेदवती तदा ॥
कराग्रेणाच्छिनत्सद्भभार नीतेन तेजसा ॥ २३४ ॥

मर्तुं कृतत्वरा श्री मन्नुवाच तमघाचल ॥
घर्षिता यास्त्वयानार्य न मे जीवनमिष्यते ॥ २३५ ॥

यथार्थं ते पुना रा त्रिचरोत्पत्स्ये तपोस्ति चेत् ॥
प्रख्याताऽयोनिजा साध्वी भवेयं धर्मिणः सुता २३६

युक्त्वा सा तत्र म नाः प्रविष्टा जातवेदसं ॥
सैषा श्रीजानकी भार्या तव त्वं विष्णुरव्ययः ।

प्रापाद्गौरवी ज स्थं मरुत्तं रावणस्ततः ॥
भयान्महेन्द्रः संवृत्तो मयूरस्तस्य रक्षसः ॥

वायसोऽभूत्तत्र य मः कृकलासो धनेश्वरः ॥
संवृत्तो वरुणो हंसस्तिर्यग्योनिं गताः सु॰

तमासाद्य महा रा जं मरुत्तं राक्षसाधिपः ॥
प्राह युद्धं प्रयच्छेति निर्जितोस्मीति

स द्विषन्नीरद म रुन्मरुत्तः प्राह को भवान् ॥
अवहासं ततो मुक्त्वा रक्षसां

अविस्मयेन रा ज न्य भृशं प्रीतोस्म्यहं तव ॥
धनदस्यानुजं यो मां नावगच्छसि १।

लोके कोन्योस्त्यहो य स्त्वं मां न जानाति विश्रुतं ॥
भ्रातरं येन निर्जित्य विमानमिदमाहृतं

तं दशास्य मनु ज राट् स मरुत्तस्तदाब्रवीत् ॥
धन्यः खलु भवान् येन ज्येष्ठो

श्लाघ्यो जगत्सु सु य शास्त्वादृशोऽन्यो न विद्यते ॥
क त्वं प्राकेवल धर्मं चरित्वा ८०५

श्रुतपूर्वं न मे रा जन् यादृशं भाषसे स्वयं ॥
तिष्ठेदानीं नमे जीवन्प्रतियास्यसि दुर्मते ,

प्रेषयामि त्वां यम-स्य सद्यं तीक्ष्णैः शरैरह ॥
इत्युक्त्वा धनुष्पाणिः समराय स निर्ययौ

बृहस्पत्यनुजः श्री मान्संवर्तो दीक्षितं नृपम् ॥
वारयामास सत्रस्य स निवृत्तो गुरोर्गिरा ॥ २४८ ॥

तं मत्वा निर्जितं रा जन् राक्षसः शुकनामकः ॥
रावणो जयतीत्युच्चैर्घोषयामास हर्षितः ॥ २४९ ॥

भक्षयित्वा तत्र य त्तो यज्ञवाटीस्थितानृषीन् ॥
गतो दशाननोऽन्यत्र नृपानन्याञ्जयन् भुवि ॥२५०॥

शक्रो मयूरं मु ञ गाम भयं तव सर्वथा ॥
इदं नेत्रसहस्रं मे त्वद्बर्हेषु भविष्यति ॥ २५१ ॥

मयर्माणेऽतिश य तो मयि त्वं प्राप्स्यसे मुदम् ॥
इत्यब्रवीद्धर्मराजो वायसं त्वमरोगभाक् ॥ २५२ ॥

त्वत्तो मृत्युर्मद्व रा त्ते न भविष्यति सर्वथा ॥
त्वयि तृप्ते संतुष्टास्ते ये च मद्विषये स्थिताः ॥२५३॥

वर्णस्तवास्तु वि म लश्चंद्रमण्डलसंनिभः ॥
हसमित्यब्रवीद्राजा यादसां वरदस्तदा ॥ २५४ ॥

प्रसन्नो राजरा ज श्च कर्कलासं तदाऽब्रवीत् ॥
स्वर्णवर्णं तव शिरो मम प्रीत्या भवत्विति ॥ २५५ ॥

एवं दत्तवरा य ते समाप्ते भूभुजा सह ॥
देवाः स्वभवनं याताः सर्वे शक्रपुरोगमाः ॥ २५६ ॥

केचिद्धतास्तेन ज गत्यधिपाः शासनातिगाः ॥
निर्जिताः स्नेहमापन्नाः केचिन्नीतिविशारदाः ॥ २५७॥

भीमान्दुष्मन्तोग य श्च गाधिश्च सुरथस्तथा ॥
पुरूरवाश्चोक्तुरेते वयं तात त्वया जिताः ॥ २५८ ॥

अयोध्याधिपती रा जा योनरण्याभिधो महान् ॥
निर्जिता राक्षसास्तेन हरिणा हरिणा इव ॥ २५९ ॥

पातयामास तं भ ग्रां तलेनाहत्य रावणः ॥
उपहासं दशग्रीवश्चक्रे मदोद्धतः ॥ २६० ॥

---

१ सरटा.

मर्तुं कृतत्वरा श्रो मन्नुवाच तमधाचल ॥
धर्षिता यास्त्वयानार्य न मे जीवनमिष्यते ॥ २३५ ॥

वध थं ते पुना रा त्रिचरोत्पत्त्यै तपोस्ति चेत् ॥
प्रख्याताऽयोनिजा साध्वी भवेय धर्मिण सुता २३६

इत्युक्त्वा सा तत्र म ना प्रविष्टा जातवेदस ॥
सैषा श्रीजानकी भार्या तव त्व विष्णुरव्यय ॥२३७॥

प्रायादुशीरबी ज स्थ मरुत्त रावणस्तत. ॥
भयान्महेन्द्र सवृत्तो मयूरस्तस्य रक्षस ॥ २३८ ॥

वायसोऽभूत्तत्र य म कृकलासो धनेश्वर ॥
सवृत्तो वरुणो हसस्तिर्यग्योनि गता सुरा ॥ २३९ ॥

तमासाद्य महा रा ज मरुत्त राक्षसाधिप ॥
प्राह युद्ध प्रयच्छेति निर्जितोस्मीति वा वद ॥२४०॥

स द्विषन्नीरद म रुन्मरुत्त. प्राह को भवान् ॥
अवहास ततो मुक्त्वा रक्षसा पतिरब्रवीत् ॥ २४१ ॥

अविस्मयेन रा ज न्य भृश प्रीतोस्म्यह तव ॥
धनदस्यानुज यो मा नावगच्छसि रावण ॥ २४२ ॥

लोके कोन्योस्त्यहो य स्त मा न जानाति विश्रुत ॥
भ्रातर येन निर्जित्य विमानमिदमाहृत ॥ २४३ ॥

त दशास्य मनु ज राट् स मरुत्तस्तदाब्रवीत् ॥
धन्य खलु भवान् येन ज्येष्ठो भ्राता रणे जित २४४

श्लाघ्यो जगत्सु सु य शास्त्वादृशोऽन्यो न विद्यते ॥
क त्व प्राक्केवल धर्म चरित्वा लब्धवान् वर ॥२४५॥

श्रुतपूर्व न मे रा जन् यादृश भाषसे स्वय ॥
तिष्ठेदानीं नमे जीवन्प्रतियास्यसि दुर्मते ॥ २४६ ॥

प्रेषयामि ला य म-स्य क्षय तीक्ष्णै शरैरह ॥
इत्युक्त्वा धनुष्पाणि सगराय स निर्ययौ ॥ २४७ ॥

बृहस्पत्यनुजः श्री मान्संवर्तो दीक्षितं नृपम् ॥
वारयामास सत्रस्थं स निवृत्तो गुरोर्गिरा ॥ २४८ ॥

तं मत्वा निर्जितं रा जन् राक्षसः शुकनामकः ॥
रावणो जयतीत्युच्चैर्घोषयामास हर्षितः ॥ २४९ ॥

भक्षयित्वा तत्र म त्तो यज्ञवाटस्थितानृषीन् ॥
गतो दशाननोऽन्यत्र नृपानन्याञ्जयन् भुवि ॥२५०॥

शक्रो मयूर मु ज गान्न भयं तव सर्वथा ॥
इदं नेत्रसहस्रं मे त्वद्बर्हेषु भविष्यति ॥ २५१ ॥

वर्षमाणेऽतिश य तो मयि त्वं प्राप्स्यसे मुदम् ॥
इत्यब्रवीद्धर्मराजो वायसं त्वमरोगभाक् ॥ २५२ ॥

स्वतो मृत्युर्मद्र रा त्ते न भविष्यति सर्वथा ॥
त्वयि तृप्ते संतुतृप्ता ये च मद्विषये स्थिताः ॥२५३॥

वर्णस्तवास्तु नि म लश्चंद्रमण्डलसंनिभः ॥
हंसमित्यब्रवीद्राजा यादसां वरदस्तदा ॥ २५४ ॥

प्रसन्नो राजरा ज श्च कर्कलासं तदाऽब्रवीत् ॥
स्वर्णवर्णं तव शिरो मम प्रीत्या भवत्विति ॥ २५५ ॥

एव दत्तवरा य ज्ञे समाप्ते भूभुजा सह ॥
देवाः स्वभवन याताः सर्वे शक्रपुरोगमाः ॥ २५६ ॥

केचिद्धतास्तेन ज गत्यधिपाः शासनातिगाः ॥
निर्जिताः सख्यमापन्न केचिन्नीतिविशारदाः ॥ २५७॥

धीमान्दुष्यन्तोग य श्च गाधिश्च सुरथस्तथा ॥
पुरूरवाश्चोचुरेते वयं तात त्वया जिताः ॥ २५८ ॥

अयोध्याधिपती रा जा योनरण्याभिधो महान् ॥
निर्जिता राक्षसास्तेन हरिणा हरिणा इव ॥ २५९ ॥

पातयामास तं म ह्यां तलेनाहत्य रावणः ॥
उपहासं दशग्रीवश्चक्रे बलमदोद्धतः ॥ २६० ॥

---

१ सरदा

साऽनरण्यो नृप श्री मानब्रवीत्त दशाननम् ॥
यदि सम्यक् कृतो धर्मस्तर्हि सत्य वचोऽस्तु मे ॥२६१॥

उपत्स्यते कुले रा ज्ञामिक्ष्वाकूणा सतामिह ॥
रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति ॥ २६२॥

महानाद प्राप्त म हैस्ताडितो देवदुन्दुभि ॥
तस्मिनुदाहृते शापे पुष्पवृष्टिश्च खाच्युता ॥ २६३ ॥

ततोऽनरण्यो रा ज न्यश्रेष्ठ प्राप्तस्त्रिविष्टपम् ॥
ददर्श घनपृष्ठस्त नारद राक्षसेश्वर ॥ २६४॥

कृताभिवादन प त्त विजये दशकधरम् ॥
देवर्षिरब्रवीदुक्त नेद ते मृतमारणम् ॥ २६५ ॥

हत एव क्षय रा जन् लोको मृत्युवशो यत ॥
किमर्थ बाध्यते तात त्वया वध्येन दैवते ॥२६६॥

जित एव त्वया म र्त्यलोकोऽय नात्र सशय ॥
अवश्यमेभि सर्वैश्च ग तव्य यमसादनम् ॥ २६७ ॥

तन्निगृण्हीष्व ते ज स्विन् यम परपुरजय ॥
तस्मिञ्जिते जित सर्व भवत्येव न सशय ॥ २६८ ॥

जगाम जेतु स य म देवर्षिप्रेरितो बली ॥
तत्पूर्व नारदो गत्वा स्वयमतकमब्रवीत् ॥ २६९ ॥

विजेता राजरा ज स्य ससैन्यो दशकधर
उपयाति वश नेतु विक्रमैस्त्वा सुदुर्जयम् ॥ २७० ॥

अत्रातरे तादृ य द्द पुष्पक दर्शन गतम् ॥
प्राणिनो मोचितास्तेन बालिना निरय गता ॥ २७१॥

प्रेतसरक्षका रा क्ष पितृणा सचिवास्तथा ॥
मंत्रिणो दशकण्ठस्य युयुधुस्ते परस्परम् ॥ २७२ ॥

भग्ना वीरास्ते य म स्य रौद्रेणास्त्रेण रक्षसा ॥
तत स्वय धर्मराजो युयुधे तेन शत्रुणा ॥ २७३ ॥

समरात्रं रणः श्री दशास्या तेनामितौजसा ॥
कृतः स्वयं कृतान्तेन सार्धं परमदारुणः ॥ २७४ ॥

यमराक्षसयो रा सीत्सुद्धं तुमुलं प्रभो ॥
प्रजापतिं पुरस्कृत्य द्रष्टुं तत्रागताः सुराः ॥ २७५ ॥

राक्षसेन्द्रोऽपि स म रे धर्मराजोऽपि राघव ॥
आत्मनो जयमाकांक्षन् परं चक्रे परिश्रमम् ॥ २७६ ॥

मृत्युराह यमं ज न्येयं मुञ्च त्वं धर्मराज माम् ॥
नहि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ २७७ ॥

शंभुर्विरोचनो य श्च नमुचिः शंबरः सच ॥
हतो हिरण्यकशिपुः किमुताय निशाचरः ॥ २७८ ॥

उवाच तं धर्म रा जस्त्वं तिष्ठेन निहन्म्यहम् ॥
इत्युक्त्वा कालदंडं स तोलयामास पाणिना ॥२७९॥

महर्तुकामे श म ने तेन दंडेन रावणम् ॥
पितामहः प्रभुः साक्षाद्दर्शयित्वा तमब्रवीत् ॥२८०॥

कुरुष्कममर्काल ज मे न त्वमितविक्रम ॥
न हंतव्यस्त्वयानेन दण्डेनैष निशाचरः ॥ २८१ ॥

मया प्रसन्नेन य म प्रदत्तोऽस्मै वरः खलु ॥
स त्वया नानृतः कार्यो दंड मा मुञ्च रक्षाति ॥२८२॥

इत्युक्तो धर्मरा ज स्तं चतुर्वदनमब्रवीत् ॥
एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥२८३॥

एवमुक्त्वाऽथ स य मस्तत्रैवांतर्हितोऽभवत् ॥
रावणो नाम विश्राव्य निर्गतः कालसादनात् ॥२८४॥

ततो रसातलं रा जा राक्षसानां जगाम सः ॥
तत्र भोगवतीं जित्वा पुरीं वासुकिपालिताम् ॥२८५॥

ययौ पुरीं मणि म यीं निवातकवचैः सह ॥
चक्रे युद्धं राक्षसेन्द्रस्तत्र सत्सरो गनः ॥ २८६ ॥

आजगाम विधिः श्री मान् दैत्यांस्तानित्युवाच स. ॥
न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः ॥ २८७ ॥

भवन्तोपि प्रवी रा नो शक्या जेतुं सुरादिभिः ॥
रावणस्य सखित्वं मे भवद्भिः सह रोचते ॥ २८८ ॥

ब्रह्माज्ञया ते स म रान्निवृत्ताः स च रावणः ॥
सख्यं निवातकवचैः सार्धं चक्रे ऽग्निसाक्षिकम् २८९।

तत्रोष्य वर्षं र जं नीचरेंद्रो हततापसः ॥
असुरेभ्यः सखित्वेन मायानां शतमाप सः ॥ २९० ॥

गत्वाऽश्मनगरं प तः कालकेयान्बलोत्कटान् ॥
जघ्ने शूर्पणखायाश्च भर्तारमसिनाच्छिनत् ॥ २९१ ॥

वरुणस्यालयं रा ह्रः कैलासमिव भास्वरम् ॥
अपश्यत्सुरभिं तत्र क्षीरोदो यत्पयोभवः ॥ २९२ ॥

संपूज्यतां प्रीत म ति. सोऽजयद्वरुणात्मजान् ॥
श्रुत्वा प्रचेतसं ब्रह्मलोकस्थं निर्गतस्ततः ॥ २९३ ॥

निवृत्तो राक्षसो ज न्हे मार्गे राजर्षिकन्यकाः ॥
देवपन्नगगंधर्वयक्षासुरवरात्मजाः ॥ २९४ ॥

दर्शनीयां हि यां य त्र सोऽपश्यद्दशकंधरः ॥
हत्वा बंधुजनं तस्या विमाने तां रुरोध सः ॥ २९५ ॥

ताः सर्वा योषितोऽ ज स्रं मुमुचुर्बाष्पजं जलम् ॥
अलं निनिंदुः शोकार्ताः शपन्त्यस्तं महाखलम् ॥२९६॥

अनिन्दुस्ताः स्वानि प ति कन्यकाश्च सभर्तृकाः ॥
विलेपुः सुभृशं स्मृत्वा पितृन्भ्रातॄ. पतीन्सुतान् ॥२९७॥

क्रोधादूचुः सम रा मा यस्मात्परवधूरतः ॥
तस्मात्प्राप्स्यस्ययं मृत्युं स्त्रीकृतेनैव दुर्मतिः ॥ २९८ ॥

सतीभिः परमा म र्यादेवं वाक्येऽभ्युदीरिते ॥
दिव्या दुन्दुभयो नेदुः पुष्पवृष्टिः पपात च ॥२९९॥

स बभूव गत-श्री-कः सतीभिः शप्त उद्धतः ॥
शुद्धतस्तद्गतात्तस्य तेजोहानिर्न युद्धतः ॥ ३०० ॥

प्रविवेश पुरीं रा जा पूज्यमानो निशाचरैः ॥
एतस्मिन्नतरे घोरा तत्स्वसा विललाप सा ॥३०१॥

शोके शूर्पणखां म र्मां सांत्वयन्नाह रावणः ॥
सुखं मातुः स्वसुः सूनोः खरस्य वस संनिधौ ॥३०२॥

खरोऽयं यातु रा ज स्ते करिष्यति वचः सदा ॥
इत्युक्त्वा दंडकारण्यं प्रेषयामास तां तदा ॥ ३०३ ॥

निकुंभिला नाम य त्तल्लंकोपवनमुत्तमम् ॥
कर्मसिद्धेर्हेतुभूतं प्रविवेश दशाननः ॥ ३०४ ॥

तत्रापश्यत्सुरा रा तिर्मेघनादं स दीक्षितं ॥
कृष्णाजिनधरं मूर्तं तेजोराशिमिव स्थितं ॥ ३०५ ॥

तमालिंग्योत्सुक म ना ब्रह्मचारिणमात्मजं ॥
पप्रच्छ विस्मितो राजा स्वयं किमिदमित्यथ ॥३०६॥

तमाह शुक्रो य-ज्ञ-ने रतोऽयं तव नंदनः ॥
अग्निष्टोमादयो यज्ञाः सप्तानेन कृताः प्रभो ॥३०७॥

सत्रं माहेश्वरं य ज्वा कृत्वा पशुपतेः प्रभो ॥
वरान् सुदुर्लभान्प्राप्तो घननादो महायशाः ॥ ३०८ ॥

अब्रवीद्रावणो ब्र स्तं न शोभनमिदं कृतं ॥
पूजिताः शत्रवो यस्माद्द्रव्यैरिंद्रपुरोगमाः ॥ ३०९ ॥

एहीदानीं कृतं य द्धि सुकृतं तन्न संशयः ॥
आगच्छ सौम्य गच्छामः स्वमेव भवनं प्रति ॥३१०॥

ततो गत्वा गृहं रा जा सपुत्रः सबिभीषणः ॥
स्त्रियोऽवतारयामास विमानाद्बाष्पगद्गदाः ॥ ३११ ॥

बिभीषणोथ गु म तिर्मास्यवचनया निला ॥
तस्याः कुंभीनसी कन्या सास्माकं धर्मतः स्वसा ॥३१२॥

मधुना सा हृता श्री मन्येतस्य परयोषितां ॥
हरणस्य फलं मन्ये स्वसुर्धर्षणमल्पनः ॥ ३१३ ॥

आसक्तेऽस्मिन्मध्वरा त्वां कर्मण्येतद्भून्प्रभो ॥
कुंभकर्णोपि संसुप्ते उद्वासर्गते मयि ॥ ३१४ ॥

इत्याह रावणो म बीनिर्जगाम पुराद्द्रुत ॥
चत्वार्यक्षौहिणीनां स सहस्राणि गृहीतवान् ॥ ३१५ ॥

पृष्ठगोपोऽस्यानुजन्मा कुंभकर्णो महाबलः ॥
अग्रगो मेघनादोभूद्दशकंठस्य गच्छतः ॥ ३१६ ॥

विभीषणः स न य विलंकायां रक्षणे स्थितः ॥
गतो मधुपुरं दैत्यैर्दानवैः सह रावणः ॥ ३१७ ॥

न ददर्श मधु रा म भगिनी तत्र दृष्टवान् ॥
भीता कुंभीनसी भ्रातुः शिरसा चरणौ गता ॥३१८॥

व्याकुलां पतितां म त्वां दृष्ट्वा स दशकंधरः ॥
तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ॥ ३१९ ॥

साब्रवीद्यदि रा ज न्मे प्रसन्नस्त्वं महाभुज ॥
भर्तारं न ममेहाद्य हतुमर्हसि मानद ॥ ३२० ॥

स तामाह क प्रि य स्ते मम शीघ्रं निवेद्यतां ॥
सह तेन गमिष्यामि सुरलोकं जयोद्यतः ॥ ३२१ ॥

तच्छ्रुत्वा यातुरा ज स्य वचः कुंभीनसी मधुं ॥
सुप्तमुत्थाप्य तं भ्रात्रे दर्शयामास सादरा ॥ ३२२ ॥

रक्षः स्वसु स प्रि य कृन्मधुना पूजितः सुखं ॥
तत्रैकां रजनीं प्रोष्य ततः कैलासमागतः ॥ ३२३ ॥

तत्र चंद्रोदये रा त्रौ कामार्तो रम्यकानने ॥
दैवाद्ददर्श रंभां तां करे जग्राह रावणः ॥ ३२४ ।

नत्वा तमाह सा म ह्यमनुज्ञां दातुमर्हसि ॥
स्नुषास्मि तव धर्मेण नलकूबरभोग्यता ॥ ३२५ ॥

तामाह रावणः श्रीमान् मर्यादेयं सुरैः कृता ॥
पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः ॥ ३२६ ॥
इत्युक्त्वा तां स स्म रा तौ बलाद्भुक्त्वा महाबलः ॥
मुमोच सा पपातार्ता नलकूबरपादयोः ॥ ३२७ ॥
श्रुत्वा तयोक्तं सोऽ म र्षादशपन्नलकूबरः ॥
धर्षयिष्यत्यकामां चेत्कामार्तः परयोषित ॥ ३२८ ॥
मत्तस्य मोहाद्रु ज तो मार्गेणानेन दुर्मतेः ॥
मूर्द्धा तु सप्तधा तस्य शकलीभविता ध्रुव ॥३२९॥
एवं दशास्यः स य दा शप्तस्तेन महात्मना ॥
देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात तान् ॥३३० ॥
श्रुताच्छापात्सुघो रा त्स त्रस्तो रात्रिचराधमः ॥
नारीषु मैथुनीभावं नाकामास्वभ्यरोचयत् ॥ ३३१ ॥
ततः स जेतुम म रान् प्रययावमरावतीं ॥
विष्णोः समीपमागत्य सुदीनो जिष्णुरब्रवीत् ॥३३२ ॥
विष्णो नारायणा त्र त्वमुपायं वद मे प्रभो ॥
वरदृप्तो दशमुखः समरार्थं समागतः ॥३३३॥
तमाह देवोति य शाश्वकी शक्रं भयाकुलं ॥
परित्रासो न कर्तव्यः श्रूयतामित्र मे वचः ॥३३४॥
नैवैष रावणोऽ ज-य्यस्त्रिदशैद्र सुरासुरैः ॥
काल एव हनिष्यामि नंदयिष्यामि यो धरं ॥३३५॥
देवैः सह स्वयं य त्तो भव युध्यस्व निर्भयः ॥
इत्युक्तो विष्णुना जिष्णुर्युयुधे रक्षसा सम ॥३३६॥
राक्षसा युधि शू रा स्ते सुराश्च सुमहाबलाः ॥
चक्रुरत्यद्भुतं कर्म प्राज्यनानोद्यतायुधा ॥ ३३७ ॥
सुमालिना ते स-म-रे हन्यमाना महौजसा ॥
न व्यतिष्ठन्त सन्दा वातेनेव निपीडिताः ॥ ३३८ ॥

रावणेन यथा श्रीदः पूर्वं युद्धे निपातितः ॥
तथैव मेघनादेन जयतः शक्रनन्दनः ॥३३९॥

दौहित्रो मूर्च्छितो राजन् पुलोम्नाभ्यपवाहितः ॥
स तं जयं समुद्र प्रविष्टोऽब्धिं महासुरः ॥३४०॥

कुम्भकर्णोऽपि समरं चकार परमाद्भुतम् ॥
प्राप्ताः पराभवं देवाः सर्वे तस्मादघोंतकात् ॥३४१॥

रावणो देवराजश्च चक्रतुस्तुमुलं रणम् ॥
तत्र ये प्रेक्षकास्ते खे चित्रतां भेजिरे क्षणम् ॥३४२॥

शक्रः सुरानाह यन्मे रोचते शृणुतामराः ॥
अवध्योऽयं दशग्रीवो जीवन्नेव निगृह्यताम् ॥ ३४३ ॥

त्रैलोक्यभुग्यतेऽराती सन्निरुद्धे बली मया ॥
एवमेतस्य पापस्य निरोधो रोचते मम ॥ ३४४ ॥

मत्र कृत्वैवम मरैः सार्धं अक्त्वा दशाननम् ॥
तं ग्रहीतुमना राम सोऽकरोद्रक्षसां क्षयम् ॥ ३४५ ॥

मेघनादस्तदा जन्ये प्राप्ता पशुपतेर्वरात् ॥
वितत्य तामसी माया शक्रं जग्राह मोहितम् ॥३४६॥

स्वतातग्रहणे यत्तः गृहीत्वाजौ शतक्रतुम् ॥
बध्वा स्थाप्य स्वसेनाया स्वयं रावणमब्रवीत् ॥३४७॥

तात जातोऽयं विजन्यो गृहीतो मघवा मया ॥
विजितो मायया कामी ना यथानघमामया ॥३४८॥

रोमाचितोऽतिप्रियवाक् श्रवणाद्रावणस्तुतम् ॥
सुतं धन्यस्त्वमित्याह भीतवादेशतैः स्तुतम् ॥३४९॥

पुनराह सुरारातिः पृष्ठतस्त्वानुयाम्यहम् ॥
शतागमधिरोप्य त्वं नय लंका शतक्रतुम् ॥३५०॥

नीते पुरीं शतमखे घननादेन तेजसा ॥
प्रजापतिं पुरस्कृत्य ययुर्लंका सुरास्तदा ॥ ३५१ ॥

आसाद्य राक्षसं श्री-मानब्रवीत्त पितामहः ॥
वत्स रावण तुष्टोऽस्मि पुत्रस्य तव विक्रमात् ॥२५२॥

जितो यतो देव रा जो मेघनादेन संगरे ॥
जगतीन्द्रजिदित्येवमेष ख्यातो भविष्यति ॥ २५३ ॥

मुच्यतां शत-म-खो महाबाहो दशानन ॥
किं चास्य मोक्षणार्थाय प्रयच्छंतु दिवौकसः ॥२५४॥

याह तत्काय-ज स्तमिंद्रजित्समितिंजयः ॥
अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ २५५॥

ततोऽब्रवीद्भूरि-य-शा मेघनादं प्रजापतिः ॥
नास्ति सर्वामरत्वं हि प्राणिनः कस्यचिद्भुवि ॥२५६॥

स तमाह सुरा-रा-ध्यं स्यंदनेऽग्नेः समुत्थिते ॥
तिष्ठतोऽ मरता मेस्याद्वर एष वृतो मया ॥२५७॥

एवमस्त्विति सा-म-ज्ञस्तमुवाच प्रजापतिः ॥
मुक्तश्चेंद्रजिता शक्रः सुराश्च त्रिदिवं गताः ॥२५८॥

दीनोऽभूद्देवरा-ज स्तं ब्रह्मोवाच शतक्रतो ॥
अहल्याधर्षणस्यैतत्फलं प्राप्तं खलु त्वया ॥ २५९ ॥

प्रजानां परमं य त्नमया रूपं समुद्धृतं ॥
ततः स्त्री निर्मिता पूर्वं रत्नभूता जगत्त्रये ॥२६० ॥

हलं वैरूप्यमो ज स्विन्हल्यतत्प्रभवं तु यत् ॥
तन्निधारं न यस्या सा नाम्नाऽहल्येति कीर्तिता॥२६१॥

कस्य भार्या महा य स्य भवित्रीयं जगत्स्विति ॥
मम चिंताऽभवद्रत्नभूतां निर्माय तां भृशं ॥ २६२ ॥

स्थानाधिकतया रा मां त्वं जानीषे ममेति तां ॥
गौतमे सा मया न्यस्ता न्यासभूतावसच्चिरं॥ २६३ ॥

तेन प्रत्यर्पिता म हामाविकारेण चेतसा ॥
मुनेर्ज्ञात्वा महाधैर्यं तस्मै सा स्पर्शिता मया ॥ २६४ ॥

---

रा

सा त्वया धर्षिता श्री मन्कामार्तेन समन्युना ॥
दृष्टस्त्वं गौतमेनासि शप्तश्चात्युग्रतेजसा ॥ ३६५ ॥

धर्षणान्मम दा र णां शत्रुहस्तं गमिष्यसि ॥
गौतमेनैवमुक्तस्त्वं तस्यैतत्फलमागतं ॥ ३६६ ॥

अहल्यां चाप्यति म हा गौतमः स तदाब्रवीत् ॥
दुर्विनीतेऽधुना ध्वंस ममाश्रमसमीपतः ॥ ३६७ ॥

यस्मात्तुरूपता ज न्या दुर्वाक्त्वमनवस्थिता ॥
तस्माद्रूपवती लोके न त्वमेका भविष्यसि ॥ ३६८ ॥

इत्युक्ता सा विन य तः प्रांजलिर्मुनिमब्रवीत् ॥
वंचितोस्मि मुने तेन त्वद्रूपेण दिवौकसा ॥ ३६९ ॥

नाहं दुष्टा तपो रा शे प्रसादं कर्तुमर्हसि ॥
तयैवं प्रार्थितः शांतक्रोधस्तामाह गौतमः ॥ ३७० ॥

उपस्थ्यतेऽद्भुत म हा इक्ष्वाकूणां महारथः ॥
आतिथ्यं तस्य कृत्वा त्वं पूता मां पुनराप्स्यसि॥३७१॥

स्मर तदेवरा ज त्वं दुष्कृतं यत्त्वया कृतं ॥
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितं ॥ ३७२ ॥

तच्छीघ्रं वैष्णवं य ज्ञं कुरु शक यथाविधि ॥
पावितः क्रतुना तेन प्राप्स्यसि त्रिदिवं पुनः ॥३७३॥

महारातेस्तनू ज स्ते पुलोम्नाश्च पवाहितः ॥
नीतः समुद्रे कुशली स त्वागताऽचिराद्गृहे ॥३७४॥

तच्छ्रुत्वा वैष्णवं य ज्ञमिष्ट्वा देवेश्वरस्ततः ॥
पुनस्त्रिदिवमाक्रामदन्वशाद्य स पूर्ववत् ॥ ३७५ ॥

एतद्बल महा रा ज मोक्तामिन्द्रजितो मया ॥
निर्जितस्तेन देवेंद्रः प्राणिनोन्ये तु किं पुनः ॥३७६॥

आश्चर्यमिति रा म श्च लक्ष्मणश्चाब्रवीत्तदा ॥
अगस्त्यवचनं श्रुत्वा वानरा राक्षसाश्च ते ॥ ३७७ ॥

अगस्त्यं राघवः श्रीमानब्रवीद्भगवान्यदा ॥
बभ्राम पृथिवीं सर्वां रावणो राक्षसेश्वरः ॥ ३७८ ॥

तदा लोकास्तपो राशे शून्या आसन्किमंग यत् ॥
धर्षणं यत्र न प्राप्ता हतवीर्या उताभवन् ॥ ३७९ ॥

तमगस्त्योऽगाधमतिः प्रहसन्नाह राघवं ॥
चचार रावणो भूमिं बाधमानो धरापतीन् ॥३८०॥

ततो माहिष्मतीं जन्यकामः प्राप्तो वरोद्धतः ॥
यत्रासीदर्जुनो राजा साक्षादग्निश्च सर्वदा ॥ ३८१ ॥

स दशास्यो दिने यस्मिन्प्राप्तो माहिष्मतीं पुरीं ॥
तस्मिन्नेव दिने रंतुमर्जुनो नर्मदां गतः ॥ ३८२ ॥

आख्याते सचिवै राज्ञोऽसान्निध्ये सर्वशर्मदां ॥
विंध्यं चित्रं महाशैलं ययौ पश्यन्स नर्मदां ॥ ३८३ ।

मज्जय नर्मदां मध्ये पुलिनं दशकंधरः ॥
जांबूनदमयं लिंगं पूजयामास सादरं ॥ ३८४ ॥

ननर्त सामानि जगावीश्वरस्याग्रतस्तदा ॥
नर्मदायाः प्रतिस्रोतः प्रवृद्धं जलमाययौ ॥ ३८५ ॥

नर्मदापुलिने यत्र राक्षसेंद्रः स रावणः ॥
शिवस्य पूजामकरोत्तस्मादेशाददूरतः ॥ ३८६ ॥

तत्र रेवासिंधुजले सदारः सोऽर्जुनः प्रभुः ॥
क्रीडन् रुरोध कुतुकी दोःसहस्रेण तां नदीं ॥३८७॥

तस्याः सवेगपयसः संप्रेषित इवाद्भुतः ॥
पुष्पोपहारं सकलं जहार त्रिदशद्विपः ॥ ३८८ ॥

तं वेगप्रभवं ज्ञातुं सोन्वैटुं शुकसारणौ ॥
आदिशत्तौ गतौ व्योममार्गगौ पश्चिमामुखौ ॥ ३८९॥

गत्वार्द्धयोजनं मध्ये नर्मदं महिलाशतं ॥
सहस्रबाहुं क्रीडंतं पुरुषं समपश्यतां ॥ ३९० ॥

तावागम्योचतुः श्रीमन् कोऽपि ताल्योञ्छ्रितः पुमान् ॥
योषितः क्रीडयत्यारान्नदीं रुद्ध्वा भुजैः प्रभो ॥३९१॥

ज्ञात्वा तमर्जुनं राहुः प्रभाकरमिव स्वयम् ॥
प्रमत्तो रावणः प्रागान्नृपतिं युद्धलालसः ॥ ३९२ ॥

तन्मंत्रिणः क्रुधा मत्तः प्राह गंभीरया गिरा ॥
युद्धार्थं रावणः प्राप्त इत्याख्यातासु हैहयं ॥ ३०३ ॥

उत्तस्थुः सायुधा जन्यकामं तं ते तदाब्रुवन् ॥
युद्धस्य कालो विज्ञातः साधु भो साधु रावण ॥३९४ ॥

क्षीवं योषिद्रतं यस्त्वं योद्धुमुत्सहसे नृप ॥
श्वो वा युध्यस्व हत्वास्मानर्जुनेन सहाद्य वा ॥३९५॥

ततोऽतिदुष्टाचारास्ते सचिवास्तस्य रक्षसः ॥
हत्वा तान् भक्षयामासुः क्षुधिताः कुणपाशनाः ॥३९६॥

तदा बभूव सुमहास्तीरे हलहलाध्वनिः ॥
हैहयाधिपयोधानां युध्यतां चापि रक्षसां ॥ ३९७ ॥

दशास्यसचिवा जघ्नुः कार्तवीर्यस्य तद्बलं ॥
तस्य कर्माशु कथितं पुरुषैरर्जुनाय तत् ॥ ३९८ ॥

तच्छ्रुत्वा शत्रुभयदः स्त्रीजनं नर्मदांभसः ॥
उत्ततार न भेतव्यमित्युक्त्वा कुपितोऽर्जुनः ॥ ३९९ ॥

गदामादाय स जवः स सहस्रभुजोऽर्जुनः ॥
अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४०० ॥

स्थितं प्रहस्तमग्रेऽन्यं रुद्ध्वा तन्मुसलं कृती ॥
वंचयित्वा तं गदया पातयामास मूर्छितं ॥ ४०१ ॥

तं दृष्ट्वा पतितं राज्ञो भीताः सर्वे निशाचराः ॥
शुकसारणमारीचा अपसृष्टा रणाजिरान् ॥ ४०२ ॥

दशाननः सोऽनिमन्युर्नृपमभ्यद्रवत्तदा ॥
रावणार्जुनयोर्युद्धमभद्रोमहर्षणं ॥ ४०३ ॥

एतनान्तेरेऽर्जुनः श्रीमान् गदिनं राक्षसेश्वरं ॥
सर्वप्राणेनाजघान गदया भीमवेगया ॥ ४०४ ॥

रक्षसो वज्रसारासा वत्राते महोरसि ॥
दुर्बलेव गदा राम द्विधाभूताऽपतत्क्षितौ ॥४०५॥

दशाननोऽप्यति महाप्रहारेणापराङ्मुखः ॥
अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् ॥ ४०६ ॥

ततो हैहयराजस्तं शत्रुमालक्ष्य विह्वलं ॥
सहसोपेत्य जग्राह गरुत्मानिव पन्नगं ॥ ४०७ ॥

दोःसहस्रेण सुप्रशा गृहीत्वा तं दशाननं ॥
बबंध बलवान् राजा बलिं नारायणो यथा ॥ ४०८ ॥

बध्यमाने सुराशसौ साधु साध्विति वादिनः ॥
पुष्पवृष्टिं सुराश्चक्रुः कार्तवीर्यस्य मूर्द्धनि ॥ ४०९ ॥

व्याघ्रो मृगमिवामर्षी व्यगृह्येभं यथा हरिः ॥
ररास हैहयो राजा दर्पादम्बुदवन्मुहुः ॥ ४१० ॥

प्रहस्तो गततेजस्कं बद्धं दृष्ट्वा दशाननं ॥
मुख्यैर्निशाचरैःसार्धमभिदुद्राव हैहयं ॥ ४११ ॥

स महस्तैस्तदान्यैस्तैः क्षिप्तं वरायुध ॥
तदेवादाय तेनैव तान् जघान महाभुजः ॥ ४१२॥

तदा युद्धेस्तान् रजनीचरान्स समरेऽर्जुनः ॥
भित्वा विद्रावयामास वायुरंबुधरानिव ॥ ४१३ ॥

आदाय रक्षःक्षय कृत्सोऽर्जुनस्तं दशाननं ॥
प्रविवेश पुरीं पौरैः विप्रैः शक्र इवार्चितः ॥४१४॥

तदाकर्ण्य तपोराशिः पुलस्त्यो भगवानृपि ॥
प्रार्थयामास तं भूप पौत्र मुंच ममेति सः ॥४१५ ॥

सख्यं कृत्वाऽद्भुत महाः सम्पूज्य दशकंधरं ॥
विमुच्य तं ब्रह्मसुत विससर्ज कृतांजलिः ॥४१६॥

पुलस्त्यः स मुनि॰ श्री मान्मोचयित्वाऽलजात्मज ॥
जगाम ब्रह्मणो लोक शोक नैव ददाति य ॥४१७॥

पुन पृथ्वी चचा रा रिभमान्कुर्व-महीक्षित॰ ॥
ततो जगाम किष्किधा नगरीं वालिपालितां ॥४१८॥

गत्वा जुहावाशु स सो वालिन हेममालिन ॥
तारस्तारापितोवाच युद्धकाम दशानन ॥ ४१९ ॥

गतः स ऋक्षर ज सः पुनः प्रतिबलस्तव ॥
कोऽन्यः प्रमुखत' स्थातु भवतोऽपि कपि' क्षम ॥४२०॥

संध्यामन्वास्य नि य माश्चतुःसिंधुष्य आत्मवान् ॥
अस्मिन्समय आयाति वाली तिष्ठ मुहूर्तक ॥ ४२१ ॥

त्व पश्यैतानस्थि रा शीन् य एते शंखपाण्डुरा' ॥
युद्धार्थिनामिमे राजन् हताना वालिना द्विषा ॥४२२॥

त्वया यद्यपि सा म थ्यं प्राप्त माप्यामृताशनात् ॥
तथाप्यासाद्य कीशेन्द्र समाप्त तव जीवित ॥४२३॥

तमिदानीमिह ज गच्चित्र त्वं पश्य वालिन ॥
तिष्ठ क्षण जीवितं तु दुर्लभं ते भविष्यति ॥४२४॥

अथवा त्वरसे य त्वान् मर्तु त्व राक्षसाधिप ॥
दक्षिण सागर गच्छ तत्र द्रक्ष्यसि वालिन ॥४२५॥

इत्युक्तो गर्व पु ज स्त तारं निर्भर्त्स्य रावणः ॥
दक्षिणाब्धि गतोऽपश्यद्वाग्नि भानुसन्निभं ॥४२६॥

ग्रहीतुकामा नि य मात्सध्योपासनतत्पर ॥
पृष्ठतो वालिनमरिर्नि शद्वपदमन्वगात् ॥४२७॥

सार्वभौमो वान रा प्या दृष्ट्वा दुष्ट यदृच्छया ॥
स्थितस्तथैव नियमे स चकार न सभ्रमं ॥४२८॥

हस्तग्राह्य तु त म त्वा पादशद्वेन रावण ॥
पराङ्मुखोऽपि जग्राह वाली सर्पमिवाण्डज ॥४२९॥

ग्रहीतुकामं तं श्री मान् गृहीत्वा राक्षसं हरिः ॥
समुत्पपात वेगेन कृत्वा कक्षावलंबिनम् ॥ ४३० ॥

॥ रावणं जह्वा रा रिं विनुदन्तं नखैर्मुहुः ॥
मुमोक्षयिपवो ऽमात्या गर्जन्तस्तमभिद्रुताः ॥४३१॥

अन्वीयमानो व्यो म स्तस्तैर्दशाननमन्त्रिभिः ॥
रराज वेगवान् वाली जलदैरंशुमानिव ॥४३२॥

अशक्नुवन्तो ऽति ज वं तं प्राप्तुं ते निशाचराः ॥
तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥४३३॥

ततः स वाली प्र य यौ क्षिप्रं पश्चिमम् अर्णवम् ॥
कृत्वा संध्याविधिं तत्र गतः सागरमुत्तरम् ॥४३४॥

प्राप्य पूर्वं च वा री शिं वहमानो निशाचरम् ॥
तत्र संध्यामुपास्याथ किष्किंधामागतो हरिः ॥४३५

गतश्रीकं हत म दं कक्षाक्रान्तं दशाननम् ॥
किष्किंधोपवने वाली मुमोच प्रहसन्मुहुः ॥ ४३६॥

उवाच कपिरा ज स्तं कुतः कस्त्वमिति प्रभुः ॥
॥ प्राह वानरेन्द्राहं राक्षसेन्द्रो ऽस्मि रावणः ॥ ४३७

अहो बलं ते ऽति य शो यत्त्वया वानरेश्वर ॥
अहं गृहीत्वा पशुवद्भ्रामितश्चतुरो ऽर्णवान् ॥ ४३८ ॥

भ्रमाणामेव हि ज गत्यद्भुतैषा सदागतिः ॥
मनो ऽनिलसुपर्णानां तव चात्र न संशयः ॥४३९॥

दृष्टमद्य बल य त्ते तादिच्छामि कपीश्वर ॥
त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः ॥ ४४०

दाराः पुत्राः पुरं रा ष्ट्रं भोगाच्छादनभोजनम् ॥
सर्वमेव विभक्तं नौ भविष्यति हरीश्वर ॥ ४४१ ॥

ततस्तदाहृष्ट म तौ लाभुभावग्निसाक्षिकम् ॥
भ्रातृत्वमुपसंपन्नौ परिष्वज्य परस्परम् ॥ ४४२ ॥

बलमप्रतिमं श्री मन् वालिनो भवदुत्तमम् ॥
सोऽपि त्वया विनिर्दग्धः शलभो वन्हिना यथा ॥४४३

तं कुंभसंभवं रा जा राघवः स तदाऽब्रवीत् ॥
वालिरावणयोरल्पमधिकं मारुतेर्बलम् ॥ ४४४ ॥

दाक्ष्य धैर्यं विक्र म श्च प्राज्ञता नयसाधनम् ॥
गुणा अन्ये च भगवन् हनूमति कृतालयाः ॥ ४४५॥

एकस्यास्यैव भु ज योर्मायावीर्येण जानकी ॥
प्राप्ता कीर्तिरियं श्रीश्च सौमित्रिश्च रणेजयः ॥४४६॥

जिष्णुविष्णुश्रीद य मास्तेषां न भगवंस्तथा ॥
श्रूयते तानि कर्माणि यानि युद्धे हनूमतः ॥४४७॥

पतिः किमर्थं ता रा याः सुग्रीव प्रियकाम्यया ॥
तदा वैरे समुत्पन्ने भगवन्नहतोऽमुना ॥४४८॥

न ज्ञातवानहं म न्ये भगवानात्मनो बलम् ॥
यद्दृष्टवान् जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ ४४९ ॥

तपःश्रीकोलिकुं ज लमेतन्मे भगवन् मुने ॥
विस्तरेण यथा तत्त्वं कथयामरपूजेन ॥ ४५० ॥

सत्यमेतत्प्रमो य त्वं ब्रवीष्यस्मिन् हनूमति ॥
न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ ४५१॥

अमोघशापैर्द ज पैः शापो दत्तोऽस्य राघव ॥
न वेत्ता सन् बले सर्वं बली सन्निरधं पुरा ॥ ४५२॥

श्रोतुं तवाभिमा य श्चेच्छिशुनानेन यत्कृतम् ॥
समाधाय मतिं राम निशामय वदाम्यहम् ॥४५३॥

प्रशास्ते केसरी रा ज्यं मेरौ सोऽस्य पिता प्रभो ॥
तस्य भार्याञ्जना तस्यां गर्भेर्गतोऽयमात्मजः ॥४५४

फलं मत्वा दिन य णि जपापुष्पचयोपमम् ॥
उत्पपात नभो मान्‌ः भाविनोऽनुनय विभो ॥ ४५५॥

सर्वेऽब्रुवंस्तदा श्रीमान् पयायं पवनात्मजः ॥
नाप्येवं बलवान् वायुर्न गरुत्मान्मनोऽपि नो ॥४५६॥

संत्रस्तोपसृतो राहुः शक्रं गत्वा तमब्रवीत् ॥
पुरा दत्तं मह्यमन्न तदन्यस्मै कथं त्वया ॥ ४५७ ॥

अद्य पर्वण्यर्कमनुमागतोऽन्यः सुरेश्वर ॥
आरुह्यैरावतं शक्रस्तच्छ्रुत्वागाद्यतो रविः ॥ ४५८ ॥

अथ राहुं कृतजवं शक्रात्पूर्वं समागतम् ॥
उत्पपात फलं मत्वा त ग्रहीतुमयं शिशुः ॥ ४५९ ।

त्रस्तस्य तस्याभवदः परावृत्तस्य वज्रभृत् ॥
बभूवाभिमुखः शक्रस्तदैनं रघुनंदन ॥ ४६० ॥

फलबुद्धयाहस्तिराजं तमादातुमयं यदा ॥
अभिदुद्राव वज्रेण हरिरेनमताडयत् ॥ ४६१ ॥

ततः पपातैव मह्यचलेऽसौ रघूत्तम ॥
पततो मारुतेरस्य वामा हनुरभज्यत ॥ ४६२ ॥

तदवस्थे तनुजनी पतिते वज्रताडिते ॥
चुक्रोधेंद्राय पवनः प्रजानामहिताय सः ॥ ४६३ ॥

प्रचारं स तु संयम्य प्रजास्वन्तर्गत प्रभुः ॥
गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४६४ ॥

ररोध भूतानि जगत्प्राणः सर्वाणि रोषितः ॥
विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत् ॥ ४६५ ॥

ततः प्रजा देवयक्षगन्धर्वासुरमानुषाः ॥
प्रोचुः प्रजापतिं देवं दुःखं नो नुद दुःखहन् ॥४६६॥

तद्दुःखपरिहाराय प्रजानां स प्रजापतिः ॥
वायोः समीपमागत्य शिशुं पस्पर्श पाणिना ॥४६७॥

स्पृष्टमात्रः सकमलप्रभवेण महात्मना ॥
जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ४६८ ॥

चचार पवनः श्री मान्यथापूर्वं शरीरिषु ॥
मरुद्दोषाद्विनिर्मुक्ता अभवन्मुदिताः प्रजाः ॥४६९॥

अथोवाच सुरा रा ध्य. सुरान् सर्वान् हितं वचः ॥
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति ॥४७०॥

वरान्दद ध्वम म रा, मारुतस्यास्य तुष्टये ॥
स्वर्णपद्ममयीं मालां दत्त्वोवाच शतक्रतुः ॥ ४७१ ॥

मारुतार्यं काम अ स्ते वज्रावध्यो भविष्यति ॥
हनुर्हता ततो नाम्ना भविता हनुमानिति ॥ ४७२ ॥

सूर्यश्चाह मदी य स्य तेजसः शतिकां कलाम् ॥
ददामि शास्त्राण्यप्यस्मै दास्यामि समये स्वयम् ॥४७३॥

वरुणोप्याह वा रा वा मत्पाशैर्वास्य मारुतेः ॥
वर्षायुतशतैर्मृत्युर्न भविष्यति सर्वथा ॥ ४७४ ॥

यमोवाचाथो य म श्च मम दण्डादवध्यता ॥
अनामयत्वं सङ्ग्रामेऽप्यविषादः सदास्त्विति ॥४७५ ॥

गदेयं मामिका अ न्ये नैनं जातु हनिष्यति ॥
इत्येव वरदः प्राह श्रीदस्त्र्यक्षसख. प्रभुः ॥ ४७६ ॥

अवध्योऽयं मदी य स्य शस्त्रास्त्रस्य भविष्यति ॥
इत्येवं शंकरेणापि दत्तोऽस्मै परमो वरः ॥४७७ ॥

विश्वकर्माप्याह अ गत्प्राणपुत्रो मदायुधैः ॥
अवध्यत्वमयं प्राप्तश्चिरजीवी भविष्यति ॥ ४७८ ॥

ब्रह्माह शत्रुभ य दो मित्राणामभयंकरः ॥
अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥ ४७९ ॥

कामरूपः समी रा यं सुतः कामगतिस्तव ॥
रोमहर्षकराण्येव कर्ता कर्माणि संयुगे ॥ ४८० ॥

कीर्तिं सम्पाद्य रा म स्य रावणारेर्महात्मनः ॥
साह्याप्यमतुलं कृत्वा कीर्तिमान् प्रभविष्यति ॥४८१॥

इत्युक्त्वा वरदः श्रीमान् ब्रह्मामन्त्र्य समीरणं ॥
जगाम त्रिदशैः सार्द्धं सत्यलोकमुपस्थितः ॥ ४८२॥

पुत्र केसरिदा ग णां गृह नीत्वा स मारुतः ॥
वरदानं समाख्याय तानापृच्छ्य विनिर्गतः ॥४८३॥

प्राप्तातिवरसा म ध्ये आश्रमेषु तपस्विनां ॥
अग्निहोत्राणि पात्राणि वल्कलानि व्यनाशयत् ॥४८४

पीडिताः शांतिभा ज स्ते वरज्ञानातिमन्यवः ॥
शेपुरेनं नात्मबलं ज्ञातासि स्वयमित्यलम् ॥ ४८५॥

कीर्तिस्तवान्येन य दा भवित्री स्मारिता पुनः ॥
तदांजनेय न चिराद्बलवृद्धिर्भविष्यति ॥ ४८६ ॥

एष शप्तः साप रा घो हततेजा मरुत्सुतः ॥
मृदुभावं गतो राम स्वबले जातसंशयः ॥ ४८७ ॥

शापान्तस्मिन्स्त म ये वेदाय क्ष्मात्मनः ॥
वालिसुग्रीवयोर्वैरं यदा राम समुत्थितं ॥ ४८८ ॥

गुणाधिकः कोपि ज नो मारुते रघुराज नो ॥
अर्थो व्याकरणादीनि शास्त्राण्यर्कात्समग्रहीत् ॥४८९

जगामाद्रेरुद य तो ह्यस्तगिरिं तदा ॥
सूर्योन्मुखः पृष्ठगामी सादरो रचितांजलिः ॥४९०॥

अस्य वायोस्तनू ज स्य प्रज्ञयांभोनिधेरिव ॥
कः स्यात्सदृशंतकस्येव पुरस्ताद्रघुनंदन ॥ ४९१ ॥

राघवैषोद्भूत य शाः सुग्रीवप्रमुखा इमे ॥
त्वत्कारणात्सुरैः सृष्टास्तारनीलनलांगदाः ॥ ४९२ ॥

अगस्त्यात्सानुजो रा मो वानरा राक्षसाश्च ते ॥
श्रुत्वेत्थं मारुतेः कर्म विस्मयं परमं गताः ॥४९३॥

अथोवाच प्राप्य म हं राघवं कुंभसंभवः ॥
दृष्टः संभावितश्चासि राम गच्छामहे वयम् ॥४९४॥

तच्छ्रुत्वा प्राजलि श्री मान् महर्षीन् राघवोऽब्रवीत् ॥
अद्य मे देवतास्तुष्टा पितरश्च मुनीश्वर ॥ ४९५ ॥

दर्शनाद्भवता रा य ध य पून कुल श्रुत ॥
विज्ञाप्य मेरित त कार्य भवद्भिरनुकांक्षिण ॥ ४९६ ॥

अह करिष्यामि म न्यून् प्रभावाद्भवता सता ॥
भविष्यथ सदस्या मे ममानुग्रहकांक्षिण ॥ ४९७ ॥

एवमित्येवति ते अ ग्मुर्मुनयोऽनुनयोद्यता ॥
सर्वेंदुवन्हिभिस्तुल्यरूचय शुचय सदा ॥ ४९८ ॥

जनक प्रभुरा य त्त पूजयित्वा कृताजलि ॥
मिथिला प्रेषयामास दर्शनोत्का चिरोषित ॥ ४९९ ॥

जामातृ रघुवी रा द्य प्राप्त रत्नादि तत्क्षण ॥
सीतायै प्रददौ प्राप्य प्रेम्णा दुहितृवत्सल ॥ ५०० ॥

युधाजित प्रीत म ना राम सत्कृत मातुल ॥
प्राहिणोज्जयइष्टा मा स्वपुर स ययौ मुदा ॥ ५०१ ॥

अ यानात्मा भृभु ज श्च साहाय्य कर्तुमागतान् ॥
स्वराष्ट्र प्रेषयामास सत्कृत भरताग्रतान् ॥ ५०२ ॥

नृपाणा समुदा य स्त राम त्यक्त्वा ततोऽव्रजत् ॥
दु खितोभूत्तथात्मत देही देहमिव त्यजत् ॥ ५०३ ॥

ै सहायै प्राप ज य हत्वा रावणमाहवे ॥
तेभ्य कपिभ्य प्रददौ रत्नाकल्पान् रघूत्तम ॥ ५०४ ॥

सुग्रीवस्य सहा य त्व कीर्तयित्वा पुन पुन ॥
तस्मै ददौ महार्हाणि भूषणानि रघूद्वह ॥ ५०५ ॥

विभीषण मानु रा ज तस्यामात्याश्च राक्षसान् ॥
प्रशस्य तेभ्य प्रायच्छद्रत्नालकारसचयान् ॥ ५०६ ॥

अथाकमारोप्य म रुद्वालिसुतौ सुतानिव ॥
सुग्रीवमाह श्रीराम सकाराहाविमौ सखे ॥ ५०७ ॥

मैत्रे युक्तौ तव श्रीमन् ममापि च हिते रतौ ॥
एतौ त्वया मयाप्यंग पूजनीयौ कपीश्वर ॥ ५०८ ॥

इत्युक्त्वा स्वशरी रा त्स व्यवमुच्यातिवत्सलः ॥
भूषणानि महार्हाणि तदाङ्गदहनूमतोः ॥ ५०९ ॥

बबन्धाङ्गेषु स म लंचक्रे नक्रेभतारकः ॥
बहून् मासान् दत्तमहान् वासयामास सन्निधौ ॥५१०॥

अथ काकुत्स्थरा ज स्तं सुग्रीवं सविभीषणं ॥
जाम्बवत्प्रमुखान् सर्वान् यूथपानिदमब्रवीत् ॥५११॥

यूयं मे सुहृदो य त्नाद् भवद्भिरहमुद्धृतः ॥
धन्यो राजा सुकठोयं धन्योयं च विभीषणः ॥५१२॥

धन्या यूय शरी रा न्मे प्राणेभ्यो वस्तुतः प्रियाः ॥
न्हिया स्वर्गद्रुमा व्याप्ता श्रुत्वा युष्मदुपक्रियाः ॥५१३॥

सौम्य सुग्रीवधा म त्व किष्किंधायामलंकुरु ॥
भुंक्ष्व निष्कंटकं राज्यं प्राज्यं सुखमवाप्नुहि ॥ ५१४ ॥

बिभीषणसखेऽ ज स्त्वं लंकायां वस हर्षितः ॥
स्मर्तव्योऽहं त्वया प्रीत्या गच्छ त्वं विगतज्वरः ॥५१५॥

श्रुत्वा वाक्यं सति प्र य स्य रामस्यर्क्षाश्च वानराः ॥
साधुसाध्विति तं सर्वे प्रशशंसुः पुनःपुनः ॥ ५१६ ॥

तव बुद्धिर्वरा ज न्हुकन्येव त्रिजगद्धिता ॥
माधुर्यं परमं राम भवतो वचसि स्थितम् ॥ ५१७ ॥

त्वं साश्रितानां श्रे य स्कृत् वीर्यमद्भुतं तव ॥
तेष्वित्यादि ब्रुवाणेषु हनूमान् प्रणतोऽब्रवीत् ॥५१८॥

स्नेहो मे परमो रा जन् त्वयि तिष्ठतु नित्यदा ॥
भक्तिश्च नियता वीरभावो नान्यत्र गच्छतु ॥५१९॥

यावद्रामकथा भ ह्यां चारिष्यति तवाद्भुता ॥
तावत् शरीरे वसतु प्राणा मम न संशयः ॥५२० ॥

यस्य सच्चरितं श्रीमत् कथाते रघुनन्दन ॥
तन्ममास्सरसो राम श्रावयेथुर्नरर्षभ ॥ ५२१ ॥

तच्छ्रुत्वाहमुदा रा स्य तव चर्यामृत प्रभो ॥
उत्कंठाम्प्रहरिष्यामि मेघलेखामिवानलः ॥ ५२२ ॥

एव ब्रुवाणो रा म स्तु हनूमंतं वरासनात् ॥
उत्थाय सस्वजे स्नेहात् वाक्यमेतदुवाच च ॥५२३॥

एवमेतत्कपि श्रे ष्ठ भविता नात्र संशयः ॥
चरिष्यति कथा यावदेषा लोकेषु मामिका ॥५२४॥

तावद्भविष्यति य शस्तव देहेऽसवस्तथा ।
लोकाहि यावत् स्थास्यति तावत् स्थास्यति मे कथा:५२५

शेषस्येहोपका रा णां भवाम ऋणिनो वयम् ॥
एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे ॥५२६॥

तज्जीर्णतां यातु म यि यत्त्वयोपकृतं कपे ॥
नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥५२७॥

तस्यांजनातनू ज स्य मौक्तिकं हारमात्मनः॥
उत्तार्य कंठे श्रीरामो बबंध स्वयमादरात् ॥५२८॥

मायामानुषका य स्य नत्वा पादौ पुनःपुनः ॥
जग्मुः स्वं स्वं गृह रक्षःकपयः साश्रुलोचनाः ॥५२९॥

रिमानो राजरा म स्य निदेशात् पुनरागतः ॥
स राममाह राजेन्द्र शृणु विज्ञापनां मम ॥५३०॥

मामाह स प्रभो य-स्त्वामी पुष्पकरावणम् ॥
हत्वा त्वं निर्जितस्तस्मात्त्वमेव राघवम् ॥५३१॥

प्रीतिर्मे परमा रा तो हते तस्मिन् दशानने ॥
कामो ममे म लोकारः कर्तव्यः प्रभुणा तव ॥ ५३२॥

गच्छ रामं वह म नाक् नास्ति कश्चित् व्यतिक्रमः॥
अहमाज्ञापयामि त्वां प्रभुणामोहितो भव ॥ ५३३ ॥

एवमाज्ञाय हं श्री दान् प्राप्याद्य त्वामुपस्थित्
मो राम परमात्मंस्त्वं निर्विशंक प्रतीच्छ माम् ॥५३४॥

पूजयित्वा पुण्य रा श्री रामः प्रीत्या तमब्रवीत् ॥
गच्छ श्रीदान्तिकं शीघ्र त्वमागच्छ स्मृतो यदा ॥५३५॥

नत्वा चकार ग म नं तमनंतयशःप्रदम् ॥
तत् पुष्पकं यक्षराजसमीपमगमत् पुनः ॥ ५३६ ॥

ततोतिभर्त्रं प्र ज या प्राप्तं राज्ये तव प्रभो ॥
इत्येवं भरतः प्राह रामं राजशतोत्तमम् ॥ ५३७ ॥

सर्वप्रजानां प्रि य कृत् राघवः सीतया सह ॥
नंदनप्रतिमाशोकवनेऽथ विजहार सः ॥ ५३८ ॥

अथ गर्भवती रा श्री बभूव जनकात्मजा ॥
तामाह रामः कामस्ते देवि कः क्रियतामिति ॥५३९॥

स्मितं कृत्वा सुता म ह्याः सा श्रीरामं तदाब्रवीत् ॥
तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ ५४० ॥

कामोयमेव रा ज नू मे फलमूलाशिनां सताम् ॥
अप्येकरात्रिं काकुत्स्थ निवसेयं तपोवने ॥ ५४१ ॥

यदान्यकोटिगे य स्तां सीतामाह प्रियः प्रियाम् ॥
विश्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् ॥ ५४२॥

भद्र दूतं सर्व ज नप्रवृत्तिज्ञ रघूत्तमः ॥
पप्रच्छ काः कथा भद्र नगरे विषये च नः ॥५४३॥

मदाश्रितानि न्या य ॥ कानि सीताश्रितान्यपि ॥
वाक्यान्याहुर्जना ब्रूहि मा शंकां कुरु चेतसि ॥५४४॥

वदंति खलु पी गः किं किं वा जानपदा जनाः ॥
अनुजान् वापि मे शूरान् कैकेयीं मातरं स्पृश ॥५४५॥

वक्तव्यतां न रा म ह्या वने राज्ये व्रजन्ति हि ॥
श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभान्यहम् ॥५४६॥

उवाच ॥ स्पशः श्री मन् कथयन्ति शुभाशुभं ॥
दुष्करं कृतवान् रामः समुद्रे सेतुबंधनम् ॥ ५४७ ॥

यश नीता थान रा श्च दुर्धर्षो रावणो हतः ॥
दुराचारेण चौर्येण दशकंठेन या हृता ॥ ५४८ ॥

तामाहृत्य महा म र्षं विसृज्य जनकात्मजाम् ॥
गृहमानीतवान् रामः कथं नाय जुगुप्सते ॥ ५४९ ॥

अस्माकं स्त्रीष्वप्य न त्वं सहनीयं भविष्यति ॥
यथा हि कुरुते राजा वर्तते तमनु प्रजाः ॥ ५५० ॥

एवं रघूत्तम य थाप्रज्ञं बहुविधा गिरः ॥
वदति नगरे राष्ट्रे सर्वलोकेऽखिला जनाः ॥ ५५१ ॥

श्रुत्वा दूतवचो रा जा राघवः परमार्तवत् ॥
उवाच सुहृदस्तत्र भवन्तोपि वदन्त्विति ॥ ५५२ ॥

सर्वेपि शिरसा म ह्यामभिवाद्य नताननाः ॥
प्रत्यूचु राघवं दीनमेवमेतत् न संशयः ॥ ५५३ ॥

विसर्जयामास ज गन्नाथस्तान् सुहृदस्ततः ॥
अनुजान् तूर्णमानाय्य व्याघ्यमाह कृतांजलीन् ॥५५४॥

सीता प्रिया मे प्र य ता दिव्योत्तीर्णा कुलोद्भवा ॥
तथापि पौरास्तां मां च निंदतीति मया श्रुतम् ॥५५५॥

अप्यहं जीवितं ज ह्यां युष्मान् वा पुरुषर्षभाः ॥
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥ ५५६ ॥

अहमिक्ष्वाकुव य जः कीर्यर्थं जीव्यते बुधैः ॥
अस्त्वं लक्ष्मण वाल्मीकेराश्रमे त्यज जानकीं ॥५५७॥

प्रत्याख्यानं त्वया रा ज्ञो न कर्तव्यं विजानता ॥
अप्रीतिर्मे परा वत्स कार्येस्मिन् प्रतिवारिते ॥५५८॥

पूर्वमुक्तोस्मि सु म तेऽनयाहं तापसाश्रमान् ॥
पश्येयमिति तस्याश्च कामोऽतुष्ठीयतामयम् ॥ ५५९ ॥

एवमुक्त्वा थ स श्री मान्वाष्पेण पिहिताननः ॥
तान्विसृज्यानुजान्साश्रुःप्रविवेश स्वमंदिर ॥ ९६० ॥

शापितास्तेन धी रा स्ते पादाभ्यां जीवितेन च ॥
नोचुः किंचन शोकार्ताः केवलं रुरुदुस्तदा ॥९६१॥

धर्म यापारियर म तिर्लक्ष्मणः स्वप्रजावती ॥
मातः प्रोवाच मातस्त्वामहं नेतुं तपोवनं ॥ ९६२ ॥

आज्ञया रघुरा ज स्य प्राप्तोस्म्येष रथस्तव ॥
तच्छ्रुत्वा मुदिता देवी बभूव जनकात्मजा ॥ ९६३ ॥

वस्त्राणि रत्नानि च पादादायारुह्य त रथं ॥
पथि दृष्ट्वा निमित्तानि सीता चिंतान्विताभवत् ॥९६४॥

अब्रवीच्च तदा रा ज्ञी लक्ष्मणं विहितांजलि ॥
अशुभानि बहून्येव पश्यामि रघुनंदन ॥ ९६५ ॥

मनोऽस्वस्थं किंनु म म स्फुरत्यक्ष्यद्य दक्षिण ॥
औत्सुक्यमधृतिश्चापि गात्रोत्कम्पश्च जायते ॥ ९६६ ॥

पश्यामि भूमि वि ज नामिवाद्य पृथुलोचन ॥
अपि स्वस्ति भवेत्तस्मै भ्रात्रे ते भ्रातृवत्सल ॥९६७॥

श्वश्रूणां चैव मे म श्च सुहृद्वर्गोऽस्त वर्तते ॥
अपि सर्वस्य कुशलं जनस्य पुरवासिनः ॥ ९६८ ॥

इति प्रांजलिरा ज न्मशुद्धाचारा महाव्रता ॥
सर्वेषां कुशलार्थं सा देवता अभ्ययाचत ॥ ९६९ ॥

कृतांजलिस्तां प्र य तो नत्वा सौमित्रिरात्मवान् ॥
शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता ॥ ९७० ॥

सा गौतम्यास्तटे रा मा रामारामाऽस्वसन्निशां ॥
सुमंत्रयोजितरथे प्रातः संस्थाप्य मैथिली ॥ ९७१ ॥

ययौ सौमित्रिर म रसवर्ती विश्वपादितां ॥
निरीक्ष्य तामधो दीन प्ररुरोद महास्वनः ॥ ९७२ ॥

तमुवाच तत श्री मद्रामस्य महिषी प्रिया ॥
स्वस्थो भव महाबुद्धे किमर्थं रुद्यते त्वया ॥ ५७३ ॥

हर्षस्य काले वी रा द्य विषादयसि मा कुत ॥
कच्चिद्विनाकृतस्तेन द्विरात्र शोकमागत ॥ ५७४ ॥

प्रियो ममापि सु म ते राघवो जीवितादपि ॥
न चाहमेव शोचामि मैव त्व बालिशो भव ॥ ५७५ ॥

तारयस्वाशु मा ज न्हुकन्या दर्शय तापसान् ॥
ततो मुनिभ्यो वासासि ददाम्याभरणानि च ॥५७६॥

महर्षीणा वीर य था योग्य कृत्वाभिवादनम् ॥
तत्र चैका निशामोष्य यास्यामस्ता पुरीं पुन ॥५७७॥

द्रष्टु राम पुष्क रा क्ष ममापि त्वरते मन॰ ॥
लक्ष्मणस्तद्वच श्रुत्वा प्रमृ्य नयने शुभे ॥ ५७८ ॥

आरुरोह तरिं म न्युमास्तामारोप्य मैथिलीं ॥
सुमन्त्र स्थीयतामाह प्रयाहीति च नाविक ॥ ५७९ ॥

गगातट प्राप्य ज वात्प्राजलि प्राह जानकी ॥
मातर्मे हृदये शल्य महदेतत्सुदु सह ॥ ५८० ॥

कर्मण्यस्मिन्यो ज य ता नियोह प्रभुणा कृत ॥
अकार्य कुर्वतो मातः श्रेयो मरणमद्य मे ॥ ५८१ ॥

प्रसीद त्व सह ज या दययाऽस्यासि शोभने ॥
न मेऽधमर्हसि त्रातु भो मात परवानह ॥ ५८२ ॥

इति प्राजलिरा य चो निपपात क्षितौ रुदन् ॥
त सीतोवाच किमिद नावगच्छामि लक्ष्मण ॥ ५८३ ॥

ब्रूहि न तत्तो रा ज्ञा शापितोसि मयानघ ॥
श्रोतुमिच्छामि हच्छल्यमहमाज्ञापयामि ते, ८४ ॥

एवमुक्त स्त्रिम म ना प्राह प्राजलिरीश्वरी ॥
देवि पौरापवादेन त्यक्तासि प्रभुणा

वक्तु शक्यो न ह श्री मत्यपवादस्त्वग्रत ॥
पितु सखा मे वाल्मीकिर्तसयत्राश्रमे प्रभु ॥५८६॥

पादच्छाया तयो रा शेल्पागम्गस्य समुने ॥
उपवासपरैकाग्रा वस ल ननका मने ॥ ५८७ ॥

व्रतमास्थाय वि म ल राम कृत्वा सदा हृदि ॥
श्रेयस्ते परम देवि तथा कृता भविष्यति ॥ ५८८ ॥

श्रु वा ननकरा ज स्व सुता तदैवरोदित ॥
पर विपादमागम्य निपपात धरातले ॥ ५८९ ॥

सज्ञामवाप्य प य ता रिग्न्वाप भृश तदा ॥
धात्रा मम तनुर्नून सृष्टा दु खाय लक्ष्मण ॥ ५९० ॥

यस्यास्तया दु ख रा शिर्दारुणोऽद्य प्रदृश्यते ॥
याह शुद्धसमाचारा मुक्ता नृपतिना सती ॥५९१॥

पाप कृत्वा किनु म ह कोवा दारैर्वियोजित ॥
कि नु वक्ष्यामि मुनिषु कर्म त्यागोचित कृतम् ॥५९

न खल्वद्यैवात्र ज ले जान्हव्या जीवित निज ॥
त्यजेय राजवशो मे भर्तुर्मयि रघूत्तम ॥ ५९३ ॥

आज्ञा कर्तु साधु य त त्यज मा दु खभागिना ॥
श्वश्रूणा चरणौ नत्वा कुशल ब्रूहि पार्थिव ॥ ५९४ ॥

वक्तव्यश्च स रा ज न्यश्रेष्ठो भर्ता महायशा ॥
अपवादभयात्त्यक्ता त्वयाहमुचित कृतम् ॥ ५९५ ॥

सद्वृत्तिर्भ्रातृषु य था पौरेष्वपि तथास्तु ते ॥
सदेह नानुशोचामि देवो मे धुर्गुह पति ॥ ५९६ ॥

प्राणैरपि प्रिय रा जन् भर्तु कार्य स्त्रिया सदा ॥
तस्मादह न शोचामि सुयशास्त्व सुखी भव ॥५९७॥

इति मद्वचसा म ह्या वक्तव्य स प तिस्त्वया ॥
निरीक्ष्य मामद्य गच्छ त्वमृतुकालातिवर्तिनी ॥५९८॥

तमुवाच ततः श्री मद्रामस्य महिषी प्रिया ॥
स्वस्थो भव महाबुद्धे किमर्थं रुद्यते त्वया ॥ ५७३ ॥

हर्षस्य काले वी रा द्य विषादयसि मा कुतः ॥
कच्चिद्विनाकृतस्तेन चिराद्य शोकमागतः ॥ ५७४ ॥

प्रियो ममापि सु म ते राघवो जीवितादपि ॥
न चाहमेव शोचामि नैव त्वं बालिशो भव ॥ ५७५ ॥

तारयस्वाशु मां ज न्हुकन्यां दर्शय तापसान् ॥
ततो मुनिभ्यो वासांसि ददाम्याभरणानि च ॥५७६॥

महर्षीणां वीर य था योग्यं कृत्वाभिवादनम् ॥
तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥५७७॥

द्रष्टुं राम पुष्क रा क्ष ममापि त्वरते मनः ॥
लक्ष्मणस्तद्वचः श्रुत्वा प्रमृज्य नयने शुभे ॥ ५७८ ॥

आरुरोह तरिं म न्युमांस्तामारोप्य मैथिलीं ॥
सुमंत्र स्थीयतामाह प्रयाहीति च नाविकं ॥ ५७९ ॥

गंगातटं प्राप्य ज वात्प्रांजलिः प्राह जानकीं ॥
मातर्मे हृदये शल्यं महदेतत्सुदु सह ॥ ५८० ॥

कर्मण्यस्मिन्यो ज य ता नियोह प्रभुणा कृतः ॥
अकार्यं कुर्वतो मातः श्रेयो मरणमद्य मे ॥ ५८१ ॥

प्रसीद त्वं सह ज या दययाख्यासि शोभने ॥
न मेऽधमर्हसि ज्ञातुं भो मातः परवानहं ॥ ५८२ ॥

इति प्रांजलिरा य तो निपपात क्षितौ रुदन् ॥
तं सीतोवाच किमिदं नावगच्छामि लक्ष्मण ॥ ५८३ ॥

ब्रूहि त्वं तत्वतो रा ज्ञा शापितोसि मयानघ ॥
श्रोतुमिच्छामि यच्छल्यमहमाज्ञापयामि ते ॥ ५८४ ॥

एवमुक्तः स्विन्न म नाः प्राह प्रांजलिरीश्वरीं ॥
देवि पौरापवादेन सक्तासि प्रभुणा वने ॥ ५८५ ॥

वक्तुं शक्यो न स श्री मन्यपवादस्त्वयाग्रतः ॥
पितुः सखा मे वाल्मीकिर्वसयत्राश्रमे प्रभुः ॥९८६॥

पादच्छायां तपो रा शेरुपागम्यास्य सन्मुनेः ॥
उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ ९८७ ॥

व्रतमास्थाय त्रि म ले रामं कृत्वा सदा हृदि ॥
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ ९८८ ॥

श्रुत्वा जनकरा ज स्य सुता तदैवरोदित ॥
परं विषादमागम्य निपपात धरातले ॥ ९८९ ॥

संज्ञामवाप्य म य ता विललाप भृशं तदा ॥
धात्रा मम तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ॥ ९९० ॥

यस्यास्तथा दुःख रा शिर्दारुणोऽद्य प्रदृश्यते ॥
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥९९१॥

पापं कृत्वा किंनु म हत्कोवा दारैर्वियोजितः ॥
किंनु वक्ष्यामि मुनिषु कर्म चागोचितं कृतम् ॥९९२॥

न खल्वद्यैवात्र ज ले जान्हव्या जीवितं निजं ॥
त्यजेयं, राजवंशो मे भर्तुर्मीय रघूत्तम ॥ ९९३ ॥

आज्ञां कर्तुं साधु य त त्यज मां दुःखभागिनीं ॥
श्वश्रूणां चरणौ नत्वा कुशलं ब्रूहि पार्थिवं ॥ ९९४ ।

वक्तव्यश्च स रा ज न्यश्रेष्ठो भर्ता महायशाः ॥
अपवादभयात्त्यक्ता त्वयाहमुचितं कृतम् ॥ ९९५ ॥

सहृद्भिर्भ्रातृषु य था पौरेष्वापि तथास्तु ते ॥
स्वदेहं नानुशोचामि देवो बन्धुर्गुरुः पतिः ॥ ९९६ ॥

प्राणैरपि प्रियं रा जन् भर्तुः कार्यं स्त्रिया सदा ॥
तस्मादहं न शोचामि सुयशास्त्वं सुखी भव ॥९९७॥

इति मद्वचसा म ह्या वक्तव्यः स पतिस्त्वया ॥
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीं ॥९९८॥

शोकध्यानमुल—श्री—कः शिरसास्पृश्य मेदिनीं ॥
प्रदक्षिण च तां कृत्वा व्याहर्तुं न शशाक सः॥५९९॥

ध्यात्वा मुहूर्तं तां ग ञः माह रामानुजो रुदन् ॥
किं मां निरीक्ष्य गच्छेति त्वं वदस्यद्य शोभने ॥६००॥

रूपं दृष्टं नहि म या पादौ दृष्टौ तवानघे ॥
कथं त्वामद्य पश्यामि रामेण रहितां वने ॥ ६०१ ॥

इत्युक्त्वा तामग्र ज स्य प्रियां नत्वा रुदन् पुनः ॥
नावा गंगां समुत्तीर्य रथमध्यारुहद्द्रुतम् ॥६०२ ॥

शोकाकुलः स प्र य धावनायामिव तां सतीं ॥
परतीरस्थितां दृष्ट्वा परावृत्य मुहुर्मुहुः ॥ ६०३ ॥

दृष्ट्वा मुनिकुमा रा स्तां रुदतीं जानकीं वने ॥
प्राद्रवन् यत्र भगवान् वाल्मीकिस्तपसांनिधिः ॥६०४॥

ते कन्वैवाशु न म नं मुनिपुत्रा महर्षये ॥
सर्वे निवेदयामासुस्तस्यास्तु रुदितस्वनं ॥ ६०५ ॥

भगवन्मुनिरा ज स्त्री कस्याप्येषा महात्मनः ॥
श्रीरिवादृष्टपूर्वात्र रौति त्रायस्व पश्यतां ॥ ६०६ ॥

स ज्ञात्वा ज्ञानन य नः प्राद्रवद्यत्र मैथिली ॥
अर्घ्यमादाय रुचिरं जान्हवीतीरमागमत् ॥ ६०७ ॥

दृष्ट्वा सीतां स द्वि ज न्मश्रेष्ठो वाल्मीकिरब्रवीत् ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ॥ ६०८ ॥

जनकस्यात्मजा च त्वाद्रष्टव्या सत्यधीश्वरी ॥
वत्से जानकि धर्मज्ञे स्वागतं ते पतिव्रते ॥ ६०९ ॥

तां सीतां शोकभा रा र्तां वाल्मीकिर्मुनिपुंगवः ॥
उवाच मधुरां वाणीं ल्हादयन्निव तेजसा ॥ ६१० ॥

वृत्तं तवैतत्सु म ते विदितं मम तत्त्वतः ॥
सर्वं च दिव्यज्ञानेन त्रैलोक्ये यद्धि वर्तते ॥ ६११ ॥

मुनिपत्न्योऽत्र सु श्रो काः सुव्रतास्तपसि स्थिताः ॥
तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः ॥६१२॥

त्वामपापां वेद्मि रा ज्ञि ध्यानलब्धेन चक्षुषा ॥
विश्रब्धा भव वत्से मत्समीपे निवत्स्यसि ॥६१३॥

वचस्तदाकर्ण्य म हं प्राप्ता परममद्भुतं ॥
सीता नत्वा मुनेः पादौ तथेत्याह कृतांजलिः ॥६१४॥

सीता प्रयान्तं द्वि-ज-पं प्रांजलिः पृष्ठतोऽन्वगात् ॥
तापस्यस्तं नमश्चक्रुस्ताः स वाल्मीकिरब्रवीत् ॥६१५॥

राजा दशरथो य-स्या स्नुषेयं तस्य सुव्रता ॥
रामस्य महिषी सीता जनकस्यात्मजा सती ॥६१६॥

इयं त्यक्ता सती रा ज्ञा परिपाल्या मया सदा ॥
इमां भवत्यः पश्यन्तु स्नेहेन वचनान्मम ॥६१७॥

मुहुर्मुहुः प्राभ्य-म-हास्तां ताभ्यः प्रदाय सः ॥
रामाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥६१८॥

उटकुटे स्थितां जन्हुकन्यायां मुनिना सतीं ॥
दृष्ट्वा प्रवेशितां मन्ये स्वाश्रमे लक्ष्मणस्तदा ॥६१९॥

अब्रवीत्तत्का य रतं सुमंत्रं मंत्रसारथिं ॥
सीतावियोगजं तापं पश्य रामस्य सारथे ॥ ६२० ॥

योहि देवान्सभु ज गान् गंधर्वासुरराक्षसान् ॥
निहन्याद्राघवः क्रुद्धः सदैवं पर्युपासते ॥ ६२१ ॥

ईदृशस्मिन् कर्मणि च शोकनाशके समनुष्ठिते ॥
प्राप्तः सुमंत्र रामेण को नु धर्मपरिग्रहः ॥ ६२२॥

सुमंत्रः प्राह तं रा मानुजं शोकाकुलं भृशं ॥
न संतापस्त्वया कार्यो दृष्टमेतत्पुरातनैः ॥ ६२३ ॥

भृगुशापकृतं म न्ये प्राप्तं रामेण विष्णुना ॥
तस्य पत्नी हतानेन यत्पुरा भयदा द्विषां ॥ ६२४ ॥

वसिष्ठस्याश्रम श्रो मान् दुर्वासा मम सन्निधौ ॥
पुरा दशरथायैत कथयामास लक्ष्मण ॥६२५॥

त्वयापि विरह रा जा प्राप्स्यत्येत कथचन ॥
भरतेनैव वक्तव्य शत्रुघ्नेऽपि च लक्ष्मण ॥६२६॥

भृगुशापादय म र्त्यलोके ज मासवाप्रभु
रहस्य कथित तुभ्य सीतात्यागार्तिभेषज ॥६२७॥

नृलोके चक्रिणो ज न्म जात हतु दशानन ।
इति श्रुत्वाथ सौमित्रिस्तामयोध्या जगाम स ॥६२८॥

ततस्तस्योदगा प स्य साश्रुनेत्रस्य लक्ष्मण ।
जग्राह चरणौ पश्चाद्वाक्यमेतदुवाच स ॥६२९॥

त्यक्त्वा देवी त्वद्वि रा ह वाल्मीकेराश्रमे शुभ ॥
पुनरप्यागतो वीर पादमूलमुपासितु ॥६३०॥

मा शुच सत्कृत म ते कालस्य गतिरीदृशी ।
त्वद्विधा नहि शोचति बुद्धिमतो मनस्विन ॥६३१॥

यदर्थं मैथिल्ल ज निस्यक्ता शोक न मुचत ॥
सोपवाद पुरे राजन् भविष्यति न सशय ॥६३२॥

तमाह रामो नि य त हितमुक्त त्वयानघ ॥
मया सीतावियोगोत्थ स्वसतापो निराकृत ॥६३३॥

राजकार्यं मया ज स्व कर्तव्य तदकुर्वत ॥
निष्फला मम सौमित्रे चत्वारो दिवसा गता ॥६३४॥

पौरकार्याणि यो प चो न करोति दिने दिने ॥
सवृते नरके घोरे पतित स भवद् ध्रुव ॥६३५॥

नृगेण हि पुरा रा ज्ञा कोटी स्पर्शयता गवा ॥
गौ सगादागतान्यस्य दत्तान्यस्मै द्विजन्मने ॥६३६॥

विवदतौ तौ स म न्यु गोस्वामिग्राहकावुभौ ॥
नृगद्वारे स्थितौ प्राप्तौ न प्रवेश चिर द्विजौ ॥६३७॥

ताभ्यां शप्तो नृपा श्रीमान् कृकलासो भवेति सः ॥
निर्दिष्टो यादवः कृष्ण उद्धर्ता विष्णुरीश्वरः ॥६३८

अद्यापि शापं तं ग जा भुंक्ते व स सुदारुणं ॥
कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते ॥६३९॥

इक्ष्वाकुतनयो म क्षाः पतिर्निमिरुदारधीः ॥
वसिष्ठेन पुरा शप्तो निमिनापि स लक्ष्मण ॥ ६४० ।

मित्रावरुणते ज स्तस्माविशेति चतुर्मुखः ॥
वसिष्ठमुक्तवान्देवो विदेहः स तथाऽकरोत् ॥ ६४१ ।

उर्वशीहेतुतो य स्तु मित्रावरुणतेजसा ॥
पूर्णः कुंभस्ततो जातो वसिष्ठोऽगस्त्य एवच ॥६४२ ।

प्रतीक्षा न कृता रा ज्ञा सत्रे यस्मात्पुरोधसः ॥
तेनापराधेन निमिः शप्तस्तेन महात्मना ॥ ६४३ ॥

स निमिः साधुर म राम्ब्रोवाच वरदांस्तदा ॥
नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥ ६४४ ॥

तदुक्तमेनम ज राः प्रत्योचुस्त निमिं नृपं ॥
नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥ ६४५ ॥

मथितस्तस्य का य स्तैस्तत्सन्तानार्थिभिर्द्विजैः ॥
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः ॥ ६४६ ॥

नाम्ना मिथिः स रा ज न्यो मथनाद्रघुनन्दन ॥
जननाज्जनको जातो वैदेहो यद्विदेहजः ॥ ६४७ ॥

ययातिर्न समो य स्माद्देवयान्यां स भूपतिः ॥
शप्तः शुक्रेण सौमित्रे जरां प्राप सुदुःसहां ॥६४८॥

एवं रामो सह रा पः कथयामास सत्कथाः ॥
श्रोतृकर्णोरस्यहरन्त्यायकर्ता मनोज्ञयाः ॥ ६४९ ॥

अथागता भये म ग्ना मुनयो यमुनाश्रिताः ॥
संपूज्य रामस्तान्कार्यं पप्रच्छ प्राञ्जलिः प्रभुः ॥६५०॥

विप्राः प्रोचुर्मधुः श्री मान्दैत्यो भक्तोऽम्बिकापतेः ॥
शूलं शूलाद्विनिष्कृष्य तस्मै दत्तं स्मरारिणा ॥६५१॥
तत्पुत्रो लवणो रा जन् बाधते शूलतेजसा ॥
तं शूलरहितं हत्वा ब्राह्मणांस्त्रातुमर्हसि ॥ ६५२ ॥
अभिषिच्यामसा म र्थ्यं शत्रुघ्नं तैर्द्विजैस्सह ॥
राघवः प्रेषयामास लवणं हन्तुमोजसा ॥ ६५३ ॥
रामादमोघम् ज तस्संभूतं शरमद्भुतं ॥
प्राप्य प्रणम्य तं प्रायाच्छत्रुघ्नस्सेनया वृतः ॥६५४॥
पुण्यकीर्तेराल य स्य वाल्मीकेराश्रमेऽवसत् ॥
तत्र कल्माषपादस्य ■ मुनेरशृणोत्कथां ॥ ६५५ ॥
यस्यां स राघवो रा त्रौ पर्णशालां समाविशत् ॥
तस्यां सीताप्यर्धरात्रे सुषुवे दारकद्वयं ॥ ६५६ ॥
प्रसूतौ पुण्यस म ये बालचन्द्रसमप्रभौ ॥
दृष्टौ वाल्मीकिना प्रीत्या मार्जितौ तौ कुशैर्लवैः॥६५७॥
वाल्मीकिर्द्विजरा ज स्तं कुश इत्याह यः कुशैः॥
पुत्रः संमार्जितो ज्येष्ठो लवं च प्रोक्षितं लवैः ॥६५८॥
अर्धरात्रे सोन्व य स्य वृद्धिं श्रुत्वा प्रभोर्मुदा ॥
पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत् ६५९॥
प्रजावत्याः पुत्र ज न्मप्रहृष्टो लक्ष्मणानुजः ॥
मुनिं प्रांजलिरापृच्छ्य प्रय यौ यमुनातटम् ॥ ६६० ॥
इक्ष्वाकोरन्ववा य स्य भूषणं यो महायशाः ॥
स मान्धाता हतो येन लवणेन दुरात्मना ॥ ६६१ ॥
इति शुश्राव स रा त्रमप्रभवाख्यस्तटे मुने ॥
च्यवनात्स सुमित्राया नन्दनो विस्तरात्कथां ॥ ६६२ ॥
ततः प्रभाते स म र्थो निर्गतः स्वपुरात्सुतः ॥
भक्ष्यमाहर्तुमटवीं गतो [illegible] ॥ ६६३ ॥

ज्ञात्वा तदैव स श्रीमान् गृहीतवरकार्मुकः ॥
उत्तीर्य यमुनां तूर्णं तस्थौ द्वारि मधोः पुरः ॥६६४॥

प्राप्तेर्धे दिन आ रा त्स क्रूरकर्मा मधोः सुतः ॥
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ६६५ ॥

ददर्श लवणो म द्यमांसमत्तः स राघवं ॥
तमाह किमनेन त्वमायुधेन करिष्यसि ॥ ६६६ ॥

ईदृशानां मया ज न्ये सायुधानां नराधम ॥
भक्षितानि सहस्राणि कालेनानुगतो ह्यसि ॥६६७॥

श्रुत्वा वचो निर्भ य स्य हसतश्च मुहुर्मुहुः ॥
शत्रुघ्नः कुपितः प्राह भ्राता रामस्य धीमतः ॥६६८॥

शत्रुघ्नोऽहं भूतु रा रे वधाकांक्षी तवागतः ॥
द्वंद्वयुद्धं देहि मत्तो न त्वं जीवन् गमिष्यसि ॥६६९॥

तच्छ्रुत्वा लवणो म त्तस्तमाह प्रहसन्मुहुः ॥
दिष्ट्या प्राप्तोसि मद त्वं भ्राता मन्मातुलद्विषः ॥६७०॥

जन्यकामस्य ते ज न्यमहं दास्यामि दुर्मते ॥
मुहूर्तं तिष्ठ तावत्त्वं यावदायुधमानये ॥ ६७१ ॥

तमाह राघवो य त्तः क्व मे जीवन् गमिष्यसि ॥
स्वयमेवागतः शत्रुर्न मोक्तव्यः कृतात्मना ॥ ६७२ ॥

तल्लक्ष्मणस्यानु ज स्य वचः श्रुत्वा स राक्षसः ॥
क्रोधमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६७३ ॥

तं ब्रुवाणं तथा य त्तद्विजघ्नं घोरदर्शनम् ॥
शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत् ॥ ६७४ ॥

शत्रुघ्नो न तदा रा ते जातो भूपा हता यदा ॥
तदद्य मद्बाणहतो व्रज त्वं यमसादनम् ॥ ६७५ ॥

सर्वे दृष्टा भूम्य म रास्त्वां मया निहतं रणे ॥
पश्यंतु रक्षोपसद त्रिदशा इव रावणम् ॥ ६७६ ॥

पदैव प्राह स श्रो मांशुशुभे ऽतितरामरिः ॥
चिक्षेप वृक्षांच्छत्रुघ्नः शरैस्तां शतधाच्छिनत् ॥६७७॥

ततोन्श्यागमद्दा रा स सतांगो मूर्छितोऽभवत् ॥
तमवज्ञाय तु हत शत्रुघ्नं भुवि पातितम् ॥६७८॥

रक्षो लब्धान्तर म पि न विवेश स्वमालयम् ॥
नापि शूलं प्रजग्राह तान् भक्ष्यान् समुदाहरत् ॥६७९॥

लब्धसंज्ञः स ते अ स्त्रिमवरस्त महाशरम् ॥
वज्रानन वज्रवेग जग्राहामोघमद्भुतम् ॥ ६८० ॥

तस्मिन् धृते प्रल य ज्वलनप्रतिमे शरे ॥
भीतान् सुरर्षीनभयं ददौ देवः पितामहः ॥ ६८१ ॥

संधाय बाणं सा रा-ख्यं विकृष्य धनुराश्रुति ॥
शत्रुघ्नः स महातेजा मुमोच लवणोरसि ॥ ६८२ ॥

सायकोऽतुलसा म-र्थ्यो विदार्यारेरुरस्तदा ॥
गत्वा रसातलं हस्त पुनरेवागमद् द्रुतम् ॥ ६८३ ॥

निर्भिन्नवक्षा र ज नीचरः स लवणः खलः ॥
पपात सहसा भूमौ वज्राहत इवाचलः ॥ ६८४ ॥

तच्छूलं तन्निल य तः समुत्पत्य महाप्रभं ॥
पश्यतां सर्वदेवानां रुद्रस्य वशमागतम् ॥ ६८५ ॥

पूजितः प्रातभि अ यः शत्रुघ्नः स महार्षभे ॥
शक्रादिभिश्च त्रिदशैर्लवणे दुर्जये हते ॥ ६८६ ॥

सुरास्तमूचुः प्र य त वरं वरय सुव्रत ॥
तान् प्रत्युवाच शत्रुघ्नो बद्धाञ्जलिपुटस्तदा ॥६८७॥

पुरीयं मधुरा रा जधानी त्व प्नुयादिति ॥
वरयामास ते प्रीताः सर्वे प्रोचुस्तथास्त्विति ॥६८८ ॥

ततो निवेश्य सु म ना राजधानीं मनोहरां ॥
जगाम द्वादशे वर्षे द्रष्टुं रामं चिरोषितः ॥६८९॥

वाल्मीकेराश्रमे श्री मानवरात्तेन पूजितः ॥
शुश्राव रामचरितं गायतोस्तत्कुमारयो. ॥६९०॥
श्रुत्वा रामयशो रा गो विनज्ञो बाष्पलोचनः ॥
मुहूर्तमात्रमभवद्विनिश्वस्य मुहुर्मुहुः ॥६९१॥
आश्चर्ये सैनिका म मा: शत्रुघ्नमिदमब्रुवन् ॥
अद्भुतं किमिदं राजन् वाल्मीकिं पृच्छ तत्त्वतः ॥६९२
स तानाहाश्रमे ऽ त्र स्युः सदाश्चर्याण्यनेकशः ॥
अद्भुतोऽर्थः परिप्रष्टुं न क्षमोऽस्माकमीदृशः ॥६९३॥
अलब्धनिद्रः प्र य तः प्रातर्नत्वा मुनीश्वरम् ॥
अयोध्यामगमद्रामं नत्वाऽभूद्धर्षनिर्भरः ॥६९४॥
स उषित्वा सप्त रा त्रमाज्ञप्तः प्रभुणा पुनः ॥
जगाम मधुरां भव्यां राजधानीं मनोरमाम् ॥६९५
ततः कदाचिद्दि म ना मृतमादाय बालकम् ॥
वृद्धो जानपदो विप्रो राजद्वारमुपागमत् ॥६९६॥
चक्रे विलापं रा ज रन् पुत्रशोकाकुलो भृशम् ॥
नाहं पापी मृतोऽसि त्वं बालदोषेण भूपतेः ॥६९७
राम बालं जीव- य मे नो चेद्द्वार्यत्र निश्चितम् ॥
सदारोऽहं मरिष्यामि ब्रह्महत्यां लभस्वहि ॥ ६९८
न दृष्टो न श्रुतो ज न्मी मृतः कश्चन कुत्रचित् ॥
तवैव राज्येऽभिनवं मयैतदनुभूयते ॥ ६९९ ॥
एवं पुत्रस्याय-य-तः शोकाक्रान्तो द्विजोऽब्रवीत् ॥
ततोऽप्यतितमां रामो दुःखं प्राप सतां गतिः ॥७००
वसिष्ठं तपसां रा शिं वामदेवं च नारदम् ॥
मार्कंडेयं मुनीनन्यान् प्रांजलिः प्राह राघवः ॥७०१।
वृद्धो मृतात्मजो म मः शोके जानपदो द्विजः ॥
रुद्ध्वा द्वारं स्थितः कार्यं भगवन्तो वदाथ किम् ॥७०२

तच्छ्रुत्वा नारद श्री मानुवाच रघुनंदन ॥
मन्ये तप्यति शूद्रोद्य तेन बालवधो ह्ययम् ॥७०३॥

तस्मात् स्वदेश त्व रा जन् मृगयाद्य निवारय ॥
भविष्यत्येव धर्मेण विप्रबालस्य जीवनम् ॥ ७०४ ॥

नारदस्यामृत म य श्रुत्वा वाक्य रघूत्तम. ॥
महर्षमतुलं लेभे लक्ष्मण चेदमब्रवीत् ॥ ७०५ ॥

गच्छाश्वर्णे त्व द्वि ज स्य समाश्वासय सौम्य तम् ॥
बालस्य च शरीर तत् तैलद्रोण्या निधापय ॥ ७०६ ॥

एव संदिश्य त य त्समाज्ञासपादनेऽनुजम् ॥
मनसा पुष्पक दध्यौ आगच्छेति महायशाः ॥७०७॥

तद्विज्ञायेंगित रा म. पुष्पको हेमभूषितः ॥
आजगाम मुहूर्तेन समीप सेवनादृत ॥ ७०८ ॥

सोऽब्रवीत् प्रणतो म ह्या नाथायमहमाज्ञया ॥
वश्यस्तव महाबाहो किंकर समुपस्थितः ॥ ७०९ ॥

त्वा महर्षीन् रा ज र्षि विमानमधिरुह्य स ॥
प्रतीचीमुत्तरा पूर्वां विचिन्वन् दक्षिणा ययौ ॥७१०॥

शैवलस्य सरो य त्नाददपश्यत् पार्श्व उत्तरे ॥
विंध्यस्य दक्षिणे भागे स्वादर्शतलनिर्मलम् ॥७११॥

तत्र कौसल्यात्म ज निरतप्यत सुमहत्तपः ॥
ददर्श तापस वृक्षे लबमानमधोमुखम् ॥ ७१२ ॥

तमाह करुणा म स्त्व धन्यस्तापस सुव्रत ॥
कोसि जात्या कस्तपोऽर्थो ब्रूह्येतत् सत्यवाग्भव ॥७१३॥

त्वीन् सौवाकृशि रा स्त राम सत्यपराक्रमम् ॥
शूद्र शम्बूकनामाह स्वर्गार्थं देव मे तप. ॥ ७१४ ॥

तच्छ्रुत्वैवासिम म ल कोशान्निष्कृष्य दारुणम् ॥
तस्मान्तस्य शूद्रस्य शिरश्चिच्छेद राघव ॥ ७१५ ॥

सेंद्रा देवास्तदा श्री शं शशंसुः साधुसाधिति ॥
पुष्पवृष्टिमुचः प्रोचुर्वरं वरय राघव ॥ ७१६ ॥
प्रोवाच प्रांजली रा जा द्विजपुत्रः स जीवतु ॥
त ऊचुः पतिते शूद्रे द्विजपुत्रः स उत्थितः ॥७१७॥
अगस्त्यं प्रति या य त्वं द्रष्टुमागच्छ तं मुनिम् ॥
तस्य दीक्षा समाप्ताद्य वर्षं हि द्वादशं गतम् ॥७१८॥
सदा स्थितोऽभूत् स ज ले द्रष्टव्यः सुमहातपाः ॥
इत्युक्त्वा ते सुरा जग्मुर्द्रष्टुं रामोपि कुंभजम् ॥ ७१९॥
दृष्ट्वा सुरास्तं प्र य युः स्वर्गं रामस्ततो गतः ॥
तं सत्कृत्य मुनिः प्रीत्या प्रशशंसासकृत् प्रभुम् ॥७२०॥
राम त्वमसि ना रा णामयन् धर्मपालक ॥
त्वया धर्मेण विप्रस्य जीवनं प्रापितः सुतः ॥७२१॥
उषित्वा रजनी म त्र श्वः पुरीं गन्तुमर्हसि ॥
इदं गृह ण वलय निर्मितं विश्वकर्मणा ॥ ७२२ ॥
तद् गृहीत्वा कुंभ ज स्य प्रियकृत् रघुनंदनः ॥
पप्रच्छ भ ता प्राप्तं कुतो वा केन वा हृतम् ॥७२३॥
सोऽब्रवीदद्भुत-प-शाः शतयोजनविस्तृते ॥
वनेऽपश्यं सरो राम प्रसन्नं योजनायतम् ॥ ७२४॥
रम्यं शवं च रा ज न् मे दृष्ट्वाभूद् विस्मयो महान् ॥
अथापश्य व्योमयानं स्वर्गिणं तत्र भास्वरम् ॥ ७२५॥
तं शवं पन्नग-प-न्नो भक्षयामास सोऽतिरम् ॥
तमपृच्छमहं कस्त्वं देवसंकाश ईदृशः ॥ ७२६ ॥
यथा नाथो निर्ज रा णां गंधर्वाप्सरसां मतः ॥
आहारो गर्हितोऽतीव किमर्थं वक्तुमर्हसि ॥७२७॥
स प्रांजलिः प्राह म भ ब्रह्मन् वृत्तमिदं शृणु ॥
वैदर्भः श्वेतनामाहं सुदेवो मत्पिता मुने ॥ ७२८ ॥

आश्रमोय मम श्री मन्नत तप्तं मया तपः ॥
त्रीणि वर्षसहस्राणि ब्रह्मलोकमहं गतः ॥७२९॥

क्षुत्तृट् च सत्तपो रा शे पीडयामास तत्र मां ॥
सत्यलोके महापुण्ये क्षुत्पिपासाविवर्जिते ॥ ७३० ॥

ब्रह्माणमवदं म त्र्यमिव मां भगवन् कुतः ॥
क्षुत्तृट् च बाधतेऽत्रापि देवभूतं तपोबलात् ॥ ७३१॥

ब्रूह्येतत्तृदययाऽ ज त्वं पाकोयं कस्य कर्मणः ॥
आहारः कथमेऽत्यंतं क्षुधितस्य जगत्पते ॥ ७३२ ॥

ब्रह्माह मां भक्ष य त्वं श्वेतस्वकल्यमन्वहम् ॥
देहमेव निजं पुष्टं न दत्तं किमपि त्वया ॥ ७३३ ॥

देहस्ते व्यवहा रा र्थं भविष्यति पुनःपुनः ॥
गर्हितात् कर्मणोऽस्मात्त्वामगस्त्यो मोचयिष्यते ॥७३४

अगस्त्यं त्वामहं म न्ये नान्यस्मात्त गतिर्मुने ॥
इदं गृहाणाभरणं प्रसादं कर्तुमर्हसि ॥ ७३५ ॥

इदं तावन्मुनेऽ ज स्त्रं सुवर्णं धनमंबरम् ॥
भक्ष्यं भोज्यं च ब्रह्मर्षे ददात्याभरणानि च ॥७३६॥

गृहीत्वैतत्तार य मामिति श्रुत्वैव तद्गिरम् ॥
मया गृहीत वलयं मुक्तः कृच्छ्रात् स तत्क्षणात् ॥७३७

शक्रतुल्येन रा ज न् मे दिव्यमाभरणं स्वयम् ॥
अस्मिन्निमित्ते श्वेतेन दत्तमद्भुतदर्शनम् ॥७३८॥

श्रुत्वा विचित्रं भू प स्तं मुनिं पप्रच्छ राघवः ॥
यत् प्रविष्टो वनं श्वेतः कथं तदमृगद्विजम् ॥७३९॥

मुनिराह पुरा रा जा दण्ड इक्ष्वाकुनंदनः
ददर्श शुक्रस्य सुतां रूपेणाप्रतिमां भुवि ॥७४०॥

धर्षयामास तां म चो विरजां गुरुनंदिनीम् ॥
कृत्वैतद्दारुणं कर्म मधुमंतं पुर गतः ॥७४१॥

तच्छ्रुत्वा भार्गवः श्री मान् विरजायाः प्रधर्षणम् ॥
क्रुद्धः शशाप तं चंडं दंडं न विजितेंद्रियम् ॥७४२॥

पांसुवर्षं सप्त रा त्राच्छक्रात् प्रादुर्भविष्यति ॥
निष्प्रशैवाल्पमर्घ्यस्य विषयस्य विनाशनम् ॥ ७४३ ॥

वधं प्राप्स्यत्यसौ म त्तः सपुत्रबलवाहनः ॥
शापं श्रुत्वाऽश्रमं त्यक्त्वा विषयांते गतो जनः ७४४॥

त्यक्त्वाश्रमं मुनि स्ने ने गतेय विरजां कविः ॥
अब्रवीदाश्रमेनैव वस त्वं सुसमाहिता ॥ ७४५ ॥

त्वत्समीपे निर्भ य ता प्राणिनां वसतां सदा ॥
इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत् ॥ ७४६ ॥

दंडस्य विषयो रा त्री दुर्मतेस्तस्य राघव ॥
सप्ताहाद्भस्मतां भूतो यथोक्तं ब्रह्मवादिना ॥७४७।

देशो भार्गवसा म र्थ्यादभवन्निर्मृगद्विजः ॥
ततःप्रभृति काकुत्स्थ दंडकारण्यमुच्यते ॥ ७४८ ॥

तपस्विवासाच्च ज नस्थानं नाम्नाभवत् प्रभो ॥
एवं श्रुत्वा मुनिं नत्वा श्रीरामः स्वपुरं ययौ ॥७४९॥

विमानं पुष्पकं म क्षभर्तुरंतिकमेव सः ॥
पुनः संप्रेषयामास संपूज्य रघुवल्लभः ॥ ७५० ॥

भरतं लक्ष्मणं रा ममप्रभृत्यालमतानुगम् ॥
रामोऽपृच्छद्राजसूयं कर्तुं मंत्रविनिश्चयम् ॥ ७५१॥

तं प्रभुं राजसू य स्य क्रियां कर्तुं समुत्सुकम् ॥
प्रांजलिर्दर्शयन् दोषं तोषं दातुं महामतिः ॥ ७५२॥

प्रोवाच भरतो रा जसूयाद्बहुनृपक्षयः ॥
भविष्यति दयालोऽस्ते ऽयुक्ताभिप्रायकृत् सुधीः॥७५३॥

अश्वमेधं कुरु म नो मनोरन्वयभूषण ॥
इत्याह लक्ष्मणो रामं कामं सर्वसतां मनम् ॥ ७५४ ॥

